# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




४८ वर्षे
१-२ अङ्कौ

ज्येष्ठ-भाद्रपदपूर्णिमे
जून–सितम्बर, १९९३ ई०

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकः

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

अनुसन्धानसंस्थाननिदेशकः

उप-सम्पादकः

**डॉ० हरिश्चन्द्रमणित्रिपाठी**

प्रकाशनाधिकारी




४८ वर्षे

१-२ अङ्कौ

वार्षिकं मूल्यम्—१०० रूप्यकाणि

जून-सितम्बर, १९९३ ई०



प्रकाशकः —
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

मुद्रकः —
विजय-प्रेस,
सरसौली, भोजूबीर
वाराणसी

प्राप्तिस्थानम्—
विक्रय-विभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१ ००२

# प्रास्ताविकम्

सरस्वतीसमर्चकैः समर्च्यमानेयं 'सारस्वती सुषमा' नाम विश्वविद्यालयानुसन्धानपत्रिका संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनाय सम्प्रवृत्तेति नाविदितं विदितवेदितव्यानां लब्धवर्णानाम् । अनुसन्धानप्रधानानां निबन्धानां प्रणयनविधौ तावत् तद्विषयकग्रन्थजातमवमृश्य तद्गतन्यूनतासंपरिपूर्तये विषयपरिप्लवनाय च तत्स्रोतस्कं वाङ्मयमवगाह्य तत्र तद्विलक्षणमपि किमपि समुपन्यसनीयं भवति प्रातिस्विकम् । पिष्टपेषणदोषापनुत्तये प्रकाशिताप्रकाशितं साद्यस्कं वाङ्मयं बाढमनुशीलनीयं भवति । सम्पादन-समालोचनादिशि प्रवृत्तये तु तत्तद्राद्धान्ता भवन्ति तावत् परिशीलनीयाः ।

स्वप्रवर्तनायाः सप्तचत्वारिंशं हायनं परिपूर्य साम्प्रतमष्टचत्वारिंशे चरणमर्पयन्त्याः सुषमाया अस्याः संहितमिदमङ्कयुग्मं सप्तनिबन्धैर्लघुग्रन्थेनैकेन च समलङ्कृतं नूनं समावर्जयिष्यति विपश्चिदपश्चिमानां चेतांसीति चिन्तना । इह वैयाकरणशिरोमणीनां पण्डितप्रवराणां श्रीमद्रामप्रसादत्रिपाठिमहोदयानां 'कतिपयपाणिनीयसूत्रमीमांसा' इति निबन्धमाला पूर्वतः प्रवर्तमाना साम्प्रतमपि जागरूका तद्विषयजिज्ञासूनामुद्गाढमुपकारिका प्रकाशमियर्ति । प्राचीनानां ग्रन्थकृतां व्याख्याकृतां चानुसन्धानसरणेरिदं निदर्शनमनुसन्धायकानामनुसन्धित्सूनां च महते ज्ञानभावाय सेत्स्यति ।

ओझोपाह्वश्रीगिरिधरमहोदयानां 'वैयाकरणभूषणे धात्वर्थनिरूपणप्रकाशः' इति द्वितीयो निबन्धोऽपि प्राक्तननिबन्धकोटिमेवाटीकते । ऋग्वेदेतरवैदिकवाङ्मयेषु व्युत्पत्तिचिन्तनमित्याख्ये तृतीये निबन्धे डॉ० ओङ्कारनाथतिवारिमहोदयः प्राचीनानां कोविदानां व्युत्पत्तिपद्यामुद्धरन्नाधुनिक्या तुलनात्मकदृशा किमपि प्रातिस्विकमपि समुपन्यसितुं प्रायतत । अतिगभीरं खलु शब्दनिर्वचनसमीक्षणमर्थविज्ञानपरीक्षणं च । तुरीये निबन्धे प्रो० आद्याप्रसादमिश्रमहोदयेन विश्लेषणविधया हेतुकरणयोरर्थभेदनिरूपणे साधु व्यवसितं भर्तृहरेर्वाक्यपदीयं विवृण्वता । डॉ० देवेन्द्रनाथत्रिपाठिमहोदयेन चिराच्चर्चितं 'ब्राह्मणभागस्यापि वेदत्वम्' इति निबन्धं सन्दृभता ब्राह्मणभागस्यापि वेदत्वसिषाधयिषया पूर्वाचार्यमतान्याश्रित्य प्रयत्तम् । षष्ठे 'वेदानामपौरुषेयत्वम्' इत्यभिधे निबन्धे डॉ० वृजकिशोरत्रिपाठिमहोदयः प्राचीनाचार्याणामेव सरणिमवलम्ब्य व्यवारीद् विषयजातम् । सप्तमस्तावल्लेखो विलसति 'शक्तिस्वरूपविमर्शः' श्रीशिवजी-उपाध्यायमहोदयविभावितः । इह स्वोपज्ञव्याख्यापरिलसिताभिः कारिकाभिर्दार्शनिक्या दृशा न्यरूपि शक्तिस्वरूपं कविप्रवरेण श्रीमदुपाध्यायमहोदयेन ।

लघुग्रन्थतया विन्यस्तस्य क्वचिदप्रकाशितस्य प्राच्यविद्याविलसितप्राचीनस्य कस्यचिद्धस्तलेखस्य सुषमायां प्रत्यग्रत्वमुपादीयेतेति मनीषयेह प्रकाश्यते रघुनाथदेवन्यायालङ्कारभट्टाचार्यविरचितः पक्षतावादो नाम हस्तलेखो डॉ० राजारामशुक्लमहोदयसम्पादितः सम्पादन-समालोचनादृगुन्मीलनशीलनः । समेषामेव सुरगवीरत्नविचयभावनाविभावितान्तःकरणानामयमङ्को भवेन्मुदे निर्भरमिति विभावयति

माघपूर्णिमायां
२०५२ वैक्रमाब्दे

भागीरथप्रसादत्रिपाठी
'वागीशः शास्त्री'

## विषयानुक्रमणी





# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ४८ वर्षे | ज्येष्ठ-भाद्रपदपूर्णिमे, वि० सं० २०५० | १-२ अङ्कौ |
|---|---|---|

## कतिपयपाणिनीयसूत्रमीमांसा*

आचार्यश्रीरामप्रसादत्रिपाठी

व्याकरण-योगतन्त्रागमविभागाध्यक्षचरः,

वेदवेदाङ्गसंकायाध्यक्षचरश्च,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी

❁❁❁

### [शेषात् कर्तरि परस्मैपदम्—अष्टा० १।३।७८]

आत्मनेपदनिमित्तहीनाद्धातोर्विहितस्य लस्य स्थाने तिबाद्यादेशाश्चेत्, तर्हि परस्मैपदसंज्ञका एव, इति नियमाकारः। एवमेव—'स्वरितञितः कर्त्रभिप्राये क्रियाफले'[1] इत्यस्यापि तादृशनियमपरत्वमेव। तथा हि—स्वरितेतो ञितश्च धातोर्विहितस्य लस्य स्थाने तिबाद्यादेशाः स्युः, तर्हि कर्त्रभिप्राये क्रियाफले द्योत्ये आत्मनेपदसंज्ञका एव। परगामिनि क्रियाफले द्योत्ये तु परस्मैपदसंज्ञका एव। एवं चास्योभयपदनियामकता। एवमेवान्येषामपि परस्मैपदविधायकानामुभयपदविधायकानां वा नियमपरत्वं द्रष्टव्यम्।

यदि तु समेषामात्मनेपदविधायकसूत्राणामुद्देश्यताऽवच्छेदकधर्ममन्यतमत्वेनादायेदमुच्यते—

---

* निबन्धोऽयं "सारस्वती सुषमायाः" षट्चत्वारिंशद्वर्षीयतृतीयचतुर्थाङ्कतः क्रमशः प्रचलन्नस्ति।

१. अष्टा० १।३।७२।

धातोर्लस्य स्थाने स्यादात्मनेपदम्, तर्हि अस्मादन्यतमत्वावच्छिन्नादेव, नान्यस्मात्। एषा च परिसंख्यात्मकनियमपरता बोध्या। तत्र हि––तत्तद्धातुव्यक्तित्वम्, तस्योद्देश्यताऽवच्छेदकम्, तद्व्यापकं रूपं सकलात्मनेपदविधायकसूत्रीयोद्देश्यताऽवच्छेदकान्यतमम्। नियम्यं सूत्रम्—"तिप्तस्झि⋯⋯"[1] इत्यादि, तदीयोद्देश्यताऽवच्छेदकं रूपं धातुत्वम्। तद्व्याप्यं च रूपं सकलात्मनेपदविधायकसूत्रीयोद्देश्यताऽवच्छेदकाऽन्यतमम्। तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यसूत्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने संकोचे कृते सति—ईदृशाऽन्यतमावच्छिन्नाद् धातोर्लस्य स्थाने आत्मनेपदं चेत्तर्हि तद्धातुव्यक्तेरेव, इत्येवं स्वरूपं प्रसज्येत, ततश्चेष्टव्यावृत्तिप्रसक्त्या महदनिष्ट मापतिष्यति।

इत्येवं बहुशः कृतेऽपि प्रयत्ने परिसंख्यारूपो नियमो न सम्भवत्येषु—इति विभाव्यताम्।

## [गोत्राद्यून्यस्त्रियाम्—अष्टा० ४।१।९४]

परिसंख्यात्मकनियमार्थमिदं सूत्रम्। तथा हि -अपत्यं पितुरेव स्यादिति पक्षे चतुर्थापत्यरूपे यूनि विवक्षिते 'गोत्राद्यूनि' इति नियमसूत्रे सत्यसति च गोत्रप्रत्ययान्तादेव युवप्रत्यय इति द्वयोः निबन्धोऽयं परम्परा, सा चेष्टत्वान्न नियमेन व्यावर्त्यते। पञ्चमे तु यूनि नियमाभावे त्रयाणां परम्परा प्रसज्यते, षष्ठे चतुर्णामित्यादि। 'ततः प्राचामपि' इति द्वितीयमुख्यपक्षे तु गर्गाच्चतुर्थे यूनि मूलप्रकृत्यनन्तराभ्यामनिष्टोत्पत्तिः प्रसक्ता भवति, पञ्चमे तु मूलप्रकृत्यनन्तरयुवभ्यः। तथा नडाच्चतुर्थे यूनि पूर्ववद् द्वाभ्यामनिष्टोत्पत्तिः, पञ्चमे तु त्रिभ्यः।

उपगोश्चतुर्थे विवक्षिते तु मूलप्रकृतेरेकस्मादेवानिष्टोत्पत्तिः, न त्वनन्तरापत्यवाचकात्। ततो जातेऽप्यत इञि अनिष्टरूपाभावात्—इत्येवं यथासम्भवं बोध्यम्।

अयमत्र निष्कर्षः—असत्यस्मिन् सूत्रे मुख्यमते पञ्चमादौ यूनि विवक्षिते गोत्रप्रत्ययान्ताद् युवप्रत्ययोत्पत्तौ इष्टे सिद्धेऽपि मूलप्रकृत्यनन्तरयुवभ्याऽपि स्यादिति पाक्षिकानिष्टप्राप्तौ नियमार्थमिदमिति।

अदसीयोद्देश्यताऽवच्छेदकं रूपं तु गोत्रप्रत्ययान्ततदादित्वम्। तद्व्यापकं रूपं तु मूलप्रकृत्यनन्तरगोत्रयुवप्रत्ययान्ततदादित्वम्। नियम्यानि सूत्राणि तु 'तस्यापत्यम्',[2] 'अत इञ्'[3], 'गर्गादिभ्यो यञ्'[4] इत्यादीन्यपत्याधिकारोक्तानि सर्वाणि, तेषामुद्देश्यताऽवच्छेदकरूपाण्यन्यतमत्वेन पृथक् पृथक् च गृहीत्वा व्यवस्थाप्यानि।

---

१. अष्टा० ३।४।७८; २. तत्रैव—४।१।९२।
३. तत्रैव—४।१।९५; ४. तत्रैव—४।१।१०५।

यथा तस्यापत्यमित्यस्य तु मूलप्रकृत्यनन्तरगोत्रयुवप्रत्ययान्ततदाद्यन्यतमत्वम्। एवमेव 'अत इञ्'[1] 'बाह्वादिभ्यश्च,[2] 'सुधातुरकङ् च'[3] इत्येतेषामपत्यसामान्ये प्रत्ययविधायकानाम्। 'गोत्रे कुञ्जादिभ्यश्च्फञ्'[4] इत्यतो गोत्रे इति पदं यावत्सु सूत्रेष्वनुवर्तते, तावतामुद्देश्यताऽवच्छेदकं तु पितुरेवापत्यमिति पक्षे मूलप्रकृत्यनन्तरापत्यान्यतरवृत्तिरूपम्। द्वितीये पक्षे तु मूलप्रकृतिवृत्तिरूपमेव। 'शिवादिभ्योऽण्'[5] इत्यतः सूत्राद् गोत्रे इत्यस्य निवृत्तौ तु पुनः अपत्यसामान्येऽर्थे प्रत्ययो विधीयते, न तूत्तरसूत्रेण। एवं च तत्तत्सूत्रेभ्यः प्रथमे पक्षेऽनन्तरापत्ये वाच्ये मूलप्रकृतिरेवोद्देश्यतया ग्राह्या, गोत्रापत्ये वाच्ये मूलप्रकृतितोऽनन्तरापत्ये प्रत्ययं विधाय तदन्तं तदादि उद्देश्यतया गृहीत्वा तृतीये गोत्रापत्ये प्रत्ययः कर्तव्यो भविष्यति, चतुर्थे यूनि वाच्ये तु गोत्रप्रत्ययान्तमुद्दिश्य प्रत्ययविधानं भविष्यति। पञ्चमे यूनि पुनः युवप्रत्ययान्तमुद्दश्यं स्यादित्यनिष्टपरम्पराप्रसक्तिः।

द्वितीये पक्षे तु मूलात् तृतीये इष्टे सिद्धेऽपि मध्येऽनन्तरापत्येऽपि प्रत्ययप्रसङ्गः स्यादेवेति। अत्र पक्षेऽपि अनिष्टपरम्परा स्यादेव।

भवतु नाम—एषां समेषामुद्देश्यताऽवच्छेदकं रूपमेकमनुगमकं भवितुं नार्हति।

यतो हि कतिपयसूत्राणि अपत्यसामान्ये प्रत्ययविधायकानि। कानिचित्तु गोत्रापत्ये प्रत्ययविधायकानि। अतश्चापत्यसामान्ये विधायकानां यद्यपि मूलप्रकृत्यन्तरापत्यगोत्रापत्ययुवापत्यप्रत्ययान्ततदाद्यन्यतमत्वमुद्देश्यताऽवच्छेदकतया वक्तुं शक्यम्, तथापि गोत्रापत्यार्थकप्रत्ययविधायकानां तु तत्र भेद एव। तेषां तु मूलप्रकृतिवृत्तिधर्मः, तत्सहितानन्तरापत्यप्रत्ययान्तवृत्तिश्च धर्मः—इत्युभयमपि तत्त्वेन ग्राह्यं स्यात्। अन्यतमत्वेन ग्रहणे विशेषणविशेष्यभावव्यत्यासे तु गौरवं स्यात्, अतस्तत्तत्प्रकृतिभेदेनोद्देश्यभेदमुद्देश्यताऽवच्छेदकभेदं च गृहीत्वा तद्व्याप्यो धर्म उक्तान्यतमत्वरूपो ग्राह्यः। समुदायवृत्तिधर्मस्य व्यापकोऽवयववृत्तिधर्मो भवत्येवेति।

## [शास इदङ्हलोः—अष्टा० ६।४।३४]

अत्र सूत्रे 'अनिदितां हल उपधायाः क्ङिति'[6] इति सूत्रत 'उपधायाः क्ङिति' इति पदमनुवर्त्य हल्ग्रहणं चाकृत्वा 'शास इत्', 'अङि' इति योगद्वयं विधाय भगवता भाष्यकृता इत्थं व्याख्यातम्।

शास उपधाया इकारादेशो भवतु किति ङिति च प्रत्यये परे, इति प्रथमयोगस्यार्थः। ततः 'अङि' इति द्वितीयो योगः। तत्र शास, इत्, उपधाया इति च पदत्रयमनुवर्त्य शास उपधाया इकारादेशः स्यादङि परे, इत्यर्थः सम्पन्नः। एवं च 'अङि'

---

१. अष्टा० ४।१।९५;        २. तत्रैव—४।१।९६ ;        ३. तत्रैव—४।१।९७।
४. तत्रैव—४।१।९८;        ५. तत्रैव—४।१।११२ ;        ६. तत्रैव—६।४।२४।

इति योग इदानीं व्यर्थः सञ्जातः। शास इदिति प्रथमेनैव योगेन सिद्धत्वात्। अतश्चास्य नियामकता सम्पन्ना। नियमाकारस्तत्र विमृश्यते—'अङि' इति नियामकं शास्त्रम्, तदोयोद्देश्यताऽवच्छेदको धर्मः—अङव्यवहितपूर्वत्वविशिष्टशास्धातुसम्बन्ध्युपधाभूतवर्णत्वम् ( तादृशाकारत्वम् ), तद्व्यापको धर्मः—अजादिक्ङिदव्यवहितपूर्वत्वविशिष्टशास्धातुसम्बन्ध्युपधाभूतवर्णत्वम् ( तादृशाकारत्वम् ), नियम्यं शास्त्रम्—शास इदिति शास्त्रम्, तदोयोद्देश्यताऽवच्छेदको धर्मः—कित्ङित्प्रत्ययाव्यवहितपूर्वत्वविशिष्टशास्धातुसम्बन्ध्युपधाभूतवर्णत्वम्, तद्व्याप्यो धर्मः—अजादिक्ङिदव्यवहितपूर्वत्वविशिष्टशास्धातुसम्बन्ध्युपधाभूतवर्णत्वम् ( तादृशाकारत्वम् ), एतद्धर्माऽवच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने शास इदित्येतदीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने क्ङित्प्रत्ययाव्यवहितपूर्वत्वविशिष्टशास्धातुसम्बन्ध्युपधाभूतवर्णत्वाऽवच्छिन्ने संकोचे कृते सति—

अजादिक्ङिदव्यवहितपूर्वशास्धातुसम्बन्ध्युपधाभूतवर्णत्वाऽवच्छिन्नस्य आकारस्येकारादेशश्चेत्, तर्हि अङव्यवहितपूर्वशास्धातुघटकोपधाभूतवर्णस्यैवेति नियमाकारः सम्पद्यते। तत्फलं च शास्धातोः कर्तरि शतरि 'शासत्', लटि लोटि प्रथमपुरुषबहुवचनादौ शासति, शासतु इत्यादौ इकारादेशाभावः। एवं च हल्ग्रहणमत्र 'शास इदङ्हलोः' इति सूत्रे प्रत्याख्यातं भगवता भाष्यकृता।

'प्रत्ययलोपे प्रत्ययलक्षणम्'[1] इति सूत्रस्य व्याख्यावसरे शब्दरत्नकृतोक्तम्—'शास इत्, अङि' अजादौ क्ङिति चेत्, तर्हि अङ्येवेति नियमेनाजादिव्यावृत्तौ तत्र हल्ग्रहणाकरणेन मित्रशीरित्यस्य सिद्धिरेवमन्यत्रापीति भावः। तत्तु फलितार्थकथनपरतयानेयम्।

अथवा—अङ्त्वमपि अपर्याप्त्या उद्देश्यताऽवच्छेदकम्; तद्व्यापको धर्मः—अजादिक्ङित्प्रत्ययत्वम्। नियम्यशास्त्रीयोद्देश्यताऽवच्छेदको धर्मः -क्ङित्प्रत्ययत्वम्, तद्व्यापको धर्मः—अजादिक्ङित्प्रत्ययत्वम्। अयमेव मध्यपाती धर्मः, एतद्धर्मावच्छिन्नातिरिक्तत्वेन क्ङित्प्रत्ययत्वाऽवच्छिन्ने संकोचेन—अजादौ क्ङिति चेत्, तर्हि अङ्येवेति नियमस्वरूपं फलत्येव लाघवेनेति।

## [ तस्मान्नुड्द्विहलः —अष्टा० ७।४।७१ ]

द्विहलो धातोर्दीर्घीभूतादकारात् परस्य नुट् स्यात्। आनर्द, आनर्दतुः, आनर्दुः। इतः पूर्वम्—'अत आदेः'[2] इति सूत्रं वर्तते तत्सर्वमनुवर्तते। 'अत्र लोपोऽभ्यासस्य'[3] इति सूत्रतोऽभ्यासस्येति पदमनुवर्तते। 'दीर्घ इणः किति'[4] इत्यतो दीर्घ इति पदं चानुवर्तते।

१. अष्टा० १।१।६२; २. तत्रैव—७।४।७०, ३. तत्रैव—७।२।८; ४. तत्रैव—७।४।६९।

एवं चाभ्यासस्यादेरतो दीर्घः स्यादित्यर्थः सम्पन्नः। तदनन्तरं 'तस्मान्नुड्द्विहलः' इति सूत्रमस्ति। तत्र तस्मादित्यनेन दीर्घीभूतोऽकारः परामृश्यते। एवं च—द्विहल्धातुरूपाङ्गस्य दीर्घीभूतादकारात् परस्य नुडागमः स्यादित्यर्थः सम्पद्यते।

तत्रोद्देश्यताऽवच्छेदको धर्मः—द्विहल्धातुरूपाङ्गघटकदीर्घीभूताकारावधिकपरत्वविशिष्टोत्तरखण्डत्वम्।

तदनु—'अश्नोतेश्च'[1] इति सूत्रमस्ति, तत्र पूर्वसूत्रात् तस्मादिति पदमनुवर्तते, नुडिति च। अत्र लोपोऽभ्यासस्येत्यतः अभ्यासस्येति पदमप्यनुवर्तते। अङ्गस्येत्यधिकारोऽस्ति। एवं च—अश्धातुरूपाङ्गावयवदीर्घाभ्यासावर्णात् परस्य उत्तरभागस्य नुडित्यर्थः सम्पद्यते।

तत्र भगवता भाष्यकृतोच्यते—'तस्मान्नुड्द्विहलः' इत्यत्र द्विहल्ग्रहणं न कर्तव्यम्। एवं तर्हि—एकहलोऽपि धातोर्दीर्घीभूतादकारात् परस्य नुड् भविष्यतीति चेत्, तन्न, अश्नोतेश्चेति नियमार्थं भविष्यति। एकहलश्चेत् तर्हि अश्नोतेरेवेति। अयमाशयः—अश्नोतेश्चेति नियामकम्, पूर्वसूत्रेण नुटः सिद्धत्वात्। एतदीयमुद्देश्यताऽवच्छेदकम्—अश्धातुरूपाङ्गावयवदीर्घीभूताकारावधिकपरत्वविशिष्टोत्तरखण्डत्वम्। अपर्याप्त्या तु अश्धातुत्वमपि।

तद्व्यापको धर्मः—एकहल्धातुत्वम्, भाष्यरीत्या अवर्णोपधत्वं वा। नियम्यं शास्त्रम्—तस्मान्नुडिति। तदुद्देश्यताऽवच्छेदको धर्मः—धातुरूपाङ्गावयवदीर्घीभूताऽकारावधिकपरत्वविशिष्टोत्तरखण्डत्वम्, अपर्याप्त्या धातुरूपाङ्गत्वमपि, तद्व्याप्यो धर्मः—एकहल्धातुत्वम्। भाष्यरीत्या अवर्णोपधत्वं वा, एवं च—एकहलश्चेत्, तर्हि अश्नोतेरेवेति नियमाकारः फलति, तत्फलं च—'आट, आटतुः' इत्यादौ न नुट्।

## ( ब्रह्मभ्रूणवृत्रेषु क्विप्—अष्टा० ३।२।८७ )

अत्र सिद्धान्तकौमुदी—एषु कर्मसूपपदेषु हन्तेर्भूते क्विप् स्यात्। ब्रह्महा, भ्रूणहा, वृत्रहा।

'क्विप् च'[2] इत्येव सिद्धे नियमार्थमिदम्। ब्रह्मादिष्वेव, हन्तेरेव, भूत एव, क्विबेवेति चतुर्विधोऽत्र नियम इति काशिका। ब्रह्मादिष्वेव, क्विबेवेति द्विविधो नियम इति भाष्यमिति।

अयमाशयः—क्विप् चेति सूत्रं नियम्यसूत्रम्। तत्र 'धातोः'[3] इत्यस्याधिकारः, 'सुपि स्थः'[4] इत्यतः सुपि इत्यस्यानुवृत्तिः, 'कर्तरि कृत्'[5] इत्यतः कर्तरि इत्यस्य च लाभः।

---

१. अष्टा० ६।४।७२;  २. तत्रैव—३।२।७६;  ३. तत्रैव—३।१।९१।
४ तत्रैव—३।२।४;  ५. तत्रैव—३।४।६७।

एवं च—सुबन्ते तदादौ उपपदे सति तत्तद्धातोः कर्तरि क्विप्प्रत्ययः स्यादिति सूत्रार्थः सम्पद्यते।

ब्रह्मभ्रूणवृत्रेषु क्विबिति सूत्रं नियामकम्, क्विप् चेत्यनेन सिद्धत्वात्। तथा हि—अत्र सूत्रे 'कर्मणि हनः'[1] इति सम्पूर्णं सूत्रमनुवर्तते, 'धातो'रित्यस्याधिकारः, 'भूते'[2] इत्यस्य च, 'कर्तरि कृदि'त्यतः कर्तरि इत्यस्य लाभः। एवं च—कर्मार्थकब्रह्मादिरूपप्रातिपदिकप्रकृतिकसुबन्ततदादावुपपदे सति भूतकालावच्छिन्नक्रियावाचकहन्धातोः कर्तरि क्विप्प्रत्ययः स्यादिति सूत्रार्थः सम्पद्यते। ब्रह्माणं हतवानिति विग्रहे ब्रह्महा, भ्रूणं हतवान् भ्रूणहा, वृत्रं हतवान् वृत्रहा इति।

'क्विप् चे'ति सामान्यसूत्रेणैव क्विपः सिद्धत्वादेतत्सूत्रं व्यर्थं सन्नियामकमित्युच्यते। अदसोयमुद्देश्यताऽवच्छेदकं रूपम्—कर्मवाचकब्रह्मादिप्रातिपदिकप्रकृतिकसुबन्ततदाद्युपपदकभूतकालिकक्रियावाचकहन्धातुत्वम्। तद्व्यापकं रूपम्—कर्मवाचकसुबन्तोपपदकभूतकालिकक्रियावाचकहन्धातुत्वम्।

'क्विप् चे'ति नियम्यसूत्रस्योद्देश्यताऽवच्छेदकं रूपम्—सुबन्ततदाद्युपपदकधातुत्वम्। तद्व्याप्यं च रूपम्—कर्मवाचकसुबन्तोपपदकभूतकालिकक्रियावाचकहन्धातुत्वम्। इदमेव मध्यपातिरूपम्। एतद्रूपाऽवच्छिन्नातिरिक्तत्वेन क्विप् चेति सूत्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति—कर्मवाचकसुबन्ततदाद्युपपदकभूतकालिकक्रियावाचकहन्धातोः कर्तरि क्विप्प्रत्ययश्चेत्, तर्हि ब्रह्मादिरूपकर्मवाचकप्रातिपदिकप्रकृतिकसुबन्ततदाद्युपपदकभूतकालिकक्रियावाचकाद् हन्धातोरेवेति नियामकसूत्रस्यार्थः सम्पन्नः। अतश्च पितृव्यं हतवानिति विग्रहे हन्तेः क्विप् न भवति; अपि तु णिनिरेवेति 'पितृव्यघाती' इत्येव भवति।

एष च परिसंख्यारूपो नियमः, उद्देश्यदले एवकारान्वयेन विधेयस्य नियमनात्।

यदि तु 'कर्मणि हनः' इत्यनेन णिनेरपि प्राप्तत्वात् क्विपो विकल्पप्राप्तौ नियामकत्वमायात्यस्य सूत्रस्य। तदा तु कर्मवाचकप्रातिपदिकप्रकृतिकभूतकालिकक्रियावाचकहन्धातोः कर्तरि चेत् प्रत्ययस्तर्हि क्विबेवेति सूत्रार्थः सम्पद्यते। तत्फलं च ब्रह्म हतवानिति विग्रहे 'कर्मणि हनः' इति णिनिर्न भवति। एवं च कर्मणि द्वितीयेतिवत्[3] द्विविधो नियमः फलति। एष च द्वितीयो नियमो न परिसंख्यारूपः; अपि तु पाक्षिके सति नियमः। एतच्च भाष्यमतम्।

काशिकारीत्या तु चतुर्विधो नियमः। तस्यायमाशयः—परिसंख्यापक्षे मध्यपातिरूपं त्रिविधं भवितुमर्हति, तत्रैकं तूक्तमेव। द्वितीयं तु ब्रह्मादिरूपकर्मवाचकसुबन्तोपपदकहन्धातुत्वम्। तृतीयं तु ब्रह्माद्युपपदकभूतकालिकक्रियावाचकधातुत्वम्। तत्र द्वितीयस्य स्वरूपम्—ब्रह्मादिरूपकर्मवाचकप्रातिपदिकप्रकृतिकसुबन्तोपपदकाद्

१. अष्टा० ३।२।८६; २. तत्रैव—३।२।८४; ३. तत्रैव—२।३।२।

हन्तेश्चेत् क्विप्, तर्हि ब्रह्मादिरूपकर्मवाचकप्रातिपदिकप्रकृतिकसुबन्तोपपदकभूतकालिकक्रियावाचकाद् हन्तेरेवेति, तेन ब्रह्म हन्ति, हनिष्यति वा इत्यादौ क्विप् न भवति। पुरुषं हतवानिति पुरुषहा इत्यपि न भवति प्रथमनियमेनैव व्यावृत्तत्वात्। तृतीयस्य स्वरूपं तु—ब्रह्माद्युपपदकभूतकालिकक्रियावाचकाद् धातोश्चेत् क्विप्प्रत्ययस्तर्हि ब्रह्मादिप्रकृतिकसुबन्तोपपदकभूतकालिकक्रियावाचकाद् हन्तेरेवेति। तेन ब्रह्म जितवानिति विग्रहे क्विबभावे ब्रह्मजिदिति प्रयोगो न भवति। ब्रह्म जयति, जेष्यति वा ब्रह्मजिदिति तु भवत्येव।

भगवता भाष्यकारेण तु—धातु-कालबोधकशब्दौ तु प्रकृतसूत्रे न श्रुतौ, किन्तु प्रकरणलक्षणजघन्यप्रमाणेन प्राप्तौ, अतस्तयोरेवोपरोधो न्याय्यः, न तूपपदप्रत्यययोः, श्रुत्या उपस्थापितत्वात्। एवं न्यायोपष्टब्धेन भाष्येण सह विरोधात् काशिकामतमुपेक्ष्यमिति कैयटे स्थितम्।

श्रीहरदत्तमिश्रेण पदमञ्जर्यामुक्तम्—धातूपपदविषयकं नियमद्वयं भाष्ये प्रदर्शितमिति, तत्र धातुकालविषये इति वक्तव्ये उपपदग्रहणं प्रामादिकमेवेत्यवधातव्यम्।

एवं च भाष्यदृष्टया द्विविधनियमस्य यत्फलम्—पुरुषं हन्ति, हनिष्यति वा पुरुषहा इति भवति, पुरुषं हतवान् पुरुषहा इति न भवति। एवमेव 'पितृव्यघाती' इति भवति; ब्रह्मघाती इति न भवति।

काशिकावृत्तौ—हन्तेरेवेत्यस्य फलं तु वृत्रं जयति जेष्यति वा वृत्रजिदिति क्विप्प्रत्ययो भवत्येव, 'वृत्रं जितवान्' इति विग्रहे तु वृत्रजिदिति न भवति। भूत एव क्विबित्यस्य फलं तु पुरुषं हतवान् 'पुरुषहा' इत्यस्याभावः। पुरुषं हन्ति, हनिष्यति वा पुरुषहा इति प्रयोगो भवत्येव क्विबन्तः।

अत्र तत्त्वबोधिनीकृता इत्थं व्याख्यातम्—

चतुर्विध इति। अयमाशयः—इह सूत्रे श्रुतत्वात् पूर्वं ब्रह्मादय उद्देश्यास्ततोऽनन्तरं प्रकृतित्वाद् हन्तिस्ततः परिशेषाद् भूते इति। क्विप् तु सर्वान्ते निर्देष्टव्यः, विधेयत्वात्। तदेवं वचनव्यक्तिः।

ब्रह्मादिषूपपदेषु हन्तेर्भूते क्विप् इति। एवं स्थिते यत्रैवकारस्ततोऽन्यत्र नियम इति न्यायेन नियमोऽत्र भवन्ननन्तरो भवति। ततश्च ब्रह्मादिष्वेवेत्यवधारणे हन्तेस्तदनन्तरं निर्दिष्टत्वाद् उपपदान्तरनिवृत्तिसम्बन्धनिवृत्तिफलो नियमो भवति। ब्रह्मादिषु हन्तेरेव भूते—इत्यवधारणे त्वनन्तरत्वाद् विशेषेऽपि प्राथम्यादुपपदनियमो धात्वन्तरनिवृत्तिफलकः। ब्रह्मादिषु हन्तेर्भूत एव क्विप्—इत्यवधारणे तु क्विब्हन्त्योरानन्तर्येऽविशिष्टेऽपि प्राधान्यात् कालान्तरनिवृत्तिफलकः प्रत्ययनियमः।

ब्रह्मादिषु हन्तेर्भूते क्विबेवेति वचनव्यक्तौ प्रत्ययान्तरसम्बन्धनिवृत्तिफलकः कालनियमः। सोऽयं प्रकृत्युपपदप्रत्ययकालनियमानां विवेकः।

अगृह्यमाणविशेषस्तु चतुर्विधस्यापीह ग्रहणम् । तत्र ब्रह्मादिष्वेव हन्तेरिति प्रकृतिनियमे भूते इत्याश्रयणाद् वर्तमानकाले भविष्यत्काले चोपपदान्तरेऽपि भवत्येव। पुरुषं हन्ति हनिष्यति वा पुरुषहा, 'अरिहयोऽरिहयोगविचक्षणः' अरीन् हन्ति अरिहा, स चासौ योगश्च अरिहयोगः, तत्र विचक्षण इत्यर्थः। प्रकृतिनियमफलं तु पुरुष हतवान् पुरुषहा इति भूतार्थे प्रयोगाभावः ।

ब्रह्मादिषु हन्तेरेवेत्युपपदनियमेऽपि भूते इत्याश्रयणाद् वर्तमानभविष्यत्कालयोर्धात्वन्तरादपि भवत्येव। वृत्रं जयति जेष्यति वा वृत्रजिदिति । उपपदनियमफलं तु वृत्रं जितवान् वृत्रजिदिति प्रयोगाभावः ।

भूत एव क्विबिति प्रत्ययनियमेऽपि ब्रह्मादिषु इत्युक्तेरुपपदान्तरे वर्तमानभविष्यत्कालयोर्हन्तेः क्विब् भवत्येव। पुरुषं हन्ति हनिष्यति वा पुरुषहा, अरिहा इति प्राग्वत् । प्रत्ययनियमफलं तु ब्रह्माणं हन्ति ब्रह्महा इति प्रयोगाभावः । भूते क्विबेवेति कालनियमेऽपि ब्रह्मादिषु इत्युक्तेरुपपदान्तरे भूतेऽपि प्रत्ययान्तरं भवत्येव। पितृव्यं हतवान् पितृव्यघाती, इह 'कर्मणि हनः'[1] इति भूते णिनिर्भवत्येव ।

कालनियमफलं तु ब्रह्माणं हतवान् ब्रह्मघाती इति प्रयोगाभावः। सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते, निष्ठा तु भवत्येव, वृत्रं हतवानिति ।

## [सुकर्मपापमन्त्रपुण्येषु कृञः —अष्टा० ३।२।८९]

सौ कर्मादिषु च कृञः क्विप् स्यात्। क्विप् चेत्येव[2] सिद्धे इदमपि सूत्रं नियमार्थम्। तत्र च काशिकाकृन्मतेऽत्र त्रिविधो नियमः, तत्र क्विबेवेति नियमाद् मन्त्रं कृतवानिति विग्रहे कर्मणि अण्प्रत्ययो न भवति ; अपि तु क्विबेवेति मन्त्रकृदित्येव, न तु मन्त्रकार इति। एवमेव कृञ एवेति नियमाद् मन्त्रमधीतवानिति विग्रहे मन्त्राध्याय इति अणेव भवति, न तु क्विप् ।

भूत एवेति नियमाद् मन्त्रं करोति करिष्यति वा इति विग्रहे क्विब् न भवति। स्वादिष्विति नियमादन्यस्मिन्नप्युपपदे क्विप्—शास्त्रकृत्, भाष्यकृत् ।

भाष्यरीत्या त्वत्रापि द्विविध एव नियमः। तथा हि श्रुतानुमितयोः श्रुतसम्बन्धो बलीयानिति नियमेन स्वादिष्वेव, कृञ एवेति नियमद्वैविध्यमिति भावः।

तत्रादसोयोद्देश्यताऽवच्छेदकरूपम्—स्वाद्युपपदकभूतकालिकक्रियावाचककृञ्धातुत्वम्। तद्व्यापकं रूपम्—यत्किञ्चिदुपपदकभूतकालिकक्रियावाचककृञ्धातुत्वम्। क्विप् चेत्यस्योद्देश्यताऽवच्छेदकं रूपम्—सुबन्तोपपदधातुवृत्तिधातुत्वम्। तद्व्याप्यं रूपम्—यत्किञ्चिदुपपदकभूत कालिकक्रियावाचककृञ्धातुत्वम्। इदमेव मध्यपातिरूपम् ।

---

१. अष्टा० ३।२।८६; २. तत्रैव--३।२।७६ ।

एतद्रूपाऽवच्छिन्नातिरिक्तत्वेन क्विप् चेत्येतदीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति यत्किञ्चिदुपपदकभूतकालिकक्रियावाचककृञ्धातोश्चेत् क्विप्प्रत्ययस्तर्हि सुकर्माद्युपपदकभूतकालिकक्रियावाचककृञ्धातोरेवेति नियमस्वरूपं फलितं भवति। तेन मन्त्रं कृतवान् मन्त्रकृदिति भवति, शास्त्रं कृतवान् शास्त्रकृदिति न भवति।

एवमेव—स्वाद्युपपदकभूतकालिकक्रियावाचकधातुत्वमपि मध्यपातिरूपं सम्भाव्यते। ततश्च तद्रूपाऽवच्छिन्नातिरिक्तत्वेन क्विप् चेत्येतदीयोद्देश्यताऽवच्छेदकावच्छिन्ने सङ्कोचे कृते सति स्वाद्युपपदकभूतकालिकक्रियावाचकधातोश्चेत् क्विप्प्रत्ययस्तर्हि तादृशात् कृञ एवेति नियमस्वरूपं प्रतिफलति, ततश्च मन्त्रमधीतवान् मन्त्राध्याय इत्यत्र न क्विप्, अपि तु अणेव।

भाष्यमते तु यद्यपि क्विबेवेति नियमो न भवति, अतश्च मन्त्रं कृतवानिति विग्रहेऽणपि प्राप्तस्तथा सति पदकार इतिवत् पापकार इत्यादिप्रयोगाणामपि आपत्तिरायाति, तथापि भाष्यप्रामाण्यात् तेषामनभिधानमेव कल्पनीयम्। यदि कुत्रचित्तादृशः प्रयोगः प्राप्यते, तर्हि इष्टापत्तिः कर्तुं शक्यते।

काशिकाकृन्मतेऽत्र त्रिविध एव नियमः। क्विबेवेति नियमात् कर्म कृतवानित्यत्र अण् न। कृञ एवेति नियमाद् मन्त्रमधीतवान् मन्त्राध्यायः, अत्र न क्विप्। भूत एवेति नियमाद् मन्त्रं करोति करिष्यति वेति विवक्षायां न क्विप्। स्वादिष्वेवेति नियमाभावादन्यस्मिन्नप्युपपदे क्विप्—शास्त्रकृत्, भाष्यकृत्, इति।

भाष्यमते तु स्वादिष्वेवेति नियमो भवत्येव। शास्त्रकृदिति प्रयोगस्तु शास्त्रं करोतीति विग्रहे क्विपि सति बोध्यम्। भूतकालिकक्रियाविवक्षायां तु वर्तमानत्वस्याविवक्षा कर्तव्या क्विबेवेति नियमाभावे मन्त्रं कृतवानिति विग्रहेऽण्प्रत्ययस्तु न शङ्क्यः, परत्वात् क्विपा बाधात्।

## [सोमे सुञः—अष्टा० ३।२।९०]

सोमसुत्। चतुर्विधोऽत्र नियम इति काशिका।

## [अग्नौ चेः—अष्टा० ३।२।९१]

अग्निचित् अत्र तत्त्वबोधिनी—'सोमे सुञः' इहापि चतुर्विधो नियम इति वृत्तिः। एवमुत्तरसूत्रेऽपि। तत्र भूतकालस्य क्विपि नियतत्वात् सोमं सुतवान् सोमसावः, अग्निं चितवान् अग्निचायः, इत्यण् न भवति, सुनोतेः सोम एवोपपदे नियतत्वात्। चिनोतेस्तु अग्नावेवोपपदे नियतत्वात्। सुरां सुतवान् सुरासुत्, इष्टकां चितवान् इष्टकाचिद् इति न भवति; किन्तु सुरासावः, इष्टकाचाय इत्यणेव भवति।

सा० सु०—२

सोमस्य सुनोतावेव धातौ नियतत्वात् । अग्नेस्तु चिनोतावेव नियतत्वात् । सोमं क्रीतवान् सोमक्रीः, अग्निं भृतवान् अग्निभृद् इति क्विब् न भवति; किन्तु सोमक्रायः, अग्निभार इत्यणेव भवति । भूत एव क्विपो नियतत्वात् सोमं सुनोति सोष्यति वा इत्यर्थे क्विब् न भवति । तथा अग्निं चिनोति, चेष्यति वा इत्यर्थे क्विबभावः, किन्तु अणेव ।

अथ 'सोमे सुञः' इत्यस्योद्देश्यताऽवच्छेदकं रूपं विचार्यते । तच्च 'कर्मवाचकसोमरूपप्रातिपदिकप्रकृतिकसुबन्तोपपदकभूतकालिकक्रियावाचकसुञ्धातुत्वं भवितुमर्हति, कर्मणि, भूते इत्याद्यनुवर्तनात् । तद्व्यापकं रूपम्—यत्किञ्चित्कर्मवाचकशब्दप्रकृतिकसुबन्तोपपदकसुञ्धातुत्वम् ।

इदमेव च क्विप् चेति सूत्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति सामान्यतः कर्मवाचकसुबन्तोपपदकभूतकालिकक्रियावाचकसुञ्धातोश्चेत् क्विप्प्रत्ययस्तर्हि कर्मवाचकसोमशब्दप्रकृतिकसुबन्तोपपदकभूतकालिकक्रियावाचकसुञ्धातोरेवेति नियमस्वरूपः फलति । ततश्च सुरां सुतवान् सुरासुदिति न भवति; किन्तु सुरासाव इत्यणेव भवति ।

एवमेव सोमशब्दोपपदकभूतकालिकक्रियावाचकधातुत्वमपि 'सोमे सुञः' इत्यस्योद्देश्यताऽवच्छेदकव्यापकम्, क्विप् चेत्यस्योद्देश्यताऽवच्छेदकव्याप्यं चास्ति । तद्रूपाऽवच्छिन्नातिरिक्तत्वेन क्विप् चेत्येतदीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति कर्मवाचकसोमशब्दोपपदकभूतकालिकक्रियावाचिधातोश्चेत् क्विप्प्रत्ययस्तर्हि सोमोपपदकभूतकालिकक्रियावाचकसुञ्धातोरेवेति नियमस्वरूपः सम्पद्यते । ततश्च सोमं क्रीतवानिति 'सोमक्रीः' इति न भवति, किन्तु अणेव ।

यद्यपि भाष्यमते क्विबेवेति नियमाभावे सोमं सुतवानिति विग्रहे अणपि प्राप्तस्तथा सति 'सोमसावः' इत्यपि स्यादिति । तत्तु न समीचीनम्, भाष्यप्रामाण्यादेव तस्यानभिधानं कल्पनीयम् । एवमेव भूत एवेति नियमाभावे सोमं सुनोति सोष्यति वेति विग्रहेऽपि क्विप् प्राप्तः, सोऽपि अनभिधानाद् वारणीयः । अथवा इष्टापत्तिविषयतया स्वीकरणीयः । एषैव स्थितिः 'अग्नौ चेः' इत्यस्यापि बोध्येति ।

## [कृ-सृ-भृ-वृ-स्तु-द्रु-स्रु-श्रुवां लिटि—अष्टा० ७।२।१३]

अत्र सूत्रे 'नेड् वशि कृति'[१] इति सूत्रतो नेडिति पदद्वयमनुवर्तते । कृ-श्रुवामिति पञ्चम्यर्थे षष्ठी, लिटीति षष्ठ्यर्थे सप्तमी । सतश्च 'क्रादिभ्यः परस्य लिट इट् न स्यात्' इति संक्षिप्तोऽर्थः सम्पद्यते ।

---

१. अष्टा० ७।२।८ ।

तत्र क्रादीनां चतुर्णां ग्रहणं नियमार्थम्, प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः, स लिटि चेत्तर्हि क्रादिभ्य एव, नान्येभ्य इति । ततश्चतुर्णां थलि भरद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थमिति सिद्धान्तकौमुद्याः सङ्केतः ।

अयमाशयः —कृ सृ भृ वृ इति सूत्रेंऽशद्वयमस्ति । तत्राद्यानां चतुर्णां नियामक एकोंऽशः । तथा हि—कृ सृ भृ एषां त्रयाणाम् 'एकाच उपदेशेऽनुदात्तात्'[1] इति लिट्सम्बन्धिनि वलाद्यार्धधातुके इण्निषेधः सिद्ध एव । वृ इत्यस्य तु वृङ्वृञोर्ग्रहणेन वसि मसि वहिमह्योश्च 'श्र्युकः किति'[2] निषेधः सिद्धः । वृञस्थलि लोके इड् भवत्येव 'बभूथाततन्थजगृम्भववर्थेति निगमे'[3] इत्यनेन वेदे ववर्थेति इडभावनिपातनाद् लोके इड् भवत्येवेति ज्ञापनात् ।

यतश्च 'कृ-सृ-भृ-वृ' इति सूत्रेण थल्यपि इण्निषेधे सिद्धे वेदे ववर्थेति इडभावनिपातनं व्यर्थं सज्ज्ञापयति—लोके इड् भवत्विति ।

ततश्च 'कृ सृ भृ वृ' इत्येषां चतुर्णां थलि वमादिषु चेण्निषेधव्यवस्था सिद्धा इति कृत्वाऽस्यांशस्य नियमार्थता आगता । तत्रास्योद्देश्यताऽवच्छेदकं रूपम्—लिट्सम्बन्धिबलाद्यार्धधातुकाव्यवहितपूर्वक्रादिधातूनामन्यतमत्वम् । तद्व्यापकं रूपम्—लिट्सम्बन्धिबलाद्यार्धधातुकाव्यवहितपूर्वोपदेशिकैकाजनुदात्तत्वलिट्सम्बन्धिबलाद्यार्धधातुकाव्यवहितपूर्वश्रिञेकाजुगन्तधातूनामन्यतमत्व इत्येतदन्यतमम् । अत्राद्यं द्वयं प्रकृत्याश्रयं प्रकृतिविशेषसम्बन्धित्वात् । अन्तिमं तु प्रत्ययाश्रयम्, प्रत्ययविशेषसम्बन्धित्वात् । एवं च प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेध इत्युक्तिः सङ्गच्छते ।

यद्यपि सिद्धान्तकौमुदीकृन्मते स्वरत्यादीनाम् उगितां च धातूनां नियमाक्रान्तिर्नास्ति, तथापि 'उपदेशेऽत्वतः'[4] इत्यत्र नित्यानिडिति किम्–आनञ्जिथ इति भाष्योक्त्या तत्रापि नियमाक्रान्तिरस्त्येव । अन्यथा 'कृ सृ भृ वृ' इति नियमस्य विकल्पयुक्तेऽभावस्य वारकत्वाभावे भाष्योक्तमिदं प्रयोजनमसङ्गतं स्यात् । भारद्वाजनियमेन विकल्पाभावेऽपि 'स्वरति....' इति विकल्पस्यावारितत्वात् ।

एवं च नियम्यं शास्त्रम्–'एकाच उपदेशेऽनुदात्तात्'[5], 'स्वरतिसूतिसूयतिधूञूदितो वा'[6], 'श्र्युकः किति'[7] इति सूत्रत्रयम् । तदीयोद्देश्यताऽवच्छेदकं रूपम्–वलाद्यार्धधातुकाव्यवहितपूर्वत्वविशिष्टमौपदेशिकैकाजनुदात्तधातुत्वम्, बलाद्यार्धधातुकाव्यहितपूर्वत्वविशिष्टस्वरतिसूतिसूयतिधूञूदिद्धातूनां धातुत्वम्, गित्कित्प्रत्ययाद्व्यहितपूर्वत्वविशिष्टश्रिञेकाजुगन्तधातुगतं धातुत्वम्, इत्येतदन्यतमम् । तद्व्याप्यं रूपं तदेव, यच्च कृ-सृ-

---

१. अष्टा० ७।२।१०; २. तत्रैव—७।२।११ ; ३ तत्रैव–७।२।६४; ४. तत्रैव—७।२।६२ । ५. तत्रैव–७।२।१०; ६. तत्रैव–७।२।४४ ; ७. तत्रैव—७।२।११ ।

भृ वृ इत्यस्य उद्देश्यताऽवच्छेदकव्यापकम्, तत्तु पूर्वं लिखितमेव । तद्रूपाऽवच्छिन्नातिरिक्तत्वेन एकाच उपदेशे इत्यादिशास्त्रत्रयीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति लिट्सम्बन्धिबलाद्यार्धधातुकाव्यवहितपूर्वत्वविशिष्टोपदेशिकैकाजनुदात्तधातुत्वाद्यन्यतमाऽवच्छिन्नानां धातूनामिण्निषेधश्चेत्तर्हि लिट्सम्बन्धिवलाद्यार्धधातुकाव्यवहितपूर्वक्रादीनामेव । तेनान्येभ्योऽनिट्केभ्योऽपि इड् भवत्येव । अतश्च 'पचिव', 'चिक्षयिव', 'बभूविव' इत्यादिप्रयोगा उपपद्यन्ते ।

कौमुदीकृद्भिस्तु – 'नेड्वशि·····'इति प्रक्रमान्नत्रापादितस्यैवेडभावस्य नियमो न तु विभाषाबललभ्यस्यापि, अनन्तरस्येति न्यायादपि सन्निहितस्यैव नियम उचितः । तेन सिषेधिथ, सिषेद्ध, सिषेधिव, सिषिध्व इत्याद्युभयविधाः प्रयोगा भवन्तीत्यभिप्रेयते; परन्तु पूर्वोक्तभाष्यप्रामाण्येन 'स्वरति...' इति विकल्पबललभ्यस्यापि नियमनमनेन क्रियत एव । तेन सस्वरिथ, जुगोपिथ इत्येकमेव रूपं भाष्यसम्मतमित्यवगम्यताम् ।

नन्वेवं क्रादिनियमेनैव 'नेड् वशि कृति' इति निषेधस्याप्यप्रवृत्तौ सेदिवानित्यादीनां सिद्धौ 'वस्वेकाजाद्घसाम्'[1] इति इड्विधानं किमर्थमिति चेदुच्यते – तस्य नियमत्वेन स्वीकारात् । अत एव बभूवानित्यत्रेडभावः सिद्धः ।

ननु तावताऽपि क्रादिभ्य इण्निषेधश्चेत्, तर्हि लिट्येवेति विपरीतनियमः कथं न स्वीक्रियत इति चेदुच्यते–'कर्ता, अकार्षीत्, कृतः' इत्यादिषु इडागमापत्तिभिया तादृशनियमास्वीकारात् । प्रमाणं चात्र – 'कृते ग्रन्थे', 'तमधीष्टो भृतः', 'परिवृतो रथः' इत्यादिसौत्रनिर्देशाः । ननु प्रकृत्याश्रयनिषेधस्य नियमोऽस्तु, प्रत्ययाश्रयस्य तु न सम्भवति, वृग्रहणस्य ववर्थेत्यत्राप्राप्तनिषेधप्रापकत्वात् । न ह्यत्र प्रत्ययाश्रयो निषेधः प्राप्नोति, थलोऽकित्त्वात् । नापि प्रकृत्याश्रयः, वृञ उदात्तत्वात् । न चैवमपि वृङो नियमार्थत्वमस्त्विति वाच्यम्, तस्य विशिष्याग्रहणात्. यद्यपि वृञोऽपि विशिष्यग्रहणं नास्ति, तथापि अप्राप्तनिषेधप्राप्तिफलकत्वाद् वृ इति वृञ एव ग्रहणं भवेत्, विधिनियमयोर्विधिरेव ज्यायानिति न्यायात् । एव च बभूविवेत्यादौ श्र्युकः किताति निषेधो दुर्वार इति चेत्, अत्रोच्यते –'बभूथाततन्थजगृम्भववर्थेति निगमे' इति सूत्रेण छन्दसि ववर्थेति नियमनाद् भाषायां वृञस्थल इटः स्वीकर्तव्यतया वृग्रहणस्य थल्विषयत्वायोगाद् वमादीनां च कित्त्वेन नियमस्य सुस्थिरत्वादिति सुधियो विभावयन्तु ।

## [वस्वेकाजाद् घसाम्—अष्टा० ७।२।६७]

'कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च क्वसोरिट् नान्येषाम्' इति सूत्रार्थो लिखितः सिद्धान्तकौमुद्याम् । अयमाशयः —वसु इति लुप्तषष्ठीकं पदम् । एकाच्च, आच्च, घस् चेति एकाजादघसस्तेषाम् एकाजासद्घामिति पञ्चम्यर्थे षष्ठ्यन्तम् ।

---

१. अष्टा० ७।२।६७ ।

तत्र नित्यत्वाद् द्वित्वे एकाच्त्वं न सम्भवति, तर्हि कथमिट् स्यादित्यत उक्तम्—कृतद्विर्वचनानामेकाचामिति। कृतेऽपि द्विर्वचने एकाच एव येऽवशिष्यन्ते, तेषामित्यर्थः। 'नेड् वशि कृति' इति निषेधं बाधित्वा क्रादिनियमात् सर्वत्र प्राप्तस्येटो नियमनार्थमिदं सूत्रम्।

अदसीयमुद्देश्यताऽवच्छेदकं रूपम् क्वसुप्रत्ययाव्यवहितपूर्वत्वविशिष्टमेकाजाद्यन्यतमत्वम्। तद्व्यापकं रूपम्—क्वसुप्रत्ययाव्यवहितपूर्वत्वविशिष्टं धातुत्वम्। नियम्यं सूत्रम्—आर्धधातुकस्येड्वलादेरिति[1]। तदीयोद्देश्यताऽवच्छेदकं रूपम्—बलाद्यार्धधातुकाव्यवहितपूर्वत्वविशिष्टं धातुमात्रवृत्तिधातुत्वम्। तद्व्याप्यं रूपम्—क्वसुरूपवलाद्यार्धधातुकाव्यवहितपूर्वत्वविशिष्टधातुवृत्तिधातुत्वम्।

एतद्रूपाऽवच्छिन्नातिरिक्तत्वेन बलाद्यार्धधातुकाव्यवहितपूर्वत्वविशिष्टधातुवृत्तिधातुत्वावच्छिन्ने सङ्कोचे सति क्वसुरूपबलाद्यार्धधातुकाव्यवहितपूर्वधातुवृत्तिधातुत्वाऽवच्छिन्नस्येट् चेत्तर्हि क्वसुप्रत्ययाव्यवहितपूर्वत्वविशिष्टैकाजाद्यन्यतमत्वाऽवच्छिन्नस्यैवेति नियमस्वरूपं प्रतिफलति। तेन बभूवानित्यादौ इडभावः सिद्धयतीति तत्त्वम्।

अयं नियमाकारस्तु कौमुदीकृद्रीत्या। प्रकारान्तरन्तु एकाजाद्यन्यतमावधिकाव्यवहितपरत्वविशिष्टक्वसुप्रत्ययत्वमपि प्रकृतसूत्रीयोद्देश्यताऽवच्छेदकं वक्तुं शक्यम्। तद्व्यापकं रूपम्—धातुमात्राव्यवहितपूर्वत्वविशिष्टक्वसुप्रत्ययत्वम्। नियम्यस्य आर्धधातुकस्येड्वलादेरित्यस्योद्देश्यताऽवच्छेदकं धातुमात्रावधिकाव्यवहितपरत्वविशिष्टबलाद्यार्धधातुकत्वम्। तद्व्याप्यं च रूपम्—धातुमात्राव्यवहितपरत्वविशिष्टक्वसुप्रत्ययत्वम्। एतद्रूपाऽवच्छिन्नातिरिक्तेन धातुमात्राव्यवहितपरत्वविशिष्टबलाद्यार्धधातुकत्वाऽवच्छिन्ने सङ्कोचे कृते सति धातुमात्रव्यवहितपरत्वविशिष्टक्वसुप्रत्ययस्येट् चेत्, तर्हि एकाजाद्यन्यतमाव्यवहितपरस्य क्वसोरेवेटि नियमस्वरूपं मन्तव्यम्। तेन बभूवानित्यादौ 'भू' इत्यादिधातुतः परस्य क्वसोर्नेडागमः।

## [ ऋतो भारद्वाजस्य—अष्टा० ७।२।६३ ]

तासौ नित्यानिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन। तेनान्यस्य स्यादेव। अनेन कौमुदीग्रन्थेनोक्तसूत्रस्य नियामकता सुष्ठु प्रतीयते। तथा हि—ऋति इति तपरकरणात् कॄ-गॄ-प्रभृतिषु दीर्घान्तेषु नायं निषेधः प्रवर्तते। ह्रस्वान्तेषु हृञ्धृञादिषु अचस्तास्वदित्येव सिद्धम्, वृ ङ् ञौ तु यद्यपि सेटौ, तथापि वृङः थलेव नास्ति, आत्मनेपदित्वात्, वृञस्तु छन्दसि 'ववर्ध' इति निपातनाद् ववरिथेति भाषायामिता भाव्यम्। तस्मान्नियमोऽयमित्युक्तम्—ऋदन्तादेवेति। जहर्थ, दधर्थ। अन्यस्य स्यादेवेति। एवं च भारद्वाजमते स्यादन्यस्य मते न स्यादिति विकल्पः फलितः। पपिथ,

१. अष्टा० ७।२।३५।

पपाथ, पेचिथ, पपक्थ। इयजिथ, इयष्ठ। 'अचस्तास्वत्थल्यनिटो नित्यम्' [१]इति नियम्यं सूत्रम्। तत्रोत्तरसूत्रादुपदेशे इत्यपकृष्यते। तच्चाजन्तस्य विशेषणमित्याह—उपदेशेऽजन्तो यो धातुरित्यादि। धातुरिति तु आक्षेपाल्लब्धम्। न ह्यधातोस्थल् सम्भवति। नित्यग्रहणमनिटो विशेषणम्। क्व च नित्यमनिट् इत्यपेक्षायां सन्निधानात् तासावेवेति विज्ञायते। तासि च क्लृप इति सन्निहितं वाऽनुवर्तते। न वृद्भ्य इत्यतो नेति पदमनुवर्तते, तदाह—तासौ नित्यानिट् ततः परस्येति। तासाविव तास्वद् इति सप्तम्यन्ताद् वतिः। यथा तासौ न भवति, तथा थल्यपीत्यर्थः। इह तासि इति नेति चानुवृत्त्यैवेष्टसिद्धौ तास्वदिति नातीवोपयुज्यत इति केचित्। अन्ये तु यस्य तासौ विद्यमानत्वम्, तस्मादेव परस्य थल इण्निषेध इत्येतल्लाभार्थं तत्। तेन 'उवयिथ, जघसिथ' इत्यत्र न निषेधः, वयिघस्योस्तासावभावादिति व्याचक्षते। 'अचस्तास्वत्, उपदेशेऽत्वतः' इति योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्तकः, न तु क्रादिनियमप्रापितस्य, अनन्तरस्येति न्यायात्।

न चैवमुपदेशेऽत्वत इत्यस्यैव बाधः स्यादिति वाच्यम्, अत्वत्सु धातुषु ऋदन्तत्वादर्शनेन यद्यत्वतः थलि इण्निषेधस्तर्हि ऋदन्तादेवेति नियन्तुमशक्यत्वात्। ननु तर्हि अचस्तास्वदित्येव सूत्रे कृतेऽपि तास्यनिट्थलीत्यादिपदानामिव उपदेशपदस्याप्यनुवृत्तिसम्भवे अत्वत इति सूत्रे उपदेशेपदस्य, अच इति पूर्वसूत्रे 'तास्वत् थलि' इत्यादेश्चाकरणाद् उभयोर्योगक्षेमसाम्यमिति ज्ञायते। तस्मादिष्टानुरोधाच्च योगद्वयस्याप्ययं भारद्वाजनियमो निवर्तक इति भावः।

यदि तु 'उपदेशेऽत्वतोऽचस्तास्वत्थल्यनिटो नित्यम्' इत्येको योगः स्वीक्रियेत, तदाऽत्र नास्त्येव संशयलेशोऽपीत्यपि बोध्यम्।

स्यादेतत्—ऋतो भारद्वाजस्येति[२] नियामकं शास्त्रम्, तदीयोद्देश्यताऽवच्छेदको धर्मः—भारद्वाजाभिमतं तास्वत्, नित्यानिट्को य ऋदन्तो धातुस्तदवधिकाव्यवहितपरत्वविशिष्टं थल्प्रत्ययत्वम्। तद्व्यापकं रूपम्—भारद्वाजाभिमतम् उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परत्वविशिष्टं थल्त्वम्—एतदन्यतरत्।

नियम्यं शास्त्रं च—'अचस्तास्वत्थल्यनिटो नित्यम्', 'उपदेशेऽत्वतः,' इति च शास्त्रद्वयम्। तदीयोद्देश्यताऽवच्छेदकं चान्यतरत्वेन ग्राह्यम्। तथा हि—तत्राद्यस्योद्देश्यताऽवच्छेदकम्—उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परत्वविशिष्टं थलप्रत्ययत्वम्। उपदेशेऽकारवान् यो धातुस्तासौ नित्यानिट् ततः परत्वविशिष्टं थलप्रत्ययत्वम्—इत्येतदन्यतरत् पाणिन्यादिसर्वर्षिसम्मतम्। अदसीयं व्याप्यं रूपम्—तदेव

---

१. अष्टा० ७।२।६१; २. तत्रैव—७।२।६३।

यद् ऋतो भारद्वाजस्येत्यस्योद्देश्यताऽवच्छेदकव्यापकम्। तद्रूपाऽवच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति—

भारद्वाजमतेन तासौ नित्यानिट् उपदेशेऽजन्तोऽकारवान् वा यो धातुस्ततः परस्य थल इण्निषेधश्चेत्, तर्हि ऋदन्तादेव परस्य थल इति नियमस्वरूपं फलितं भवति। स्तुद्र्वादीनां त्वनेन विकल्पो न भवति। अनन्तरस्येति न्यायेनोक्तद्वयप्रापितस्यैवायं नियमो न तु स्तुद्र्वादीनामपि।

अत्रेदं विशेषतोऽवधेयम्—ऋतो भारद्वाजस्येत्यस्योद्देश्यताऽवच्छेदकं रूपं भारद्वाजाभिमतम्, तद्व्यापकमपि रूपम् उक्तान्यतरद् भारद्वाजाभिमतमेव ग्राह्यम्।

अत एव 'अचस्तास्वत्....', 'उपदेशेऽत्वतः' इति सूत्रद्वयीयोद्देश्यताऽवच्छेदकं पाणिन्यादिसर्वर्षिसम्मतम्, तस्य व्याप्यं भारद्वाजाभिमतं सूत्रद्वयीयमुक्तान्यतरत्—इत्येवंरीत्या सर्वाऽपि नियमव्यवस्था सुष्ठु विज्ञेयेति।

[क्रमशः]



# वैयाकरणभूषणे धात्वर्थनिर्णयप्रकाशः

श्रीगिरिधर-ओझाः

पूर्व-प्रधानाचार्यः,

श्रीमत्परमहंससंस्कृतमहाविद्यालयस्य

टीकरमाफो, अमेठी, सुलतानपुर

❀ ❀ ❀

सदाचारानुमितेन "समाप्तिकामो मङ्गलमाचरेत्", "विघ्नध्वंसकामो मङ्गलमाचरेत्" इति श्रुतिद्वयेन बोधितेतिकर्तव्यताकं निखिलप्रपञ्चाधारभूतस्य श्रीलक्ष्मीपतेर्नमस्कारात्मकं चिकीर्षितग्रन्थनिर्विघ्नपरिसमाप्त्यादिफलकं मङ्गलं श्रीकौण्डभट्टाभिधो ग्रन्थकृच्छिष्यशिक्षार्थं मङ्गलादीनि हि शास्त्राणि प्रथन्त इत्यादिभाष्योक्तिमनुसरन्निबध्नाति—**श्रीलक्ष्मीरमणेति** । यद्यप्याशीर्वादनमस्कारवस्तुनिर्देशभेदेन मङ्गलस्य त्रिविधत्वलाभेऽपि स्तुतेर्मङ्गलानन्तर्गतत्वात् प्रकृते मङ्गलत्वं न सम्भवति, तथापि स्तुत्या नमनस्य फलितत्वेनात्रापि तत्सत्त्वन्निराबाधमेव यतो नू-धातोस्स्तवनमर्थस्तत्रोत्कृष्टगुणवत्त्वप्रकारकबोधानुकूलव्यापाररूपम्, तादृशगुणवन्तश्च नम्या भवन्त्येव ।

गौरीरमणरूपिणं श्रीलक्ष्मीरमणं नौमि यत एतत्सर्वं स्फोटरूपं जगद् विवर्त्तत इत्यन्वयः । कर्तारं विना क्रियाया अनुपपद्यमानत्वेन क्रियावाचकपदस्यापि तद्वाचकपदाभावे निराकाङ्क्षस्वार्थबोधकत्वासम्भवात्तदवगमाय अहमिति कर्तृवाचकपदमनुमेयम्, तथा च अहं कौण्डभट्टो रमतेऽस्मिन्निति रमणस्ततः कर्तृषष्ठ्या गौर्य्या रमणो गौरीरमणस्तस्य रूपं गौरीरमणरूपं तदस्यास्तीति गौरीरमणरूपी तमित्यर्थः । अत्र लाघवमूलकेन 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इत्यनेन मत्वर्थीयनिषेधस्तु न शङ्क्यः, प्रत्ययस्थादिति सूत्रस्थेन "असुब्वत" इति भाष्यप्रयोगेण तस्य क्वाचित्कत्वादत एव द्विवेदो, त्रिवेदी, करपात्रीत्यादिप्रयोगाः सङ्गच्छन्ते, अथवा गौरीरमणेन ( स्वम् ) रूपयति अभेदेन बोधयतीति विग्रहे "सुप्यजातौ"विति णिनिना नोक्तशङ्कावसर इति बोध्यम् । विशेष्यपदमाह—"श्रील०....."। अत्रापि पूर्ववदधिकरणे ल्युट्, लक्ष्म्या रमणो लक्ष्मीरमणः, श्रियासहितः श्रीसहितः स चासौ लक्ष्मीरमणस्तम् । मध्यमपदलोपिसमासः । विष्णुं नौमि स्तौमि । अत्र लक्ष्मीरमणपदेनैव निर्वाहे विशेष्ये

श्रीपदोपादानेन मायासंवलितस्यैव ब्रह्मणो जगत्कारणत्वं सूचितमिति बोध्यम्। लक्ष्मीशब्देन स्वतः प्रकाशरूपा गृह्यते, तस्याः पतिः स्वामी एवं लक्ष्मीरमणशब्देन परमात्मा लभ्यते। गौरीरमणेति विशेषणेनाद्वैतपक्षः सूचितः। एवमेतच्छास्त्रप्रवर्तकत्वेन शिवस्याभ्यर्हिततरत्वात् "विद्याकामस्तु गिरीशम्" इत्यभियुक्तोक्त्या च शिवस्य स्तुतिरुचितेति शङ्कापि निरस्ता, अभेदेन तस्य स्तुतेस्सत्त्वात्। अभेदे प्रमाणन्तु शिवाय विष्णुरूपाय शिवरूपिणे इत्यादि पुराणादिवाक्यमेव। अवनादिकार्य्यवैचित्र्यार्थमेव एकस्यैव भगवतस्तत्तद्गुणप्रधानमूर्त्यन्तरग्रहो न तु वास्तविको भेद इति भावः। उत्कृष्टगुणवत्त्वं दर्शयति—"स्फोटरूपमिति"। एतद्बुद्ध्या विषयीक्रियमाणं सर्वं निखिलं स्फुटत्याविर्भवत्यर्थोऽस्मादिति स्फोटनामात्मकशब्दो रूप्यते बुध्यते यत्तद् रूपमर्थः। स्फोटञ्च रूपञ्चानयोस्समाहारस्स्फोटरूपं वाच्यवाचकरूपं जगद् मिथ्याप्रपञ्चो यस्माद् ब्रह्मणो वेदान्तिनये ब्रह्मणो जगदुपादानकारणत्वेन "जनिकर्तु"रिति पञ्चमी विवर्तत आविर्भवतीत्यर्थः। मानञ्चात्र "नामरूपे व्याकरवाणी"ति श्रुतिः। सदेव सोम्येदमग्र आसीदिति श्रुतिविरोधस्तु न, जगतः सनातनत्वेऽपि नामादिरूपेणाविर्भावस्य सत्त्वात्। एवं "तस्मादेतस्माद्वा आत्मन आकाशः सम्भूतः" इत्याद्युत्पत्तिबोधकश्रुतिविरोधोऽपि न, आविर्भावलक्षणस्यैवोत्पादस्य ताभिर्बोधनात्। वस्तुतो यत इत्यत्र सार्वविभक्तिकस्तसिस्तेन यत इत्यस्य यस्माद् येन यस्मिन्नित्यर्थो बोध्यः, तेन येतो वा इमानि जायन्ते येन जातानि जीवन्ति यस्मिन् प्रत्यभिविशन्तीति श्रुतिविरोधो न, तथा च यदाविर्भवति तद्व्यवहारेण जीवति तिरोधत्ते इत्यर्थो बोध्यः। न्यायनये तु ब्रह्मणो निमित्तकारणत्वेन जनिकर्तुरित्यस्याप्राप्त्या धूमादग्निमानितिवद् निमित्तरूपहेतौ विभाषेति योगविभागात् पञ्चमी बोध्या। विवर्तत इत्यस्य धातूनामनेकार्थत्वादुत्पद्यत इत्यर्थः। स्फोटरूपमित्यस्य स्फोटं शास्त्रानुगम्यं रूपं यस्येति व्युत्पत्त्या भगवतो विशेषणत्वेन द्वितीयान्तत्वं बोध्यम्।

अशेषाणि च तानि फलानि अशेषफलानि तेषां दाता तम् अपवर्गादिसकलफलदातारं वाञ्छितसमस्तफलदातारमिति वा। एतेनापूर्वपदान्यद्योतनात्तस्यैव प्रार्थनीयत्वं सूचितम्। तृजकाभ्यामिति समासनिषेधस्तु न शङ्क्यः, शेषषष्ठ्या समासस्य सत्त्वात्। तत्प्रयोजको हेतुश्चेति निर्देशेन तस्यानित्यत्वाच्च। अत एव भूभर्तेत्यादि सिद्धम्। भव एवाब्धिर्भवाब्धिस्तस्य तरणं पारदेशगमनं तस्मिन्। वेदान्तिमतेऽज्ञानजनितमेव जगत् तन्निवृत्तिरेव तत्तरणम्। तन्निवृत्तिश्च ज्ञानोदयाद्भवतीति ज्ञानोदये तरिं साधनम्। मानञ्चात्र तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुतिवाक्यम्। यद्यपि न्यायसांख्यनये आत्यन्तिकदुःखनिवृत्तिरेव मुक्तिः, तत्साधको न हि ईश्वरः सम्भवति, तथापि तत्त्वज्ञानं मुक्तिसाधकं तद्विषयश्चेश्वर इति विषयतत्त्वज्ञानसाधकतया परम्परामुक्तिसाधकोऽपि स इति बोध्यम्। मानञ्चात्र तरति

शोकमात्मविदिति श्रुतिः। अत्राब्धेर्यथा मकराद्याऽऽक्रान्तत्वेन दुस्तरत्वम्, तथा भवस्य कामक्रोधाद्याऽऽक्रान्तत्वेन दुस्तरत्वाद् भवेऽब्धित्वारोपो बोध्यः। विशेष्यांशमाह—शेषभूषणमिति। शेषोऽनन्तभूषणमलङ्कारो यस्य स तं शिवम्, अथवा शेषं भूषयतीति शेषभूषणस्तम्, नन्द्यादित्वाल्ल्युः। भगवतश्शेषशायित्वाद् विष्णुम्। अशेषाश्च तेऽर्था अशेषार्था वाच्यव्यङ्ग्यरूपाः शेषस्य पतञ्जलेरशेषार्थास्तेषां लाभः, तस्मै इदमिति शेषाशेषार्थलाभार्थम्। शेषोक्तसमस्तसिद्धान्तप्रतिपत्तये प्रार्थये विनम्रतया याचे। अत्र प्रथमविशेषणेन प्रार्थनीयस्य सुदेयत्वं द्योतितम्। यो ह्यसंख्येयं ददाति तस्य संख्यातैकदेशदाने कः क्लेशः? द्वितीयविशेषणेनाज्ञाननिवृत्तौ शेषाशेषार्थ ग्रहणसामर्थ्यं द्योतितम्। अथवा दुःखस्य निवृत्तौ चिकीर्षितस्य पूर्तिः सुसाध्या द्योतिता। लोकेऽन्यदीयस्य वस्तुनोऽन्यतो लाभादर्शनेन ग्रन्थकर्तृपातञ्जलार्थानां भगवतः प्रार्थना तदीयस्य लोकानाभिसत्त्वं द्योतयतीति प्रथमग्रासे मक्षिकापातन्यायावसरस्तु न देयो भगवतोऽशेषफलप्रदत्वेन लोकातिरेकस्य सत्त्वात्।

नन्वेवमपि शेषत एव कुतो न प्रार्थितमिति चेत्, न, शेषस्य सेवकत्वेन ततो भगवत एवाभ्यर्हितत्वेन प्रार्थनायाः समुचितत्वात्। किञ्च, राजनि सन्तुष्टेऽसन्तुष्टाः अपि तत्सेवकाः सन्तुष्टाः स्वयमेव भवन्तीति तथैव भगवति परमात्मनि सन्तुष्टेऽतुष्यन्ननिच्छन्नपि भगवतः सेवकः पतञ्जलिः स्वयमेवार्थान् दास्यतीति चातुर्य्येण ग्रन्थकर्तुः प्रार्थनात एव शेषभूषणपदप्रयोगः सङ्गच्छते। अत्र यद्यपि तरति अनयेति व्युत्पत्त्या तीरशब्दस्य तरणसाधनवाचकत्वन्तरणपदोपादानेन पुनरुक्तिः प्रतीयते; परन्तु "विशिष्टवाचक-पदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रवाचकत्वनियमः" इति सिद्धान्तान्न पुनरुक्तिः। अत एव स कीचकैर्मारुतपूर्णरन्ध्रैरिति महाकविप्रयोगा विघ्नविघातेत्यादि अन्यग्रन्थाच्च सङ्गच्छन्ते। सदाचारपरिपालनाय एतच्छास्त्र-प्रवर्तकपाणिन्यादिमुनीनां पितृदेवो भवेति श्रुत्या पितुर्विघ्नराजत्वेन वक्रतुण्डस्य नमस्कारात्मकं मङ्गलमाचरन् प्रेक्षावत्प्रवृत्तिसिद्धये स्वग्रन्थस्योत्कर्षं दर्शयति।

**पाणिन्यादीति**। (अहम्) पाणिन्यादिमुनीन्, द्वैतध्वान्तनिवारणादिफलिकां पुंभाव-वाग्देवतां रङ्गोजिभट्टाभिधं पितरं ढुण्ढि च प्रणम्य गौतमजैमिनीयवचनव्याख्या-तृभिर्दूषितान् सिद्धान्तान्, उपपत्तिभिः प्रकटये, तेषां वचः दूषये (अहम्) पाणिनिः आदिर्येषां ते पाणिन्यादयः तद्गुणसंविज्ञानो बहुव्रीहिः। मननशीला मुनयः पाणिन्यादयश्च ते मुनयः पाणिन्यादिमुनयस्तान् पाणिनिकात्यायनपतञ्जलीन् प्रणम्य प्रह्वीभावेन नमस्कृत्य द्वाभ्यां प्रकाराभ्यां विरुद्धधर्माभ्यामितो ज्ञात इति द्वीतस्तस्यैवं द्वैतं संशयात्मकज्ञानम्। यद्वा द्वयोर्भावो द्विता तस्या इदं द्वैतम् अभिधाख्यं मिथ्या-ज्ञानम्। द्वैतमेव ध्वान्तं तमो द्वैतध्वान्तम्, तत्त्वाच्छादकत्वेन सादृश्याद् द्वैतध्वान्तारोपः। तस्य निवारणम् अपहरणम्, तदेवादि मुख्यं फलं प्रयोजनमस्याः, सा ताम्। पुंसो भाः

पुंभास्तां वाति (प्राप्नोति ) इति पुंभावा, अथवा पुंसो भावो यस्याः सा पुंभावा, वाचां देवता (वा) वागेव देवता वाग्देवता पुंभावा चासौ वाग्देवतेति पुंभाववाग्देवता, ताम् । पुरुषाकारावतीर्णसरस्वतीरूपम् । रङ्गोजिभट्ट अभिधा यस्य स तं रङ्गोजिभट्ट-नामानं पितरं जनकं प्रणम्येत्यनुषज्यते । विशेषणद्वयेन पितुरद्वितीयवैदुष्यं द्योतितम् । नामनिर्देशेन च तस्य ख्यातिः सूचिता ढुण्ढि गजाननम् । अत्रापि प्रणम्येति सम्बध्यते । गौतमश्च जैमिनीयश्च गौतमजैमिनीयौ, तयोर्वचनानि तेषां व्याख्यातारस्तैर्दूषिता-स्तान् । वादिप्रतिवादिभ्यां निर्णीतार्थाः सिद्धान्तास्तान् भाष्यकाराद्यभिप्रेतार्थान् उपपत्तिभिर्युक्तिभिः प्रकटये प्रकाशये । तेषां व्याख्यतॄणां वचः, अनादरसूचनायैक-वचनम्, दूषये खण्डये, उपपत्तिभिरिति शेषः । 'वर्तमानसामीप्ये लट्' (अष्टा० ३।३।१३१) अत्रोत्तरार्द्धेन स्वग्रन्थस्यान्यग्रन्थेभ्योऽगतार्थता सूचिता, अनुबन्धनिर्देशोऽपि सूचितः । यद्यपि विषयप्रयोजनसम्बन्धाधिकारिभेदेनानुबन्धश्चतुर्विधः, स च साकल्येन न निर्दिष्टस्तथापि वैयाकरणसिद्धान्तरूपविषयो निर्दिष्टस्तेनान्येषां प्रयोजना-दयोऽनुमेयाः । तथा हि सिद्धान्तज्ञानप्रयोजनम्, तज्जिज्ञासैवाऽधिकारिणः, ग्रन्थविषययोः प्रतिपाद्यप्रतिपादकभावो विषयाधिकारिणोश्च ज्ञातृज्ञातव्यभावः सम्बन्धोऽर्थादेवायातः ।

श्रीभट्टोजिदीक्षितकृतकारिकां व्याचिख्यासुः कोण्डभट्टः प्रथमां कारिकां व्याचक्षाण आह – **प्रारीप्सितेति**। प्रारीप्सितो ग्रन्थः तस्य प्रचारादिप्रतिबन्धकाः विघ्नास्तेषां व्यूहः समूहस्तस्य प्रशमनं तस्मै, एतेन विघ्नध्वंस एव मङ्गलस्य मुख्यं फलं प्रदर्शितम्, समाप्तिस्तु न फलम्, नास्तिकादिग्रन्थे व्यभिचारात् । जन्मान्तरीयकल्पना तु न युक्ता, जन्मान्तरीयसमाप्तिमुद्दिश्य शिष्टानां प्रवृत्त्यदर्शनेन मङ्गलसमाप्त्योः शरीरनिष्ठप्रत्यासत्त्यैव कार्यकारणभावस्य कल्पयितुं शक्यत्वात् । समाप्तेराकस्मि-कत्वशङ्का तु न कार्या, प्रतिबन्धकाभावस्यैव तत्कारणकल्पनात् । **फणिस्मरणेति** । फणास्सन्ति यस्य स फणी शेषस्तस्य स्मरणरूपम् । फणिस्मरणरूपमपि भगवत्स्मरण-रूपमेव "शेषाख्यं धाम मामकम्" इति भगवदुक्तेः । स्मरणद्वारा नमनं फलितमिति नात्र मङ्गलाभावः शङ्क्यः । **शिष्यशिष्येति** । शिष्याणां शिक्षा तस्यै इदं निबध्न ग्रन्थं घटकीकुर्वन् । **प्रतिज्ञेति** । प्रतिज्ञानफलं शिष्यावधानदानरूपं बोध्यम् । **फणिभाषितेति** । फणीनां भाषितं तच्च तद्भाष्यं तद् अब्धिरिव तस्माद् विषयत्वेन द्वयोः साम्यता । **शब्द-कौस्तुभेति** । शब्दकौस्तुभग्रन्थविषयः । अन्यत्र शब्द इव सनातनः कौस्तुभाभाष्यमणिः । उद्धृतो मन्थनद्वारा निष्कासितः । तत्र शब्दकौस्तुभग्रन्थे निर्णीतः सिद्धान्तित एव, न तु कपोलकल्पितः, अर्थो विषय इह अस्मिन् ग्रन्थे संक्षेपेण समासेन कथ्यते उच्यते । अनेनास्य ग्रन्थस्य सफलत्वं द्योतयन् येऽतिदुरूहभाष्यतो बहुविस्तृतशब्दकौस्तुभतश्च सिद्धान्तग्रहणेऽपटवस्तानप्युपकरोत्ययं ग्रन्थ इति सूचितवान् । अनेन शब्दकौस्तुभ-कर्तृत्वमपि स्वयमेव सूचितम् । तेन च स्वस्मिन् भाष्ये सारगृहीतृत्वद्वाराऽस्मिन् ग्रन्थे

गौरवातिशयो द्योतितः, बहुवचनेन शब्दकौस्तुभनिर्माणाभिमाने नादरपात्रत्वं स्वस्य द्योतितम् आधुनिकेति कल्पितत्वं शङ्कापनयनाय—अन्यथेति। शब्दकौस्तुभोक्तार्थाना-माधुनिकोत्प्रेक्षितत्वे। **पाणिनीयेति**। वैयाकरणानामनुपादेयः, अग्राह्यतापत्तेः। ध्वनयितुं बोधयितुम्।

**प्रतिज्ञातमाह**—प्रतिज्ञाविषयीभूतो यः सिद्धान्तस्तमाह। यद्यपि ग्रन्थकर्तृ-निकाये वाक्यस्फोटोऽतिनिष्कर्षं इतिं वक्ष्यमाणग्रन्थस्वारस्याद् वाक्यमेवार्थबोधकम्। वाक्यमप्यखण्डमेव, सखण्डत्वेऽपि तदन्तर्गतानां पदादीनां निरर्थकत्वमेवेति प्रकृति-प्रत्ययादीनां विचारो निष्फल एव, तथापि वाक्यानामतिबाहुल्येन प्रतिवाक्यं सङ्केतग्रहासम्भवात् तदन्वाख्यानस्य लघुनोपायेनाशक्यत्वाच्च तज्ज्ञानाय तेषु पदानि तदर्थेषु पदार्थकल्पनाऽऽवश्यिकैवेति। एवं शास्त्रप्रक्रुत्या निर्वाहाय प्रकृतिप्रत्ययकल्पनापि। तेन चान्वयव्यतिरेकद्वारा तदर्थकल्पनापि स्वीकर्तव्यैव। अत एवाष्टौ स्फोटा ग्रन्थकर्त्राप्यङ्गीकृताः, यथा परमार्थतो निर्गुणस्यापीश्वरस्योपासनादशायां सगुणत्वम् तत्राप्यवताराः स्वीकृताः, अन्यथोपासना विलीनैव स्यात्; परन्तु सुप्तिङादिभेदेन प्रत्यया बहुविधाः। एवं धातुप्रातिपदिकभेदेन प्रकृतिरपि द्विविधा। तत्र कस्यार्थः पूर्वं निरूपणीय इत्याकाङ्क्षायां "सर्वं हि वाक्यं क्रियया परिसमाप्यते" इत्यभियुक्तोक्त्या वाक्यलक्षणे तिङन्तस्य प्रधानतया च पूर्वं तिङन्तार्थो निरूपणीय इत्यर्थादायातम्। तिङन्तेऽपि प्रकृतिप्रत्ययभेदेन यद्यपि द्वौ भागौ, तथापि वैयाकरणनये सर्वत्र वाक्ये क्रियाविशेष्यक एव बोध इति सिद्धान्तात् प्रधानकार्यं सर्वतो बलवदिति न्यायेन क्रियावाचकस्यार्थः पूर्वं निरूपणीय इति क्रियावाचकस्य धातोः सामान्यतोऽर्थमाह—**फलव्यापारयोर्धातुरित्यादि**। फलं च व्यापारश्च फलव्यापारौ तयोरितरेतरयोगद्वन्द्वः। वाचकत्वं सप्तम्यर्थः, वचनविपरिणामेन स्मृतपदानुषङ्गस्तथा च फलव्यापारयोरर्थयो-र्वाचको धातुः। धातुपाठ इव भाविन्याः संज्ञाया अत्राश्रयणम्। स्मृतः कथितः फल-व्यापारयोर्धातोरर्थ इति भावः। प्रसङ्गतः सामान्यरूपेण तिङर्थमाह— **आश्रये त्विति**। आश्रये प्रत्यासत्त्या फलाश्रये ( कर्मणि ) व्यापाराश्रये ( कर्तरि ) वाचकाः तिङस्तिप्-प्रभृतयः स्मृताः।

तिङन्तविषये प्रकृति-प्रत्ययार्थमुक्त्वा शाब्दबोधप्रकारमुत्तरार्द्धकारिकयाऽऽह—**फले प्रधानमिति**। निरूपितत्वं सप्तम्यर्थः। तथा च धात्वर्थद्वये व्यापारफलनिरूपितं प्रधानं भवति तिङर्थभूते कर्तृकर्मणी विशेषण एव भवतः। तत्र कस्य किं विशेषणम्, इत्यपि मूल एव स्फुटीभविष्यति। अत्र फलव्यापारयोरिति द्विवचननिर्देशेन फलव्यापारयोर्धातोः पृथक् शक्तिरिति सूचितम्, अन्यथा समाहारद्वन्द्वेनैव निर्दिशेत्। इदमेव च प्राचां सम्मतम्। ननु विशेष्यविशेषणवाचकपदयोः समानवचनकत्व-नियमोऽस्त एव नीलो घटो नीला घटा इत्यादयो न प्रयोगाः। एवञ्च बहुवचनान्तं स्मृता

इति पदमेकवचनान्तस्य धातुरिति पदस्य विशेषणं भवितुं नार्हतीत्यत आह—**धातुरित्य-त्रेत्यादि** ।

अयं भावः—प्रकृत एकवचनान्तं स्मृत इति पदमध्याहृत्य धातुना सहान्वयो बोध्यः। न च समानवाचकत्वनियमे वेदाः प्रमाणम्, जात्याकृतिव्यक्तयः पदार्थाः (गौ. सौत्रप्रयोगः) इति त्रयः समुदिता हेतुरिति काव्यप्रकाशोक्तिश्च न सङ्गच्छेदिति वाच्यम्, विशेष्यवाचकपदोत्तरविभक्त्यर्थसंख्याविरुद्धसंख्याया अविवक्षास्थल एव तन्नियमस्य सत्त्वात् पूर्वोक्तत्रितयस्थले न विवक्षैवेति न दोषस्तदाहुर्व्युत्पत्तिवादे गदा-धरभट्टाः—विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयीभूतसंख्याविरुद्धसंख्याया अविव-क्षायां विशेष्यविशेषणवाचकपदयोः समानवाचकत्वनियम इति। वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वात् पदार्थं दर्शयन्नाह—**फलमिति** । ननु फलपदस्य लाभे प्रयोजने प्रवृत्त्युद्देश्ये वा लोकप्रसिद्धिरत एव च "स्वरित...." इति सूत्रं सङ्गच्छते, अन्यादृश-फलग्रहणे तस्य कर्तृगामित्वस्य दुर्लभतया सूत्रमसङ्गतमेव स्यात्, पूर्वोक्तफलस्य धात्वर्थत्वे तण्डुलस्य तादृशफलाश्रयत्वाऽभावात्कर्मत्वानुपपत्तिनिवृत्तिरूपतादृशफलाश्रयत्वे क्षुधं पचतीति प्रयोगापत्तिः स्यादत आह—**फलं विक्लित्त्यादि** ।

अयं भावः फलपदे द्विविधा शक्तिः,एकया लौकिकार्थं बोधयत्यपरया शक्त्या-परिभाषिकं शास्त्रीयमर्थंमत एव सकर्मकत्वादि व्यवहारोपपत्तिः, अन्यथा सर्वेषां सकर्मकत्वमकर्मकत्वमेकमेव स्यात् । स च तद्धात्वर्थजन्यत्वे सति तद्धात्वर्थरूपो बोध्यः । व्यापारेऽतिव्याप्तिवारणाय सत्यन्तम्, संयोगस्य पत्-धातोः फलत्ववारणाय विशेष्यम्, एतादृशफलत्वं च विक्लित्यादिरस्तीति प्रकृते फलपदेन तदेव गृह्यते। व्यापारपदार्थमाह—**व्यापारस्त्विति** । अयं भावः—धात्वर्थविषये व्यापारपदेन साध्यत्वेनाभिधानविषयोभूता क्रिया गृह्यते, अर्थाद् व्यापारपदस्यात्ररूढिशक्तिः। साध्यत्वं चानुपदमेव मूले प्रकटोभविष्यति। न चैवं घटं करोतीत्यादौ घटादेरपि साध्यत्वेनाभिधानविषयत्वात् क्रियात्वापत्तिरिति वाच्यम्, पदान्तरासमभिव्याहारा-प्रयोज्यसाध्यत्वप्रकाराभिधानविषयत्वे तत्तात्पर्यसत्त्वात् । घटादेः कृञादि समभिव्याहार-मन्तरा न तादृशप्रतोतिविषयता अधिश्रयणादेश्चास्तीति व्यापारत्वं तस्य, इदमेव च क्रियालक्षणं बोध्यम्, तज्जन्यत्वे सति तज्जन्यजनकत्वरूपस्तु नात्र ग्राह्यो विक्लित्तिं प्रति अधिश्रयणादीनामन्तिमग्निसंयोगेनान्यथासिद्धत्वात् जनकत्वाभावेन व्यापारत्वानापत्तेः।

उक्तार्थे हरिवाक्यं प्रमाणयन् क्रियालक्षणमाह—**यावत् सिद्धेति** । सिद्धं सिद्ध-स्वरूपं वा असिद्धं साध्यस्वरूपं यावत् तत्सर्वं साध्यत्वेन वक्ष्यमाणरूपेणाभिधोयते, साध्यत्वप्रकारकप्रतोतिविषयत्वे विवक्ष्यते, तदा सा क्रियेत्यभिधीयते कथ्यतेऽर्थात् क्रियापदस्य साध्यत्वाभिधानविषये रूढिः। यदा तु यौगिकत्वे क्रियते उत्पाद्यते या सा क्रियेति व्युत्पत्त्या समुदाय उत्पादनानर्हत्वात्क्रियात्वं न स्यादित्युच्यते तदाप्याह—**आश्रितक्रमरूपत्वात्** । आश्रितं क्रमरूपं यस्याः सा तस्या भावस्तत्त्वं तस्मात् । अयं

भावः—तदीयावयवानामधःश्रयणादानां क्रमेणोत्पत्त्या यौगिकत्वेऽपि क्रियात्वं बोध्यम् ।
न चैवं न्यायनये यत्नरूपफलमात्रवाचिनां क्रमेणोत्पत्त्या यौगिकत्वेऽपि क्रियात्वं बोध्यम् ।
न चैवं न्यायनये यत्नरूपफलमात्रवाचिनां कृञादीनां क्रियावाचित्वाभावेन धातुत्वं न स्यादिति वाच्यम्, व्यापारगतपौर्वापर्यस्य फलेऽप्यारोपेणादोषात् तन्मतस्य हेयत्वाच्च । धातुना साध्यत्वेन क्रियाभिन्नं शङ्का समाधानाभ्यामाह—न च साध्यत्वेत्यादि । **पचति पाक इति ।** यदि धातुना साध्यत्वेन क्रिया नाभिधीयते तदा पाक इत्यत्रेव पचतीत्यत्रापि क्रियान्तराऽऽकाङ्क्षा न स्यात्, धातुना साध्यत्वेनाभिधानादिति वाच्यम्, प्रत्ययत्वेन घञादित्वेन क्रियाभिधानस्य सत्त्वात् । अत एव स्तोकः पाक इति प्रयोगः सङ्गच्छते ।

**धात्वर्थावगमेति ।** धात्वर्थस्यावगमस्तस्याविशेषस्तस्मिन् । (धात्वर्थज्ञानस्यैक्येऽपि) साध्यत्वलक्षणमाह—**तथा चेति ।** अन्या क्रिया क्रियान्तरम्, तस्याकाङ्क्षा तस्या उत्थापकतावच्छेदकरूपं यत् सिद्धत्वं तद्भिन्नं साध्यत्वम् । न चैवं 'कृष्णो नमेच्चेत्सुखं यायात्' इत्यादावाकाङ्क्षाऽभावेन क्रियान्तरान्वयो न स्यादिति वाच्यम्, धातुना तथाभिधानेऽपि चेत् पदमहिम्नाऽऽकाङ्क्षोत्थानस्य सत्त्वात् ।

वस्तुतस्तु साधनं हि क्रियां निर्वर्तयतीति सुट्कात्पूर्व इत्यादिसूत्रस्थभाष्योक्तरीत्या निष्पाद्यत्वमेव साध्यत्वं बोध्यम् । पूर्वोक्तक्रियालक्षणे ह्रिगाद्यर्थक्रियात्वाभावो न शङ्कनीयः, इष्टत्वात् । भूवादिसूत्रस्थशब्दरत्नकृतां तु भ्रम एव । ननु वाक्यपदीयेऽसत्त्वभूतत्वेनाभिधानोक्त्या साध्यत्वेनाभिधाने तद्विरोधः स्यादित्यत आह—**तद्रूपवत्त्वेति ।** तत् साध्यत्वं रूपमस्ति अस्येति तस्य भावो प्रकृतिजन्यबोधे प्रकारीभूतस्य भावप्रत्ययार्थत्वात् साध्यत्वम्, तदेव 'असत्त्वभूतपदार्थ इति न विरोधः' एतदेव साध्यत्वरूपासत्त्वभूतम् "असत्त्वभूत इति" । अस्य सत्त्वस्वभावमापन्ना व्यक्तिर्नामाभिरुच्यत इति पूर्वार्द्धं बोध्यम्, समुदितार्थस्तु नामभिः प्रातिपदिकैः सत्त्वरूपा व्यक्तिः प्राधान्येन उच्यते अभिधीयते । तिङ्पदैः तिङन्तपदैः असत्त्वभूतः 'अद्रव्यरूपो' भावः 'क्रिया' प्राधान्येन अभिधीयते उच्यते वाक्यपदीयमिति **हरिग्रन्थः ।**

ननु धात्वर्थव्यापारस्य पूर्वापरीभूतावयवकत्वेऽपि फूत्कारत्वादिरूपेणोपस्थित्यभावात्तत्प्रकारकशाब्दबोधो न स्यात् । उपस्थितशाब्दबोधयोः समानप्रकारकत्वनियमादत आह—**अयं च व्यापार इति ।** अयं धातूपस्थाप्यः व्यापारो व्यापारपदार्थस्तत्तद्रूपेण तेन तेन रूपेणेत्यर्थो वाच्यः पचत्यादिशक्यः मानमाह—**पचतीत्यावाविति ।** अत्र फूत्कारे गृहीतशक्तिकपुण्यस्य वह्निना प्रज्वलदशायां पचतीति न प्रयोगः । तत्र शङ्कते—**न च नानार्थतेति ।** पचतीत्यादीनामिति शेषः । अयं भावः यत्र शक्यं वा शक्यताऽवच्छेदकमेकं तत्र शक्तिरप्येकैवेति न तत्र नानार्थत्वम्; परन्तु यत्र शक्यानि शक्यतावच्छेदकान्यपि नाना, तत्र शक्तयोऽप्यनेका इति । तस्य नानार्थत्वं नानाशक्त्या-

श्रयत्वस्यैव नानार्थत्वात् । पचत्यादिषु फूत्कारादिशक्यानां शक्यताऽवच्छेदकानां फूत्कारत्वादीनां चानन्त्याच्छङ्का । उत्तरयति—तदादिन्यायेनेति । तदादिन्यायेन तदादिपदवत् पचत्यादौ बुद्धिविशेषादेः फूत्कारादिविषयकबुद्ध्यादेः शक्यतावच्छेदकानां फूत्कारत्वादीनाम् अनुगमकस्य शक्यतावच्छेदकतावच्छेदकस्य सत्त्वात् स्वीकारात् समानधातुरयमाशयो यथा तदादिपदैर्घटत्वादिविशेषरूपेण बोधसिद्धये तदादिपदानां घटत्वादिविषयकबुद्धिविशेषोपलक्षिततत्तद्धर्मावच्छिन्ने शक्तिं स्वीकृत्य बुद्धेः शक्यतावच्छेदकतावच्छेदकत्वकल्पनेनानेकार्थत्वन्नाङ्गीक्रियते । यत्र शक्यतावच्छेदकतावच्छेदकमेकम्, तत्रापि शक्तिरेकैवेति नियमः । बुद्धेः शक्यतावच्छेदकतावच्छेदकस्यैकस्य सत्त्वात् । तथा प्रकृतेऽपि (फूत्कारत्वादिविषयक-) बुद्धिविशेषोपलक्षितफूत्कारत्वाद्यवच्छिन्ने पचत्यादीनां शक्तिर्बुद्धिश्च शक्यतावच्छेदकतावच्छेदिकेति न पूर्वोक्तशङ्कावसरः।

न च बुद्धीनामनेकत्वेन शक्यतावच्छेदकतावच्छेदकानन्त्यमस्त्येवेति वाच्यम्, फूत्कारत्वविषयकबुद्धेर्विषयैक्येनैकत्वात् । न चैवं बुद्धिविशेषेऽपि शक्तिः स्वीक्रियताम्, किमुपलक्षणत्वस्वीकारेणेति वाच्यम्, शाब्दबोधे भानवारणायोपलक्षणत्वस्वीकारस्यावश्यकत्वात् । न च तस्याशक्यत्वाभावे शक्यतावच्छेदकतावच्छेदकत्वमपि तस्या न स्यादिति वाच्यम्, विषयतासम्बन्धेन तत्त्वेबाधकाभावात् ।

ननु वृत्त्यनियामकसम्बन्धस्यानवच्छेदकत्वात् प्रतियोगित्वं न भवतीति नियमात् कथं तेन सम्बन्धेन बुद्धेरवच्छेदकतावच्छेदकत्वमिति चेत्सत्यम्, बुद्धिविषयत्वस्य तदवच्छेदकत्वस्य वा शक्यतावच्छेदकतावच्छेदकत्वविशेषकल्पनात् । तदाशयेन मूले आह—आदेरिति । पचादावनेकार्थस्वीकारोक्तिस्तु न युक्ताऽन्याय्यञ्चानेकार्थत्वमिति नियमात् । नन्ववयवभूतव्यापाराणामनेकत्वात् क्षणनश्वरक्रमिकव्यापाराणां युगपदवस्थानाऽसम्भवेन समूहगतैकत्वासम्भवाच्चैकक्रियेति व्यवहाराऽनुपपत्तिरिष्टापत्तिस्तु न, 'एका क्रिया' इति प्रशंसायामिति सूत्रस्थभाष्यविरोधापत्तेरित्यत आह—आख्यातक्रियेति । आख्यातेन प्रतिपाद्या सा चासौ क्रियेति मध्यमपदलोपिसमासस्तस्या एकत्वम्, तस्य व्यवस्था (क्रियैकैवेति नियमः) अपि अवच्छेदकः (शक्यताऽवच्छेदकतावच्छेदकः) चासौ बुद्धिविशेषस्तत्स्थैक्यमेकत्वम्, तत आदाय गृहीत्वेत्यर्थः । अर्थात् स बुद्धिविशेषः समूहालम्बनरूप इति तद्गतैकत्वस्य क्रियायामारोपेण तत्राप्येकत्वव्यवहारः । स्वोक्तार्थे हरिसम्मतिमाह—उक्तञ्चेति । वाक्यपदीये (हरिग्रन्थे) गुणभूतैरिति । गुणभूतैः समूहं प्रति गुणीभूतैस्तत्तद्रूपेणाभासमानैरवयवैः फूत्कारादिभिरुपलक्षितः । बुद्ध्याः समूहालम्बनात्मकबुद्धिगतैकत्वबुद्ध्या प्रकल्पित-आरोपितो भेदो भेदारोपो यस्य सः क्रमेण जन्म येषां ते तेषां क्रमिकाणां व्यापाराणां समूहः समुदायः क्रियेति क्रियापदेन व्यपदिश्यते व्यवह्रियत' इत्यर्थः । अनेनावयवगतं पौर्वापर्यं बुद्धिगतञ्चैकत्वमिति स्पष्टमेव प्रतीयते, तथा च पूर्वापरीभूताऽवयवक एव

बुद्धिविषयो व्यापारसमुदायः, स क्रियेति लब्धम् । एकावयवदशायामपि समुदायत्वारोपेण प्रयोगः समर्थनीयः। धात्वर्थं धातोरर्थस्तं धातुवाच्यं निरूप्य प्रतिपाद्य संक्षेपेणेति शेषः तिङर्थं तिङामर्थस्तम् आख्यातप्रत्ययार्थम् आह निरूपयति आश्रयेति । द्वितीयपादेन प्रधाननिरूपणानन्तरं विशेषणनिरूपणस्यावसरप्राप्तत्वात् । यद्यपि कारिकायामाश्रयशब्दः सामान्यार्थकस्तथापि प्रत्यासत्तिन्यायेन विशेषार्थपरो बोध्य इत्याशयेनाह—**फलाश्रय इत्यादि** । यद्यपि स्वनये व्यापारस्य प्राधान्यात् प्रधानानुसरणं ज्याय इति न्यायेन व्यापाराश्रयस्य प्रथममभिधानमुचितम्, तथापि 'लः कर्मणि' (अष्टा० ३।४।६९) इति सूत्रे फलाश्रयस्य कर्मण एवोपादानेन सौत्रक्रमानुसारेण सर्वत्र व्यापारस्य प्राधान्याऽभावेन च फलाश्रयस्य प्रथमोपादानम् ।

ननु कर्तृकर्मणोर्लः कर्मणोति सूत्रबलेनाऽऽख्यातार्थसिद्धावपि फलाश्रयादेस्तदर्थत्वे प्रमाणाभाव इत्यत आह—**फलाश्रयः कर्मेति** । फलाश्रयव्यापाराश्रयाभिन्नावेव कर्मकर्तृपदार्थौ न तु ततो भिन्नाविति तयोस्तिङर्थत्वे फलाश्रयादेरपि तत्त्वसिद्धिरिति भावः । नन्वेवमाश्रयवत् फलव्यापारयोरपि तिङर्थत्वापत्तिरिष्टापत्तिस्तु न, बोधावृत्तिप्रसङ्गात् । कर्म गच्छतीत्यादावाकाङ्क्षाविरहेणान्वयानापत्तेश्चेत्यत आह—**अत्रेत्यादि** । अत्र घटकत्वत्वं सप्तम्यर्थस्त्रलार्थस्तच्छब्दश्च पूर्वपरामर्शकत्वेन फलाश्रयव्यापाराश्रयस्तथा च फलाश्रयव्यापाराश्रयघटकयोरित्यर्थः । अन्यत्सुगमम् । **अन्यलभ्यत्वाविति** । अनन्यलभ्यो हि शब्दार्थं इति न्यायादिति भावः ।

नन्वाश्रयस्य शक्यत्वे शक्यतावच्छेदकत्वमाश्रयत्वस्यार्थादागतमित्याश्रयत्वस्याधाररूपत्वेन निरूपकादिभेदेन भेदाच्छक्यताऽवच्छेदकाऽऽनन्त्यमिति शङ्कां मनसि निधायाह—**शक्यतावच्छेदेति** । अस्यायमर्थः—यद्यपि आश्रयत्वमेव शक्यतावच्छेदकम्, परन्तु तदाश्रयत्वं तत्तच्छक्तिविशेषरूपम्, न त्वाधाररूपम् । स चासौ शक्तिविशेषतच्छक्तिविशेषः स रूपं यस्य तत् कर्तृत्वकर्मत्वादिरूपमित्यर्थः । यद्यपि निरूपकादिभेदेन कर्तृत्वादिशक्तिरपि भिन्नैव । अन्योऽद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्तेत्यादौ "सप्तमीपञ्चम्यौ कारकमध्ये" इति न प्रवर्तेत, तथापि आश्रयतात्वस्य शक्यतावच्छेदकतावच्छेदकत्वमङ्गीकृत्य पूर्वरीत्या दोषः परिहरणीयः । सुबर्थनिर्णये वक्ष्यते–तत्त्वञ्चाखण्डशक्तिरूपावच्छेदकमिति ग्रन्थेन । आश्रयस्तु तिङ् इति ग्रन्थेनाख्यातस्य कर्तरि कर्मणि च शक्तिः । स्वमते उक्ता सम्प्रति आख्यातार्थः कृतिरिति नैयायिकाः । आख्यातार्थो व्यापार इति मीमासकास्तेषां मतं निराकरिष्यन् स्वगतं शङ्कासमाधानाभ्यां द्रढयति—**नन्वनयोरिति** । नन्विति प्रश्ने अनयोः कर्तृकर्मणोः आख्यातार्थत्वे तिङर्थत्वे किं प्रमाणम् ? प्रमाणं नास्तीत्यर्थः ।

न च पचति पच्यत इत्यादौ क्रमेण कर्तृकर्मविषयकप्रतीतिरेव तयोराख्यातार्थत्वबोधिकेति वाच्यम् । तस्या लक्षणादिनापि लाभसम्भवात् तदाह—**प्रतीतेरित्यादि** । तत्र प्रतीतेर्लक्षणया सम्भवात्, आक्षेपात्सम्भवात् वा प्रथमान्तपदासम्भवात्—इत्येवमन्वयो बोध्यः ।

अयं भावः—न्यायनये कृतिवाचकस्यापि आख्यातस्य कर्तृकर्मणोर्लक्षणा, मीमांसकमते च व्यापारवाचकस्यापि तस्याश्रये लक्षणेति तथैव तयोर्बोधोपपत्तौ न तिङस्तत्र शक्तिः कल्पयितुं शक्या, न चाख्यातस्य कर्तृकर्मलक्षकत्वे न्यायनये कृतिप्रतीतिर्मीमांसकमते च भावनाप्रतीतिर्न स्यात्, तदर्थं तत्र शक्तौ कर्त्रादिर्बोधासम्भवः। युगपद्वृत्तिद्वयन्तु न, यौगपद्यविरोधात्। विरोधश्च तयोर्ज्ञानानामयौगपद्याद्बोध्यम्, विश्वनाथपञ्चाननोऽप्याह—अयौगपद्यादिज्ञानानामित्यादि भावनाश्रयत्वेन भावनाश्रये लक्षणायान्तु न्यायनये भावनाया द्विधाभानापत्तिः। मीमांसकमते च भावनायाः शाब्दबोधे प्राधान्यानापत्तिः। विशेषणतयोपस्थितेरुपस्थितिशाब्दबोधयोर्विशेषविशेषणभावस्य सजातीयत्वनियमादित्यत आह—आक्षेपाद्विति। अयमर्थो मीमांसकमते कर्तृकर्मणो विना अनुपपद्यमाने तिङर्थभावनाधात्वर्थफलेऽर्थापत्तिप्रमाणेन कर्तृकर्मणो आक्षिपतः। 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यादौ भोजनं विनाऽनुपपद्यमानत्वेन पीनत्वेन रात्रिभोजनाक्षेपवत्। न च शाब्दबोधे वृत्तिजन्योपस्थितेर्हेतुत्वेन कथमत्राक्षेपमात्रेण शाब्दबोधनिर्वाह इति वाच्यम्, एषां नये तादृशनियमाभावात्। अत एवार्थापत्तिप्रमाणं सङ्गच्छतेऽन्यथा तद्विलोपः स्यात्। न्यायनये तु अर्थापत्तेः प्रमाणत्वाभावेनाक्षेपादित्यस्यानुमानादित्यर्थो बोधस्तथा हि वह्निं विनाऽनुपपन्नो धूमो वह्निमिव भोजनं विनाऽसम्भूतं पीनत्वं रात्रिभोजनमिव कर्तृकर्मभ्यामनुपपद्यमानौ फलव्यापारौ कर्तृकर्मणो अनुमापयतः। अनुमानप्रयोगश्च फलव्यापारौ क्वचिदाश्रितौ गुणत्वात्, यो यो गुणः, स स क्वचिदाश्रितो यथा रूपादिः (वा) फलव्यापारौ समाश्रयौ कार्य्यत्वाद् घटवदिति बोध्यम्।

ननु न्यायनये शाब्दबोधं प्रति वृत्या पदजन्यपदार्थोपस्थितेः कारणत्वेनानुमितस्यापि कर्तुः कर्मणश्च शाब्दबोधे भानं न स्यात्, किञ्च, व्याप्तिज्ञानाभावदशायामपि तयोर्बोधोऽभीष्टः, स नेदानीं सिद्ध्येत्। मीमांसकमते च तादृङ्नियमाभावेन शाब्दबोधविषयत्वसिद्धावपि पदार्थः पदार्थेनान्वेतीति नियमादाख्यातार्थसंख्यायास्तत्रान्वयो न स्यात्। उक्तं च—"शाब्दीया ह्याकाङ्क्षा शब्देनैव प्रपूर्यते" इति। अस्यार्थस्तु शाब्दी शाब्दबोधविषयी, आकाङ्क्षा जिज्ञासा शब्देनैव पदनिष्ठवृत्या पदार्थोपस्थितिद्वारा प्रपूर्यते निवार्यते। किञ्च यस्यानुपपत्तिप्रतिसन्धानं नास्ति तस्याप्याश्रयविषयकबोधोऽभीष्ट इत्याख्यातस्य तत्र शक्तिरावश्यकीत्यत्र आह—प्रथमान्तपदाद्वेति। अयमर्थः—देवदत्तौदनादिपदैरेवाश्रयमानोपपत्तौ पुनस्तत्राख्यातशक्तिकल्पनाऽप्रामाणिकीति शङ्कोत्थानग्रन्थः। वस्तुतः पचति पच्यत इत्येतावन्मात्रोक्तावप्याश्रयबोधोपपत्तय आख्यातशक्तिस्तत्र दुर्निवारेति नेदं प्रसज्यते। स्वमतेनोत्तरयति। अत्रोच्यते—अत्र अस्यां त्वदीशङ्कायाम् उच्यते कथ्यते किं तत्राह—'लः कर्मणि चेति' सूत्रमेवेति। अत्रैवशब्दोऽप्यर्थकस्तेन सूत्रमपीत्यर्थः। मानं कर्तृकर्मणोराख्यातार्थत्वे इति शेषः। नन्वस्य सूत्रस्य कर्मशक्तिग्राहकत्वेऽपि कर्तरिशक्तिग्राहकत्वं नोपपद्यते, तत्र कर्तृपदाभावादित्यतः आह अत्र हीति। अत्र अस्मिन्

सूत्र वाक्यद्वयेऽपीति शेषः । चकारात् चपदाद् अनुकृष्यते । अनुकर्षणेनानीयते न चानुकर्षकचकाराणां भाष्ये प्रत्याख्यानात्कथमत्र तदनुकर्षणमिति वाच्यम्, स्वरितत्व-प्रतिज्ञया तदनुवृत्तेस्तदा सत्त्वात् । ननु तथा सूत्रेण लकारस्य कर्तृकर्मार्थकत्वसिद्धावपि तिङर्थत्वे प्रमाणाभावोऽस्त्येव । न च स्थान्यर्थ एवादेशार्थ इति सिद्धान्तातित्तङर्थसिद्धिरिति वाच्यम्, लकारस्याप्रयोगेण तत्र बोधजनकतारूपशक्तेरग्रहादित्याशयेनाह - **बोधकता-रूपमित्यादि** ।

अत्रेदमाकूतम्—तिङां प्रयोगेण लकाराणामप्रयोगेण च शक्तिग्राहकशिरो-मणिना व्यवहारेण तिङ्क्षु बोधकतारूपा शक्तिः सिद्ध्यति । न चैवं सूत्रस्य प्रयोगो-पन्यसनं ग्रन्थकृतामसङ्गतमेवेति वाच्यम्, लाघवेन शास्त्रप्रक्रियानिर्वाहाय तिङ्स्थानि-रूपेण लकारे स्थानित्वं प्रकल्प्य "अर्थवत्येव स्थान्यादेशभावविश्रान्ति"रिति नियमात् लकारेऽपि तां तिङ्निष्ठां शक्तिमारोप्य सूत्रेण लः कर्मणि कर्तरि विधीयते इति रीत्या सूत्रस्य मानसत्वात् तिङ्शक्त्यभावे तदारोपस्य लकारेऽसम्भवात् सूत्रेण तत्र तद्विधान-मत्यन्तमसमञ्जसमेव स्यात् । आदेशवृत्तिशक्तेः स्थानिनि आरोपेण सूत्रेण विधाने दृष्टान्तमाह—**नकारविसर्गादिनिष्ठामिति** । यथा रामान् रामैरित्यादौ नकारादित्येव कर्मकरणादिरूपार्थप्रतीत्या तन्निष्ठैव तच्छक्तिर्न तु शसादिनिष्ठा; परन्तु तां शसादा-वारोप्य सूत्रैः शसादयस्तत्र विधीयन्ते तद्वत्प्रकृतेऽपि आरोपेण विधानं बोध्यम् । सूत्रे कर्तृकर्मपदयोर्धर्मिपरत्वेन वैयाकरणैः सूत्रं प्रमाणत्वेनोपन्यस्तम् । तत्र धर्मपरत्वेन मीमांसकादिभिः शङ्क्यते, न च सूत्र इत्यादि ।

अयमाशयः—यदि सूत्रस्थे कर्तृकर्मपदे धर्मिपरे स्याताम्, तदाकृत्याश्रये कर्तृपदस्य धात्वर्थफलाश्रये कर्मपदस्य सङ्केतिकतया तयोः शक्यतया प्रकृतिजन्यबोध इति न्यायेनानन्तानां कृतीनां भावनानाम्, धात्वर्थफलानां च शक्यतावच्छेदकत्वे गौरवं स्यादतो लाघवाद्धर्मपरत्वमङ्गीकरणीयम्, धर्मपरत्वे च कृतिफलानां शक्यत्वेन तद्वृत्तिधर्मस्य जातिरूपस्य कृतित्वकर्मत्वरूपस्य कृतित्वस्य फलत्वस्य च लाघवमिति कृतिफलयोस्तिङर्थत्वलाभोऽपि कर्तृकर्मणोस्तदर्थत्वे प्रमाणाभाव एवेति उत्तरयति—**फलव्यापारयोर्धातुलभ्येति** । अयम्भावः यतः फलव्यापारौ धातुशक्त्यैव लब्धाविति 'अनन्यलभ्य' इति न्यायेन पुनस्तिङर्थतां प्राप्नुवन्नार्हतः । यद्यपि न्यायेन कृत्रो यत्नार्थकत्वेन तत्प्रकृतिकभावकृदन्तकृतिपदस्यापि यत्नार्थकत्वेन तस्य सामान्यतो धात्वर्थत्वाभावान्तरस्याख्यातार्थत्वे नोक्तन्यायावसरस्तथापि काष्ठानि पचन्ति ओदनः पच्यते इत्यादिप्रयोगेऽचेतने तदाश्रयत्वाभावेन वाक्यस्य सत्त्वात् किञ्च कृतिपदेन व्यापारग्रहणे बोधावृत्तिरपि न्यायनये दोषो बोध्यः ।

पुनर्मीमांसकः शङ्कते—**दर्शनान्तरीयरीत्येति** । दर्शनं शास्त्रम्, अन्यद् दर्शनं दर्शनान्तरम् । मयूरव्यंसकादित्वात्समासः । तत्र भवा दर्शनान्तररीत्या 'गहादिस्वाच्छः'

( अष्टा० ४।२।१३८ ) सा चासौ रीतिस्तया भावार्थविकरणस्थमीमांसकरीत्येत्यर्थः। तत्र हि धातूनां विक्लित्त्यादिफलमेवार्थो न तु व्यापारः स तु तिङर्थ एव तिङपेक्षया बहूनां धातूनां तत्र शक्तिकल्पनाऽपेक्षयाऽल्पानां तिङां शक्तिकल्पने लाघवात् पचतीत्यादौ भावनार्थककरोतिनाऽऽख्यातस्य विवर्णदर्शनाच्च भिन्नार्थत्वे विवर्णन्तु न युक्तम्, विवर्णविव्रियमाणयोः समानार्थकत्वनियमात्, अन्यथा तेन तदर्थनिर्णयानापत्तिः।

न च क्रियापदस्य व्यापारे रूढत्वेन व्यापारस्य धात्वर्थत्वाभावे तेषां क्रियावाचित्वाभावाद्धातुत्वं न स्यादिति वाच्यम्, कर्मवत्कर्मणेति सूत्रे फलस्यापि क्रियापदेन ग्रहणदर्शनेन धातुसंज्ञाविधायकेऽपि क्रियापदेन फलग्रहणे बाधकाभावाद् इत्यादि प्रपञ्चितम्। एवञ्च व्यापारस्य धात्वर्थत्वाभावे अनन्यलभ्य इति न्यायविषयाभावात् कृतिस्वरूपे व्यापारे फलस्य धात्वर्थत्वेन न्यायविषयत्वेऽपि फलाश्रयत्वरूपे कर्मत्वे लकारविधानं स्यात्। उत्तरयति—"इति चेत्तर्हि" इति। अयमाशयः यदि लाघवात्तिङां कर्तृत्वकर्मत्वरूपं धर्ममात्रमित्यर्थः स्वीक्रियेत, तर्हि तुल्यन्यायेन कर्तृकर्मार्थविहितानां ण्वुल्-तव्यदादीनामपि धर्ममात्रवाचकत्वेन कर्त्रादिवाचित्वं न स्यात्, तथा च कृतां धर्मिवाचित्वमिति तव सिद्धान्तव्याकोपः स्यात्, ग्रामो गन्तव्य इत्यादौ सामानाधिकरण्यभङ्गश्च स्यात्।

ननु कर्तरि कृत् तयोरेवेति सूत्रेषु कर्त्रादिपदस्य परत्वेन तेषां कर्त्रादिवाचित्वं सिद्ध्यतीत्यत आह—**कर्तरि कृदिति**। अत्र चेतनयोरेवेत्यादि संग्रहः। तुल्ययोगेति अलब्धस्य लाभो योगः। लब्धस्य परिरक्षणं क्षेमः। योगश्च क्षेमश्च योगक्षेमौ तुल्यौ योगक्षेमौ यस्य तत्। अस्यायमर्थः—कर्तरि कृदित्यत एवात्र कर्तृपदमनुवर्तते, तच्च यदि तत्र धर्मपरं भवेत्तदा त्वत्रापि तथा स्यात्। यदि च तत्र धर्मिपरं तदाऽत्रापि तथैव तथा च यथा तत्र धर्मिपरत्वेन कृतां कर्तृकर्मत्ववाचित्वमेव तथा लः कर्मणीति सूत्रेऽपि तिङामाश्रयवाचित्वमक्षतम्, सिद्धान्तानुरोधेन मीमांसकैस्तत्र धर्मपरत्वस्यास्वीकारात्। न च शक्तिः कारकं शक्तिमत्कारकमिति पक्षद्वयस्यापि आकारसिद्धतया तिङ्कृतोर्व्यवस्थितत्वाश्रयणेन निर्वाह इति वाच्यम्, तावतापि वैषम्ये बीजाभावात्। शब्दाधिकाराश्रयणेन निर्वाहस्तु न सति गमक एव तस्य स्वीकारात्, गमकाभावे तु शब्दाधिकारेऽर्थस्य हानोपादानेन गौरवादर्थाधिकार एव स्वीक्रियते। लाघवस्य गमकत्वं चेत्तर्हि कृत्स्थलेऽपि लाघवमनुस्रियताम्। न च लाघवानुसरणस्य तौल्येऽपि देवदत्तः पक्तेत्यादौ देवदत्तादिभिः सममभेदान्वयाय लाघवानादरस्तिङः स्थले च प्रतिबन्धकाभावाऽभावात्तदादर इति वाच्यम्, प्रकृतेऽपि देवदत्तः पचतीत्यादौ अभेदान्वयलाभाल्लाघवानादरस्यावश्यकत्वेन धर्मिवाचकत्वे बाधकाभावात्।

ननु कृत्स्थले भावनां विनाऽनुपपद्यमानेन तदर्थभूतेन कर्त्राक्षेपेणैव भावनाबोधसम्भवान्न धर्मपरता तिङ्स्थले तु तस्या धात्वर्थाभावेनाक्षेपाऽसम्भवेन च तद्बोधासम्भवाद्धर्मपरता परमावश्यकी, कर्त्रादिबोधस्तु भावनाक्षेपेणैव न स्यादिति शङ्कापनोदायाह—

**अपि चेति।** अपि च किञ्च मीमांसाशालिनां भवतां कृतां कर्तृवाचित्वमिव आख्यातानां तिङ्प्रत्ययानां कर्तृवाचित्वमित्यनुषज्ञ्गोऽस्तु । अयं भावः—मीमांसकैर्यथा व्यापारस्य धात्वर्थत्वाभावेऽपि धर्मपरत्वेन तस्य कृत्प्रत्ययार्थत्वन्नाङ्गीक्रियतेऽपि तु तदर्थः कर्त्राद्यस्त्वेऽपि व्यापारस्य तदर्थाक्षेपेणैव लाभसम्भवात् तिङां व्यापारवाच्यकल्पनं मीमांसकानाममीमांसकत्वसूचकमेव । ननु तिङां धर्मिवाचकत्वे भावनाप्रतीतिर्न स्यादित्यत आह—**भावनाया एवेति।** कृतादिवदित्यत्र सप्तम्यन्ताद्वतिः । आदिपदात्कर्त्राद्यर्थकेत्यादितद्धितपरिग्रहः । तथा च कृदादिस्थले यथाऽऽक्षेपेणैव भावनाप्रत्ययो न तु प्रत्ययार्थत्वं तस्यास्तथा तिङ्स्थलेऽपि प्रत्ययार्थत्वाभावेऽप्याक्षेपेणैव भानं स्वीक्रियतां किमर्धजरतीयाश्रयणेनेति भावः ।

ननु विशेष्यतासम्बन्धेन शाब्दबुद्धित्वाऽवच्छिन्नं प्रति शक्तिजन्योपस्थितिः कारणम्, 'वाच्यस्यैव प्राधान्यम्' इति नियमः । अत एव जलमानयेत्यादौ आक्षिप्तपत्रादेः प्राधान्यं न, तथा च कृदन्ते कर्तुः प्राधान्याय प्रत्ययार्थत्वम्, व्यापारस्य तद्वारणायाऽऽक्षेपलभ्यत्वं तिङन्ते तु व्यापारस्याभीष्टप्राधान्यलाभाय प्रत्ययार्थमप्रधान्याय च कर्तुराक्षेप इति शङ्कायामाह—**तथासतीति।** तथासति आक्षेपलभ्यत्वे सति तस्या भावनायाः प्राधान्यं विशेष्यताया **बोधो न** स्याद् न भवेत्, अतः प्रत्ययवाच्यत्वमावश्यकत्वमिति शेषः । उत्तरयति इति चेन्न, घटमानयेत्यादाविति आकृत्यधिकरणन्यायेन जातिशक्तिवादिनां मीमांसकानां नये यथा जातेरानयनकर्मत्वाऽन्यथाऽनुपपत्त्या तदन्वयोपपत्तये जात्याक्षिप्तव्यक्तेरपि प्राधान्यम्, पूर्वनियमविरोधस्तु न, तस्यानित्यत्वस्वीकारात् । तथैव तिङन्ते कर्त्राक्षिप्तभावनाया अप्यनुभवसिद्धिप्राधान्योपपत्तिरिति भावः ।

न च यः प्रत्ययार्थः स प्रधानमिति वक्ष्यमाणनियमेन प्रत्ययार्थस्य कर्तुरेव प्राधान्यं स्पन्दनत्वाक्षिप्तभावनाया इति वाच्यम् , गोमन्तमानयेत्यादौ प्रत्ययार्थसम्बन्धस्य प्राधान्यादर्शनेन तादृशनियमस्य व्यभिचारात् । ननु भावनार्थककरोतिना विवरणदर्शनेन विवरणविव्रियमाणयोः समानार्थकत्वनियमात्तिङो धर्म्मवाचकत्वमावश्यकमित्याशयेन शङ्कते । **पचतीत्यादाविति।** पचतीत्यादौ पाकं करोतीति विवरणदर्शनाद् भावनाया वाच्यत्वमित्येवमन्वयः । उत्तरयति इति चेन्न, तत्र हेतुमाह—**पाकानुकूलेति।** अयमर्थः –यथा करोतीति विवरणो नाख्यातस्य भावनार्थत्वन्तथैककर्तृकपचिक्रियेति विवरणदर्शनेन कर्तर्येव शक्तिः कथन्नङ्गीक्रियत इति । ननु पचतीत्यादावशब्दार्थस्यापि कर्मत्वस्य, पाकं करोतीति द्वितीयया तात्पर्य्यतो विव्रियते, यथा वा घटपटावितीतरेतरयोगद्वन्द्वसमासेऽशब्दार्थभूतस्याऽपि समुच्चयांशस्य "घटश्च

पटश्चेति" चकारेण तात्पर्यवशतो विव्रियते, तथा तिङन्तस्थले कर्तृविवरणं तात्पर्यविषयीभूतमेति न तेन तस्य प्रत्ययार्थत्वं साधयितुं शक्यत इत्याशयेन शङ्कते। न च कर्तृविवरणमिति खण्डयति—इति वाच्यमिति, हेतुमाह भावनायामपि तुल्यत्वात्।

अयं भावः—कर्तृविवरणमिव भावनाविवरणमपि तात्पर्यार्थविवरणमित्यस्यापि वक्तुं शक्यत्वे तस्य भावनाया आख्यातार्थसाधकत्वाभावात् शब्दार्थस्यैव विव्रियमाणत्वमित्यस्य पूर्वोक्तरीत्या वक्तुमशक्यत्वात्। किञ्च, यदि तिङन्तस्थले प्रत्ययस्य धर्मिवाचकत्वं न स्यात् तदा प्रत्ययानभिधानेन सामानाधिकरण्याभावाद् देवदत्तः पचतीत्यादाव भेदान्वयानुपपत्तिरिति देवदत्तः पक्तेति कृदन्तस्थलेव तिङन्तस्थलेऽपि कर्तुः प्रत्ययार्थत्वंमीमांसकैरपि स्वीकरणीयमेव।

नन्वेवमपि देवदत्तेत्यादौ देवदत्तादिना सममभेदान्वयलाभाय कृतामाश्रयवाचकत्वम्, तिङां तु लाघवाद्धर्मवाचकत्वं युक्तमित्यत आह—किञ्च, 'पचति देवदत्तः' इति। अयम्भावः—देवदत्तः पक्तेत्यत्राभेदान्वयानुरोधात्कर्तुर्वाच्यत्वम्, तथा देवदत्तः पचतीत्यत्रापि देवदत्ताभिन्नैककर्तृको वर्तमानकालिको व्यापार इत्येवमभेदान्वयस्य दर्शनात् तिङामाश्रयवाचकत्वमावश्यकम्। अभेदान्वये प्रमाणाभावस्तु न, अन्यकर्तृकपाकदशायां देवदत्तः पचतीति प्रयोगदर्शनस्य प्रमाणसत्त्वात्। शङ्कते—न चाभेदबोधे समानविभक्तिकत्वं नियामकं प्रयोजकम्, अर्थाद् विशेष्यवाचकपदोत्तरविभक्तिसजातीयविभक्तिप्रकृतिकविशेषणवाचकपदजन्योपस्थितिर्यत्र तत्रैवाभेदान्वयोऽन्यथा नीलो घटमानयेत्याद्यपि स्यात्। तथा च प्रकृते तदभावात्कथमभेदान्वयसम्भवस्तदाह—तच्च तत्र नास्तीति। न च विभक्तित्वादिधर्मेण साजात्यमस्त्येवेति वाच्यम्, विभक्तिविभाजकप्रथमात्वादिना साजात्यस्य ग्रहणात्। अन्यथा नीलस्य घट इत्याद्यपि स्यात्। एकवचनत्वादिनाऽपि साजात्याश्रयणं न पूर्वोक्तदोषाऽनिस्तारात्, वेदाः प्रमाणमित्यादौ अभेदबोधनापत्तेश्च। अत एव समानानुपूर्वीकत्वेनापि न साजात्यम्। उत्तरयति—सोमेन यजेतेत्यादि। अयम्भावः—पूर्वोक्तनियमस्वीकारे विभिन्नविभक्तिप्रकृतिकत्वात् सोमस्य यागे सत्त्वात्तस्मात्स नियमस्त्वदीयैस्त्यक्तव्य एव। सोमस्य स्वतन्त्रतया करणत्वेन भावनायामन्वयस्तु न, यागस्यापि तत्र करणत्वेन वाक्यभेदप्रसङ्गात्, यागार्थत्वानुपपत्तेश्च। एवं स्तोकं पचति इति क्रियाविशेषणस्थले सजातीयविभक्तित्वाभावेन व्यभिचारो बोध्यः।

ननु प्रातिपदिकार्थस्य प्रातिपदिकार्थे यत्राभेदान्वयविवक्षा तत्रैव स नियमस्तत्राहुगदाधर भट्टाः—अभेदश्च प्रातिपदिकार्थे इत्यादीति। पूर्वोक्तस्थलद्वयेऽभेदान्वयेऽपि न व्यभिचारावसर इति चेदत्राह राजपुरुषावित्यादाविति। अयम्भावः—यद्यपि शाब्दिकनये वृत्तावेकार्थीभावकल्पनया पदार्थद्वयाभावेनाभेदान्वयाभावः; परन्तु व्यपेक्षावादिनैयायिक;

मीमांसकमते राजपदस्य राजसम्बन्धिनि लक्षणायां प्रातिपदिकार्थयोरभेदान्वयसत्त्वेन व्यभिचारोऽस्त्येव । यदि तु तत्रापि व्यभिचारवारणाय कार्यकारणभावान्तरस्य स्वीकारस्तथा हि अभेदसम्बन्धेन शाब्दबोधं प्रति विशेष्यवाचकपदाव्यवहितपूर्ववर्तिविशेषणवाचकपदजन्योपस्थितिरर्धपिप्पल्याद्यर्थं स्वव्यवहितोत्तरवर्तिपदजन्योपरिस्थितिरपि कारणमिति न व्यभिचार इत्युच्यते , तदा देवदत्तः पचति इत्यादौ स्तोकं पचतीतिवत् प्रातिपदिकार्थद्वयाभावादेवाभेदान्वयोपपत्तिः। पुनः शङ्कते—नन्वाख्यातस्य भावनार्थे शक्तत्वेऽपि कर्त्रादौ तस्य लक्षणयाऽभेदान्वयबोधसिद्धिस्तत्राह **न च लक्षणयेति**। उत्तरयति **पिङ्गाक्ष्यादि यौगिकेति**। अयमर्थः यदि प्रकृते लक्षणया समानाधिकरणाय निर्वाहात्कर्त्रादौ शक्तिर्न स्वीक्रियते, तदा पिङ्गे अक्षिणी यस्या इत्यादिविग्रह निष्पन्नपिङ्गाक्ष्यादिशब्दानां तया विश्वेदेवा देवता यस्या इत्याद्यर्थकवैश्वदेव्यादिपदघटकतद्धितानामपि द्रव्यवाचित्वानापत्तेः। सामानाधिकरण्यस्य लक्षणयैव निर्वाहात्। नन्वनेकमन्यपदार्थं इति सूत्रेणान्यपदार्थे बहुव्रीहिविधानात् पिङ्गाक्ष्यादियौगिकानाम्, सास्य देवतेति सूत्रेण च षष्ठोप्रकृत्यर्थे प्रत्ययविधानात्तद्धितानामपि द्रव्यवाचकत्वमक्षतमित्यत आह—'अनेकमन्यपदार्थे' इत्यादि। अस्यान्वयस्तु पिङ्गे अक्षिणो यस्याः, विश्वेदेवा देवता अस्या इति विग्रहदर्शनाद् अनेकमन्यपदार्थे, सास्य देवतेत्यनुशासनेन प्रधानषष्ठ्यर्थ एवानुशासनलाभादित्येवं बोध्यः । अयमर्थः—विग्रहतः प्रकृत्यर्थविशेषणको विभक्त्यर्थसम्बन्धः प्रतीयत इति सम्बन्धवाचित्वसिद्धावपि द्रव्यवाचित्वं नोपपद्यते सूत्रैरिति ।

ननु मास्तु द्रव्यवाचित्वं तत्र लक्षणैव स्वीक्रियतामित्यतो लक्षणायां दोषमाह—**तथा चेति**। तथा च लक्षणास्वीकारे च द्रव्यस्य वाचकत्वं तस्य साधिका सा चासौ मूलयुक्तिर्मुख्ययुक्तिः, तद्रूपस्य सामानाधिकरण्य 'पिङ्गाक्षी गौः वैश्वदेवी अभिक्षा' इत्येवंरूपस्य उक्तरीत्या सम्बन्धिलक्षणया उपपत्तेः सिद्धेः अरुणया पिङ्गाक्ष्या एकहायन्या 'सोमं क्रीणाति' इति वाक्ये अरुणादिपदैरिति, शेषः द्रव्यानुक्तेः द्रव्यानाभिधानाद्धेतोः आरुण्यस्य अरुणपदोपात्तारुण्यगुणस्य स्ववाक्योपात्तद्रव्य एव क्रयणभावनावाचकपदघटितवाक्यघटकपिङ्गाक्ष्यादिपदप्रतिपाद्यगवादावेव अन्वयप्रतिपादकारुणाधिकरणे छेदापत्तिः, अन्वयसमर्थनपरकरुणाधिकरणस्य विरोधापत्तिरित्यर्थः। तथा हि आकृत्यधिकरणन्यायेनारुणपदस्य गुणमात्रवाचितया अरुणेति वाक्ये आरुण्यस्य प्राकरणिकद्रव्ये सम्बन्धः, उत क्रीणातिनेति सन्देहानन्तरममूर्तस्य तस्य क्रयणकरणत्वासम्भवेन न क्रीणातिना तदन्वयोऽपि तु प्राकरणिकद्रव्यमुद्दिश्यारुण्यविधानं ततो वाक्यभेदेन क्रीणातावन्वय इति पूर्वपक्षं कृत्वा पिङ्गाक्ष्यादिपदानां द्रव्यवाचितया सन्निहितपदार्थेऽन्वये सम्भवति सति —'अन्यत्रान्वयो न युक्तः' इति न्यायेन पिङ्गाक्ष्यादिपदार्थ एव तदन्वयो न तु प्राकरणिकपदार्थे,

तद्द्वारा च क्रीणातावपि तदन्वय इति सिद्धान्तितम्। यदि पिङ्गाक्ष्यादिपदानि लक्षणया द्रव्यार्थकानि स्युस्तर्हि शक्त्योपस्थितस्यैव पदार्थत्वेन द्रव्यस्य सन्निहितपदार्थत्वाभावात् न्यायाप्रवृत्त्या सिद्धान्तविरोधः स्पष्ट एव। तथा पिङ्गाक्ष्यादिपदार्थसम्बन्धस्याप्यमूर्तत्वेन क्रीणातावन्वयासम्भवस्य तुल्यतयारुणपदार्थमात्रे पूर्वपक्षकरणमप्यसङ्गतं स्यात्। एवं वैश्वदेव्यादिघटकतद्धितानां द्रव्यवाचित्वाभावे 'आमिक्षां देवतायुक्तां वदत्येवैष तद्धित" इति भट्टसिद्धान्तो विरुद्ध्येत। तथा गुणाधिकरणविरोधोऽपि स्यात्। तथा हि 'तप्ते पयसि दध्यानयति सा वैश्वदेव्याऽऽमिक्षा, वाजिभ्यो वाजिनमि"ति वैश्वदेवपर्वणि श्रूयते, तत्र वाजिभ्यो वाजिनमिति वाक्येन कर्मान्तरं विधीयते, उत विश्वताकयागे वाजिनरूपगुणविधानमिति सन्दिह्य वाजः आमिक्षारूपमन्नमस्त्येषामिति व्युत्पत्त्या वाजिपदमहिम्ना प्रकान्तयागे गुणमात्रविधानमिति पूर्वपक्षः कृतः। ततस्तद्धितश्रुत्या वैश्वदेवीपदार्थस्याऽऽमिक्षासम्बन्धस्य पूर्वमेव जातत्वेन नैराकाङ्क्ष्यात्तस्य वाजिनपदार्थेऽन्वयो भवितुं नार्हति इति कर्मान्तरमेव तदिति सिद्धान्तितम्। द्रव्यवाचित्वाभावे तु तद्धितश्रुत्याऽऽमिक्षया सम्बन्धोक्तिरसङ्गतैव स्यादिति प्रपञ्चितं विस्तरेण बृहद्वैयाकरणभूषणे। प्रपञ्चस्तु उक्तप्राय एव।

ननु तिङां कर्त्राद्यर्थत्वे नानृतं वदेदिति श्रुतौ आख्यातश्रुत्या कर्तुरुपस्थितत्वात् श्रुतिलिङ्गवाक्यप्रकरणेति जैमिनोयसूत्रेण निषेधस्य पुरुषार्थत्वप्रतीत्या ततोऽनृतभाषणेऽपि प्रायश्चित्तानापत्तिरिति चेन्न, क्रतुयुक्तपुरुषार्थताङ्गीकारेणेत्यादिसमाधानस्य मूल एव करिष्यमाणत्वात्। ननु लः कर्मणीति सूत्रेण लकारस्य कर्त्रादौ शक्तिबोधितत्वेन तिङां तदर्थकत्वमसङ्गतमित्यत आह—**बोधकतारूपेति**। शक्तिग्राहकशिरोमणिना व्यवहारेण बोधकतारूपा शक्तिस्तिङ्क्ष्वेव, शास्त्रेण तु तत्स्थानित्वेन कल्पिते लकारे कल्पिता शक्तिस्तत्र बोध्यत इति भावः। ननु व्यवहारे वाक्यस्यैव मुख्यतया प्राधान्यात् पुरा तदर्थकथनं युक्तम्, न तु पदार्थकथनमित्यत आह—**पदार्थं निरूप्येत्यादि**। वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वात् पूर्वं पदार्थनिरूपणम्, ततो निराकाङ्क्षतया वाक्यार्थनिरूपणम्। निरूपितत्वं सप्तम्यर्थमादायाह—**फलं प्रतीति**। यद्यपि "सुपात्मनः" इति सूत्रस्थभाष्यात्कर्मप्रत्ययस्थले फलस्यैव प्राधान्यमिति कर्तृप्रत्यय इत्यनुक्त्वा सामान्यतः फले प्राधान्यमित्युक्तिर्ग्रन्थकृतामसङ्गता; परन्तु एतेषां मते तिङन्तमात्रे व्यापारविशेष्यकबोधस्यैवेष्टतया स्वव्युत्पत्त्यनुसारेण तदुक्तिः साध्वी। तिङर्थपदार्थमाह—**कर्तृकर्मसंख्याकाला** इति चत्वारस्तदर्थं इति भावः।

ननु संख्याकालयोरपि तदर्थत्वे 'आश्रये तु तिङ' इति ग्रन्थोक्तिविरोध इति चेन्न, संख्याकालयोराख्यातार्थत्वे विप्रतिपत्त्यभावेन कर्तृकर्मणोश्च विप्रतिपत्त्याश्रयेण तद्विषयकलेखस्यैवोचितत्वात्। तिङर्थानां मध्ये कस्य किं विशेषणमित्यपेक्षायामाह—**तत्र कर्तृकर्मणोत्यादि**। नात्र यथासंख्यमिति कर्त्रा व्यापारे कर्मफले विशेषणमित्यर्थः।

ननु विशेष्यताया विशेषणतायाश्च यत्किञ्चित्सम्बन्धावच्छिन्नाया नेयत्वेन विशेषणतावच्छेदकः सम्बन्धः क इति चेत्, वृत्तित्वमिति गृहाण, आख्यातार्थसंख्यातदर्थयोः कर्तृकर्मणोरवच्छेद्यावच्छेदकसम्बन्धेन आश्रयत्वेन वा अन्वेति। तद्विभागमाह—कर्तृप्रत्यये कर्तरि कर्मप्रत्यये कर्मणोति। अत्राविशेषणमिति पदमनुषज्यते। ननु सुबर्थसंख्यावद् अस्या अपि प्रकृत्यर्थे फले व्यापारे वा कुतो नान्वय इति चेन्न, धात्वर्थस्यासत्त्वरूपतया तदर्थान्वियस्यासम्भवात्। नन्वेवमपि कर्तृप्रत्यये कर्मणि कर्मप्रत्यये कर्तरि वा प्रथमान्तार्थे कथन्नान्वय इत्यत आह—समानप्रत्ययोपात्तत्वादिति समानश्चासौ प्रत्ययः समानप्रत्ययस्तेनोपात्तमिति च तत एकशेषे तयोर्भाव इत्यर्थे त्वप्रत्ययस्तस्मात्। अर्थाद् येन प्रत्ययेन संख्योपात्ता, तेन य उपात्तस्तस्मिन्नेव प्रत्यासत्त्या "श्रुतिलिङ्ग"ति जैमिनोयसूत्रेण वा तदन्वयः।

ननु समानप्रत्ययोपात्तत्वेति हेतुना कालेऽपि तदन्वयः स्यादित्यत आह—तथा चेत्यादि। अयम्भावः—आख्यातर्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति आख्यातजन्यकर्तृकर्मान्यतरोपस्थितिः कारणमित्येवं कार्यकारणभावः कल्प्यते, तथा चैतादृक् कार्यकारणविरोधान्न काले नान्यत्र वाऽऽख्यातार्थसंख्याऽन्वय इति भावः। आख्यातस्याश्रयवाचकत्वं दर्शयन्नैयायिकमतं प्रसङ्गतो दूषयति—नैयायिकानामित्यादिना। अत्रादिघटितः पाठोऽसङ्गतः, मीमांसकमतस्यानेन खण्डनायोगात्। नैयायिकानां मते आश्रयस्य प्रत्ययार्थत्वाभावेन आख्यातार्थसंख्यायाः प्रथमान्तार्थ एवान्वयस्वीकारादाख्यातार्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तपदजन्योपस्थितिः कारणमित्येवंरूपः कार्यकारणभावो वाच्यस्तैरिति शेषः, न तु पूर्वोक्तस्याश्रयस्य आख्यातार्थत्वाभावात्। ननु शाब्दिकाभिमतकार्यकारणभावस्थानीयस्यास्य स्वीकारे न कोऽपि विरोध इत्यत आह—सोऽपि चन्द्र इवेत्यादि। अयम्भावः—चन्द्र इवेत्यादौ चन्द्रस्वार्थयोः प्रथमान्तपदोपस्थितावपि आख्यातार्थसंख्यायास्तत्रान्वयाभावेन व्यभिचारः स्यात्, तद्वारणायेतरनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयप्रथमान्तपदजन्योपस्थितिः कारणमिति निवेशे गौरवम्।

ननु चन्द्रे आख्यातार्थसंख्याया अन्वयेऽपि क्षतिविरहो भोजनस्य चासत्त्वरूपत्वेन संख्यान्वयाऽसम्भव एवेति पूर्वोक्तनिवेशस्यासत्त्वेन न गौरवमिति चेन्न, चन्द्रे संख्यान्वये चन्द्र इव मुखे दृश्यत इत्यादौ चन्द्रस्यैकत्वेन द्वित्वान्वयासम्भवाद् दृश्यत इति द्विवचनाद्यनुपपत्तिप्रसङ्गात्तस्माच्चन्द्रे तदन्वयवारणाय पूर्वोक्तनिवेश आवश्यकः। किञ्च चैत्र इव पचतीत्यादौ "खले कपोतन्यायेन" एककालावच्छेदेनैवान्वयादितराविशेषणत्वसत्त्वात्तत्र व्यभिचारवारणायेतरविशेषणतातात्पर्याविषयीभूतार्थवृत्तिविशेष्यतया सम्बन्धेन प्रथमान्तपदजन्योपस्थितिः कारणमित्यादिनिवेशे बहु गौरवम्, तदाह—अति-

गौरवमिति। शाब्दिकनये तु चन्द्रत्वार्थभोजनयोराख्यातार्थं कर्तृकर्माभावादेव संख्यान्वयासम्भव इति न तन्मते निवेशगौरवम्, तस्मादाश्रय आख्यातार्थो मन्तव्य एव, तदाह—इदमपीत्यादि। इदमपि उपदर्शितकार्यकारणभावलाघवम्। वस्तुतस्तु निषादस्थपत्यधिकरणन्यायेन फलमुखगौरवस्य दोषानावहत्वाद्ग्रन्थकृतां गौरवदोषदानं प्रौढोक्तिरेव। कालः कस्य विशेषणमित्याकाङ्क्षायामाह—कालस्तु इत्यादि। ननु वर्तमाने लडित्यादि सूत्रे व्यापारवाचकपदाभावेनोपस्थितेरभावात् कथं तत्र तदन्वय इत्यत आह—तथा हीत्यादि। ननु धातुपदस्य संज्ञिपरत्वेम यः पचादिबोधेऽपि कथं तेन व्यापार लाभ इत्यत आह—तच्च धात्वर्थं वदतीति। अर्थाद् धातोवर्तमानत्वाद्यसम्भवात्संज्ञिपरमपि धातुपदं धातुवाच्यं बोधयतीति व्यापारलाभः। ननु धात्वर्थस्य फलव्यापारोभयरूपत्वेन कथं केवलव्यापारलाभ इत्यत आह—प्राधान्याद् विशेष्यतया भासमानत्वादिति हि तदर्थं इति दर्पणकाराः; परन्तु कर्मप्रत्यये फलस्यापि केषाञ्चिन्नये प्राधान्यसत्त्वेन नैतद्युक्तम्। वस्तुतस्तु उपजीव्यत्वेन व्यापारस्य प्राधान्यं बोध्यम्। ननु प्रत्ययोपात्तत्वेन कर्तृकर्मणोरेवान्वयः स्यादित्याशयेन शङ्कते—न च संख्याववितिं। उत्तरयति—अतीति भावनाक इत्यादि। तथा च लक्ष्यानुरोधाद् व्यापार एव तदन्वयः। वस्तुतस्तु "क्रियाभेदाय कालस्तु" इत्यादिरीत्या व्यापारे तदन्वयो बोध्यः। फलेऽपि तदन्वये दोष इत्याशयेनाह—नापि फले तदन्वय इत्याद्यवधेयम् ( ज्ञेयम्)। सिद्धान्तभूते व्यापारान्वयेऽपि अतिव्याप्ति शङ्कते फलान्वयवादी। न चामवातजडीकृतकलेवरेत्यादि। आमश्चासौ वातस्तेन जडीकृतं स्तब्धीकृतं कलेवरं शरीरम्। यस्य स तस्य उत्थानरूपफलाभावेऽपि उत्तरयति—परयत्नस्याज्ञानादित्यादि। अयं भावः—तत्र व्यापारस्य सत्त्वेऽपि तज्जन्यफलस्य विद्यमानतया व्यापारस्याप्यज्ञानान्न तादृशस्थले तादृशप्रयोगापत्तिः, प्रयोगे ज्ञानस्यैव निमित्तत्वात्।

ननु चेष्टादिलिङ्गकानुमित्या परयत्नस्यापि ज्ञानविषयत्वेन तादृशप्रयोगो दुर्वार इत्यत आह—किञ्चिच्चेष्टादिनेति। तथा चानुमित्यादिना तज्ज्ञानदशायां भवत्येव तादृशप्रयोगः। नैयायिकान् कटाक्षयन्नाह—तिङर्थो विशेषणमेवेत्यादि। ननु व्यापारस्य धात्वर्थत्वे व्यापारमुख्यविशेष्यको बोधो न स्यात्, 'प्रकृतिप्रत्ययौ सहार्थं ब्रूते' इति न्यायविरोधात्। अन्यत्र प्रकृत्यर्थस्य प्राधान्यादर्शनाच्चेति मीमांसादिप्रतिपादितमाश्रयस्याऽऽख्यातार्थबाधकं दूषयति — यद्यपीत्यादिना। अयम्भावः—यद्यप्यन्यत्र कृदन्तादिस्थले प्रकृत्यर्थापेक्षया प्रत्ययार्थस्यैव प्राधान्यदर्शनेन प्रकृतिप्रत्ययाविति वचनं सिद्धम्; परञ्च भावप्रधानमिति यास्कवचनबलेन क्रियाप्राधान्यबोधक-भूवादिसूत्रादिस्थभाष्यप्रामाण्येन च तिङन्तस्थले प्रकृतिप्रत्ययाविति नियमबाधः। किञ्च, स्त्रीप्रत्ययस्थले प्रत्ययार्थस्यापि स्त्रीत्वस्य प्रकृत्यर्थं प्रति प्राधान्यादर्शनेन व्यभिचरितः स न्याय इति धात्वर्थभूताया अपि भावनाया प्राधान्येन शाब्दबोधेन किञ्चिद्विघातकम्। यास्कवचनार्थस्तु—आख्यातं 'तिङन्तं भाव-

प्रधानम्, भावो व्यापारः प्रधानं यस्मिन् सोऽस्यास्तीति भावप्रधानम् अर्शाद्यजन्तमेतत्, व्यापारनिष्ठमुख्यविशेष्यताकबोधजनकमिति तदर्थः। एवञ्च तिङन्ते व्यापारविशेष्यकबोध इति सिद्धम्। प्रसङ्गत आह—सत्त्वप्रधानानि नामानीति। नामानि सुबन्तानि सत्त्वं द्रव्यं प्रधानं यस्मिन् बोधे सोऽस्ति एषामिति सत्त्वप्रधानानि नामानि द्रव्यनिष्ठमुख्यविशेष्यताकबोधजनकानि नामपदेनोच्यन्त इति भावः। भूवादिसूत्रभाष्ये हि पचति-भवति-पचसि-भवसि इत्यादिप्रयोगाणामनुपपत्तिमाशङ्क्य पचादिक्रिया भवति, क्रियायाः कर्त्र्यो भवन्तीति समाहितम्। एवञ्च स्पष्टमेव पचाद्यर्थक्रियाकर्तृकभवनक्रियायाः प्राधान्यमिति प्रतिपादितम्। यदि क्रियाविशेष्यकबोधो न स्यात्, तर्हि पचादिक्रिया भवतिक्रियाया कर्त्र्यो भवन्तीति भाष्योक्तमसङ्गतमेव स्यात्। परं नैयायिकानामेतदुभयविरोधो दुर्वार एवेति सुधियो विभावयन्तु।

ननु न्यायनये पचतीत्यादौ कृतिराख्यातार्थः परं सा यत्नरूपाऽन्यथा मीमांसकमतप्रवेशः स्यात्, पच्यत इत्यादौ च कर्मत्वरूपफलं तदर्थः। कर्त्ता कर्म च नाख्यातार्थः कृत्याश्रयस्य कर्तृपदार्थत्वेन प्रकारीभूतनानाकृतिरूपकर्तृत्वस्य शक्यतावच्छेदकत्वे गौरवात्। मम नये तु जातिरूपस्य कृतित्वस्य शक्यतावच्छेदकत्वेन लाघवम्। एवं फलाश्रयस्य कर्मण आख्यातार्थत्वे फलरूपकर्मत्वस्य नानात्वेन शक्यताऽवच्छेदकत्वे गौरवम्, कर्मत्वरूपफलस्य तदर्थत्वे तु फलत्वरूपकर्मत्वस्य जातिरूपतया शक्यताऽवच्छेदकत्वे लाघवम्।

न च वैयाकरणनयेऽप्याश्रयमात्रमेव कर्तृकर्माऽऽख्यातार्थः फलव्यापारयोर्धातुलभ्यत्वादित्याश्रयत्वस्य शक्यताऽवच्छेदकत्वम्, तच्चाखण्डोपाधिरूपमिति न गौरवमिति वाच्यम्, आश्रयत्वस्याखण्डोपाधित्वे प्रमाणाभावात् प्रत्युताधारतारूपस्य तस्य स्वरूपसम्बन्धे भेदेन भिन्नत्वात्। अस्तु वा तथात्वम्, तथापि लः कर्मणीति सूत्रविरोधो वैयाकरणैर्दुष्परिहर एव। न हि तेनाऽऽश्रये लो विधीयते, येन विरोधपरिहारस्स्यात्। न च कर्मणि कर्तरि इत्यस्याश्रय इत्येवार्थ इति वाच्यम्, 'स्वतन्त्र ....' इति सूत्रसत्त्वे तथा कल्पयितुमशक्यत्वात्। न च लक्षणया तथार्थकल्पना, तदपेक्षया कृत्याद्यर्थकल्पनस्यैव न्यायस्त्वात्। आश्रयादिविषयकप्रतीतिस्तु आक्षेपगम्याऽथवा संसर्गमर्यादयैव सिद्धा। कृत्यादेः प्रत्ययार्थत्वे मूलसूत्रविरोधस्तु न तत्रत्यकर्तृकर्मपदस्य धर्म्मपरत्वात्। अत एव शक्तिः कारकमिति भाष्योक्तिः, आकृत्यधिकरणञ्च सङ्गच्छते।

न च न्यायनये कर्तृकर्मणोरनभिधानाद् देवदत्तः पचतीत्यादौ देवदत्तादिपदात् तृतीया 'पच्यतेतण्डुलः' इत्यादौ च तण्डुलादिपदाद् द्वितीया स्यात्, मम तु अनभिहित इति निषेधान्नभवतीति वाच्यम्, संख्यानभिधानस्य 'अनभिहित' इत्यधिकारीयविहितविभक्तीनां प्रयोजकत्वात्। तथा च पूर्वत्र कर्तृसंख्याभिधानादुत्तरत्र च कर्मसंख्याया अभिधानान्न तृतीयाद्वितीये भवतः। संख्याया अनभिधानशङ्का तु न, तस्यास्तदर्थत्वस्य सर्वैः स्वीकारात्। एषां नये 'अनभिहिते' इति सूत्रस्यानभिहितसंख्याक इत्यर्थः। न च देवदत्तेन पच्यत इत्यादौ कर्मसंख्यावत् कर्तृसंख्याया अप्युक्तत्वेन द्वितीयावत्तृतीयाया

अप्युत्पत्तिर्न स्यादिति वाच्यम्, प्रथमान्तपदोपस्थाप्यगतसंख्याभिधानस्यैव नियमात्, अर्थाद् यस्मिन्नाख्यातार्थकृत्यादेरन्वयस्तद्गतसंख्याभिधानस्य आख्यातेन शब्दशक्तिस्वभावात् प्रत्यासत्तिन्यायाद्वा स्वीकारात्। न चैवमपि रथो गच्छतीत्यादावचेतने रथादौ कृतेर्बाधादाख्यातप्रयोगो न स्यादिति वाच्यम्, तत्र व्यापारे आख्यातस्य लक्षणास्वीकारात्। एवं घटो नश्यतीत्यत्र प्रतियोगित्वे लक्षणा, जानाति इच्छति यतते इत्यादावाश्रयत्वे लक्षणा बोध्या। गौरवानुधावनन्तु न फलमुखगौरवस्य दोषानाधायकत्वादिति। न चाश्रयस्याख्यातार्थत्वाभावे युष्मदादेस्तिङ्वाच्यकारकवाचित्वाभावात्पुरुषादिव्यवस्था न स्यादिति वाच्यम्, संख्याद्वारा सामानाधिकरण्यमादाय तदुत्पत्तेः, अर्थात् तिङ्वाच्यसंख्याश्रये युष्मदोरर्थकरणेन पुरुषव्यवस्था सिद्धयति। न च कृतामपि कर्तृकर्मादिवाचित्वं न स्यात् तिङोवाक्षेपेण संसर्गमर्यादया वा लाभसम्भवादिति वाच्यम्, आक्षिप्तस्य प्राधान्यानुपपत्तेर्वृत्त्योपस्थितेस्तत्र कारणत्वाद् नामार्थधात्वर्थयोः साक्षाद्भेदान्वयस्याव्युत्पन्नतया संसर्गमर्यादया लाभासम्भवाच्च। अत एव कर्तृत्वादिसम्बन्धेनान्वयमादाय चैत्रः पच्यते, ओदनः पचतीत्यादयो न प्रयोगाः। पचतीत्यादेरेककर्तृका पचिक्रियेत्यादिबोधाभावापत्तिरपि न, बोधस्य व्युत्पन्नानुसारित्वेन पाकानुकूलाकृतिरिति बोधस्यैवेष्टापत्तेः कर्तुं शक्यत्वात्।

वस्तुतोऽनेकाऽनेकक्लिष्टकल्पनया नैयायिकोक्तं हेयमेव। किञ्च कृत्तद्धितसमासैः संख्याभिधानस्य सर्वैरस्वीकृततया 'अनभिहिते' (अष्टा० २।३।१) इति सूत्रस्य पूर्वोक्तार्थे 'पक्वः शरयः प्राप्तोदकः' इत्यादौ द्वितीयाद्युत्पत्तिर्दुर्वारैव सर्वं वाक्यं क्रियया परिसमाप्यत इति नियमात्। क्रियावाचकपदाध्याहारेण संख्याभिधानकथनं तु न युज्यते स्थितपदाध्याहारे तदसम्भवात्, विशेषणान्तरनिवृत्तितात्पर्यके 'नीलमिदं न तु रक्तम्, शाब्दिकोऽयं न तार्किक' इत्यादौ सर्वथाऽनिर्वाहाच्चेति शम्।



# ऋग्वेदेतरवैदिकवाङ्मयेषु व्युत्पत्तिचिन्तनम्

डॉ० ओङ्कारनाथतिवारी
प्राचार्यः,
राजकीयसंस्कृतमहाविद्यालयस्य
पटना-४

❀❀❀

## माध्यन्दिनसंहितायां व्युत्पत्तिचिन्तनम्

यजुर्वेदस्य माध्यन्दिनसंहितायां पञ्चत्रिंशदुत्तरशतसंख्याकानां (१३५) शब्दानां पार्थक्येन निरूपितं निर्वचनं विद्योतते। एतेषु शब्देषु द्वापञ्चाशच्छब्दानां निश्चप्रचं निर्वचनम् ऋगथर्ववेदसंहितयोरपि जनैरालभ्यते। तद्यथा सप्तविंशति-(२७) शब्दाना-मृग्वेदमात्र एव समुपलभ्यते। अथर्वसंहितायां षण्णां शब्दानां निरुक्तिरुपलभ्यते। एकोनविंशति-(१९) शब्दानां माध्यन्दिनाथर्वसंहितयोर्निर्वचनं चक्षुषोर्विषयत्वमापद्यते। अतस्त्र्यशीति-(८३) शब्दानां निर्वचनमेव माध्यन्दिनसंहितायाः स्वातन्त्र्येण नैजं प्रतिभाति।

ऋग्वेदमाध्यन्दिनसंहितयोरुपलब्धानां शब्दनिर्वचनानां मध्ये द्वाविंशति-(२२) शब्दानां यादृशो निरुक्तिरुपचारिता, तादृशो निरुक्तिरुभयोरपि संहितयोरुपैति समताम्। पञ्चानामेव शब्दानां निर्वचनव्यापृतौ प्राप्यतेऽन्तरत्वं यद्विवृतिरधस्तने वर्तते—

१. **अमृतम्**—ऋग्वेदे कुत्साङ्गिरा[1] गोतमराहुगणश्च[2] मृतस्य विलोम्नि मरणात्मकस्य √मृधातोः क्त(त)प्रत्ययं कृत्वा न मृतममृतमिति नञ्समासेन निष्पादयति। यजुर्वेदसंहितायाम् ऋतशब्देन सम्बद्धरूपेऽस्य प्रयोगो दृश्यत इतीयदन्तरम्। अस्माकमेतादृशोऽत्र विमर्शः। यथा हि यजुर्वेदसंहितायाम् ऋतशब्देन सम्बद्धोऽमृत-शब्दप्रयोगो दृश्यते, तथापि नैतेन सम्बद्धरूपेणाऽमृतस्य निर्वचनज्ञानमुपलभ्यतेऽत ऋग्वेदयजुर्वेदयोर्निर्वचनात्मकान्तरत्वप्रतिपादनमशोभनमिति।

---

१. मर्तासः सन्तोऽमृतत्वमानशुः। (ऋ० सं० १।११०।४)

२. यो (अग्निः) मर्त्येष्वमृत ऋतावा (ऋ० सं० १।७७।१)

२. घृतम्—ऋग्वेदसंहितायां घृतमित्यस्य व्युत्पत्तिर्भ्वादिगणस्य √घृ सिञ्चने दीपने चेत्यस्माद्धातोः 'अजिघृतिभ्यः क्त' इत्युणादिसूत्रेण क्तप्रत्ययं कृत्वा क्लीबेऽभिप्रेताऽस्ति।

विचारोऽस्माकमत्रायमस्ति यदुणादिप्रकरणे क्षरणात्मक-दीप्यात्मक-जुहोत्यादिगणीय-घृधातोरजिघृतिभ्यः क्त इति क्तप्रत्ययेन क्लीबे घृतमिति निष्पादितं तत्त्वबोधिनीकारैरिति मेदिनीकोशोऽपि 'घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवदि'त्युक्त्येदमेव स्पष्टयति। चुरादिगणीयाद् √घृ प्रस्रवणे इत्यस्मादपि धातोः घृतमित्यस्य निष्पत्तिः क्तप्रत्ययेन समीचीनैव प्रतिभातीति।

घृतस्य पर्यायवाचकमाज्यमिति लेपनार्थक-दीपनार्थक-अञ्ज्धातोरभिप्रेतमिति 'ऋग्वेदे व्युत्पत्तिचिन्तन'मिति शीर्षके पूर्वमुक्तवान्[१]। माध्यन्दिनसंहितायाम् 'अञ्ज्' इत्यस्य करणरूपे घृतं[२] मत्वा समुपयुक्तार्थमस्पष्टयत्। अतो घृतार्थनिर्वचनमृग्वेदानुकूलं प्रतिभाति। आङ्पूर्वकादञ्जेः संज्ञायां क्यबन्तमाज्यमिति विमर्शकः।

३. धान्यम्—ऋग्वेदसंहितायां [३]श्यावाश्वात्रेयमते भारद्वाजबार्हस्पत्यस्य[४] च मते धारणार्थक-धाधातोः कर्मणोऽर्थे व्युत्पन्नोऽयं शब्दः; किन्तु माध्यन्दिनसंहितायां प्रीणनार्थक-धिधातोर्निष्पद्यते धान्यमिति[५]। कृष्णयजुर्वेदेऽपि[६] व्युत्पत्तिरियमेवाऽभिप्रेतास्ति।

परवर्तिन आचार्याः ऋग्वेदीयामेव [७]व्युत्पत्तिमङ्गीकृतवन्तः।

४. भारः—दीर्घतमस्-औचथ्य:, वसिष्ठमैत्रावरुणिश्चौष्ठ्यादि-भृधातोः सिद्ध्यति। कृदन्तीयाण्प्रत्ययान्त इति सङ्केतितवन्तः[८]। यदा च माध्यन्दिनसंहितायां हृधातुनिष्पन्न-'हरन्' इत्यनेन सह भारस्य[९] प्रयोगः सङ्केतितो वर्तते। अनेनाभि-

---

१. ऋग्वेदे व्युत्पत्ति-चिन्तनं द्रष्टव्यम्।

२. अश्वो घृतेन त्मन्या समक्त। (२९।१०)

३. येन तोकाय, तनयाय धान्यं बीजं वहध्वे अक्षितम्।
अस्मभ्यन्तद्धत्तन, यद्व ईमहे राधो विश्वायु सौभगम्। (५।५३।१३)

४ विश्वं स देव, प्रतिवारमग्ने धत्ते धान्यं पत्यते वसव्यैः। (६।१३।४)

५. धान्यमसि धिनुहि देवान्। (१।२०।९)

६. द्र० कपिष्ठल-कठसंहिता—१।६।

७ तुलनीयम्—निरुक्तम्—५।१२, धाना भ्राष्टे हिता भवन्ति। फले हिता भवन्तीति वा।
उणादिसूत्रम्—दधातेर्यन्नुट् च।

८. गर्भो भारं भरत्या चिदस्य। (१।१५२।३) बिभर्ति भारं पृथिवी न भूम। (७।३४।७)

९. ऊर्ध्वामेनामुच्छ्रापय गिरौ भारं हरन्निव। (२३।२६)

व्यञ्जितो भवति यत्तस्मिन्नवसरे भृधातोः स्थानं हृधातुना स्वायत्तीकृतमासीत्। फलतः प्राचीनशब्देषु विद्यमान-भृधातोर्व्याख्याकरणप्रसङ्गे हृधातुनैवार्वाचीना व्याख्यातवन्तः।

५. शमी—ऋग्वेदेऽत्रिभौमः[1], भारद्वाजबार्हस्पत्यश्च[2] स्तुत्यर्थक-शम्धातुना शमीत्यस्य व्युत्पत्तिमकुरुताम्; परन्तु माध्यन्दिनसंहितायां यज्ञीयकर्मकाण्डस्यानुकूलतया अध्वर्योः सहवर्तिनः शमितृनामकस्य ऋत्विजो लिपशोर्विदारणसंस्कारवाचक-शम्धातुना व्युत्पादितोऽयं शब्दोऽभिप्रेतोऽस्ति[3]।

माध्यन्दिनसंहिताया निर्वचनानां मुख्यतश्चत्वारो विभागा भवितुमर्हन्ति। तद्यथा—१. एकत्रिंशत् कृदन्तीयशब्दाः। २. अष्टविंशतिः समस्तशब्दाः।
३. अष्टादश तद्धितान्ताः शब्दाः। ४. प्रकीर्णकाः पञ्च शब्दाः।

(१) कृदन्तीयशब्दानां निर्वचने प्रकृतिप्रत्यययोर्व्याख्यानमावश्यकं भवति। क. प्रकृतिव्याख्यानन्तु—एकप्रकृत्यैव निष्पन्नद्वयस्य शब्दस्य मिथः सम्बद्धयुगपत्प्रयोगेण भवति। यथा—'इ'प्रकृत्या निष्पन्नस्य 'एम' (लक्ष्य)[4] शब्देन सार्द्धं तत्प्रकृत्यैव सिद्धस्य "इत्या" इति शब्दस्य "एमश्च म इत्या च मे" (१८।१५) माध्यन्दिनसंहितायां युगपत्प्रयोगेण 'एम' इत्यस्य प्रकृतेः स्पष्टीकरणं जातम्।

अनेनैव प्रकारेण विषयेऽस्मिन् दाधातुना सिद्धस्य दत्त शब्दस्य[5], रम्धातुना परिनिष्ठितस्य [6]रतिशब्दस्य, [7]रन्तिशब्दस्य च शम्धातुना निष्पन्न-शमितृ[8]-

---

१. यो वः शमी शशमानस्य निन्दात्तुच्छ्यान्कामान्करते सिष्विदानः। (५।४२।१०)

२. ईजे यज्ञेभिः, शशमे शमीभिर्ऋधद्वारायाग्नये ददाश। (६।३।२)

३. स इदं देवेभ्यो हविः शमीष्व; सु-शमि, शमीष्व। (१।१५) महीधरस्तु 'भक्षण-विरोधितुषापनयनेन 'शान्तं कुरु + शम्' इत्यस्यार्थमस्पष्टयत्; किन्तु निम्नमन्त्रेषूपर्युक्तहिंसनार्थ एव शमित्यस्य प्रयोगोऽभिजातः। अतोऽत्रापि हिंसनार्थ एवोचितः।
कस्त्वाऽऽच्छ्यति? कस्त्वा वि-शास्ति? कस्ते गात्राणि शम्यति? क उ ते शमिता कविः? (२३।३९)। ऋतवस्त ऋतुथा पर्व शमितारो विशासतु। संवत्सरस्य तेजसा शमीभिः शम्यन्तु त्वा। ४० विशास्ति = अश्वोदरं पाटयतीत्यर्थ एव महीधरेणाप्यङ्गीकृतोऽत्र। ३९। शम्यन्तु = पर्वविशासनेन हविः कुर्वन्तु। ४०।

४. 'एमः' ईयत इत्येमः, एतेर्मः प्रत्यय, इति महीधरोक्तिः। प्राप्तव्योऽर्थः। आंग्लस्य aim (एम्) तुलनीयम्।

५. यद्दत्तं, यत्परादानम्। (१८।६४)

६. इह रतिरिह रमध्वम्। (८।५१)

७. इह रन्तिरिह रमताम्। (२२।१९)

८. द्र० उपर्युक्तम्—२३।३९-४०।

शब्दस्य, स्तृधातोः परिसिद्धस्य स्तीर्ण[1]शब्दस्य तथा स्वद्धातुना निष्पन्नस्य 'स्वात्त'[2] शब्दस्य निर्वचनमवलोकनीयम् ।

(ख) प्रत्ययस्य व्याख्यापरिपाटो समानार्थकान्यप्रत्ययस्य प्रयोगेण दृश्यते । यथा—'अग्निरिड ईडितः' । ( मा० सं० २१।१४ ) । अत्र कर्मणि क्तप्रत्ययेन निष्पन्नेन ईडितशब्देन सममिड इत्यस्य प्रयोगदर्शनात् कर्म कृदन्तोय इड इत्यपीति सूचितम् ।

(ग) धातुनैकेन निष्पन्नस्य शब्दद्वयस्य युगपत् प्रयोगमभिधाय तयोः सम्बन्धस्य विभक्त्याभिधानं कृत्वापि प्रत्ययार्थो निर्णीयते । यथा—इडाभिरग्निरीड्यः' ( मा० सं० २१।१४ ) । अत्र 'इड्य' इत्यस्य करणरूपे 'इडाभिरिति प्रयोगदर्शनादिडायाः करण-व्युत्पाद्यता संकेतिताऽस्ति ।

भाषाचिन्तनदृष्ट्या व्युत्पत्तयो निम्नाङ्किता ध्यातव्याः—

१. धुर्<√धुर्व—शकटस्तस्य धुरित्यस्य व्युत्पत्तिर्हिंसार्थक-'धुर्व्' इत्यस्य प्रयोगे समुदिताऽस्ति[3] । यतो हि धुरिति वहनकारकाय कष्टं ददाति । आचार्ययास्क-स्तथान्य[4]वैयाकरणा अपि तदीयामेतादृशीमेव व्युत्पत्तिं कृतवन्तः । अत्र 'उ' इत्यस्य सन्निधौ वलोपः[5] स्पष्टतयाऽभिप्रेतोऽस्ति ।

२. ध्रुव√< धृ—यथा यन्तृयमनयोर्युगपत्प्रयोगेणैतयोर्द्वयोः शब्दयोरेकधातु-जतायाः स्पष्टीकरणं जायते, तथैव ध्रुवधरुणयोरेकत्र प्रयोगेणापि द्वयोरेतयोः शब्दयोः समानधातुजताया स्पष्टप्रतीतिः। तथा ध्रुव √धृ व्युत्पत्तेः सङ्केतो[6] भवति। वैयाकरणनिकाये वार्तेयं स्पष्टतराऽस्ति[7] । तत्र 'ध्रु' इत्यनेनैव व्युत्पत्तिर्दर्शिता । 'ध्रु'

---

१. स्तीर्णबर्हिः सुष्टरीम् । (२९।४)

२. आपो देवीः स्वदन्तु स्वात्तं चित् । (६।१०)

३. धूरसि, धूर्व धूर्वन्तम्; धूर्वंतं, यो अस्मान् धूर्वति, तं धूर्व, यं वयं धूर्वामः । (१।८) उव्वटः—धूर्वण-क्रिया-निमित्तं हि ते नाम ।

४. द्र० निरुक्तम् (३।१)—धूर्धूर्वतेर्वध-कर्मणः । इयमपीतरा धूरेतस्मादेव विन्हन्ति वहम् । अष्टा० ३।२।१७७ : भ्राज-भास-धुर्वि-धुतोर्जि-पृ०-जु-ग्रावस्तुवः क्विप् ।

५. अष्टा० ६।४।२१ : राल्लोपः ।

६. यन्ताऽसि यमनो. ध्रुवोऽसिधरुणः (९।२२)

७. उणादिसूत्रम्—२१९ (२।६२) 'ध्रुवः कः' परमुज्ज्वलदत्तः—बाहुलकाद् 'ध्रु स्थैर्ये' अनोऽपि कः । मा० धा० वृ० १।९२५ : 'ध्रुवः' इति बाहुलकात्कः ।

इत्यस्य विख्यातरूपं नोपलभ्यते वैदिकवाङ्मयेषु। ध्रुतिः,[१] ध्रुवसे[२], ध्रुविरिति[३] कृदन्तीयं रूपत्रयं मिलत्यवश्यम्। इमानि त्रीणि रूपाणि 'ध्रु' इत्यस्य प्राचीनतरकालिकसत्तायाः सूचकानि वर्तन्ते। अतः शब्दार्थोभयसाम्यकारणात् ध्रु > ध्रुव इति व्युत्पत्तिरुचिततरा प्रतिभाति। स्वयं 'ध्रु' इति 'धृ' इत्यनेन विकसितमिति सम्भाव्यते।

३. मृद्–मृद्वी —मृत्तिकावाचको मृद्शब्दो मृदुलतायां प्रसिद्धोऽस्ति[४]। पृथु-शब्दवदुकारान्तः मृदुशब्दः 'म्रद्' इत्यस्माद् ग्रघटितरकारस्य सम्प्रसारणेन ऋकारे कृते निष्पद्यते[५]।

४. रतिः, रन्तिरुभावपि रम्धातुना निष्पादितौ स्तः[६]। तथैकस्मिन् मकारस्य लोपोऽभवत् परस्मिन्नाभवत्। परवर्तिकाले मकारस्य लोपोऽनिवार्यं आसीत्[७]।

५. विष्णुः —कतिपयविद्वांसः जिष्णु शब्दवद् वि+स्नु=विष्णु इति व्युत्पत्तिं कथयन्ति। तन्न समीचीनम्। माध्यन्दिनसंहितायां व्याप्त्यर्थक-लृदित्-विष्धातोः कर्त्रर्थे ष्णुच्प्रत्ययेन व्युत्पत्तिरभिप्रेताऽस्ति[८]। आचार्ययास्केन विष्णुरित्यस्य तिस्रो[९] व्युत्पत्तयः प्रदर्शिताः। प्रथमा व्युत्पत्तिरियम्। तृतीया व्युत्पत्तिरेतदर्थंनिर्वचने भवितुमर्हति। वैयाकरणा अपि विष्णुरित्यस्येमामेव प्रथमां व्युत्पत्तिं स्वीकुर्वन्ति[१०]।

---

१. न स स्वो दक्षो वरुणः, ध्रुतिः सा। (ऋ० सं० ७।८६।६) अत्र ध्रुतिरिति स्थिरनियत्यर्थे समागतः। मनुजो मुहुर्मुहुर्नियत्या न तु स्वेच्छया पापे प्रवृत्तो भवति। विश्वबन्धुनास्य द्रोहोऽर्थः प्रतिपादितः। अत्र वैदिकपदानुक्रमकोषो द्रष्टव्यः।

२. आ विश्व–वारादश्विना, गतं नः प्र तत्स्थानमवाचि वां पृथिव्याम्।
अश्वो न वाजी शुनपृष्ठो अस्यादा यत्सेदथुर्ध्रुवसे न योनिम्॥ (ऋ० सं० ७।७०।१)
ध्रुवस इति पदं विश्वबन्धुना कर्त्रर्थे कसुच्प्रत्ययं कृत्वा रोथेन वाल्द इत्यनेन च तुमर्थक (पा० तन्त्रे असे) इत्यनेन साधितम्।

३. शन्नः पर्वताध्रुवयो भवन्तु। (ऋ० सं० ७।३५।८) मन्त्रोऽयमाथर्वणपरम्परायाः १९।१०।८, शौनकशाखायां १३।८।८, पैप्पलादशाखायामपि धृतोऽस्ति।

४. निरुक्तम्—२।२।

५. मृदं हस्ताभ्यां मृद्वीं कृत्वा........(११।५५)

६. इह रतिरिह रमध्वम् (८।५१); इह रन्तिरिह रमताम्। (२२।१९)

७. अष्टा० ६।४।३७; ८. विष्णोर्वेष्योऽसि। (१।३०)

९. (१) अथ यद् विषितो भवति, तद् विष्णुर्भवति। (२) विशतेर्वा। (३) व्यश्नोतेर्वा। (निरु० १२।१८)

१०. विषेः किच्च : उणादिसूत्रम्—३१९ (३।३९)।

६. शल्यम् √शॄ—तीक्ष्णाग्रभागीयशल्यनामकेनास्त्रेण सह माध्यन्दिनसंहितायां हिंसार्थक-शॄधातोः प्रयोगोऽभिजातः। शल्यानां तीक्ष्णाग्रं तेजोविरहितं कृत्वेति[1] प्रतीयते यद् हिंसकतायाः कारणेन शीर्णीकरणकारणाच्छल्यमित्युच्यते।

अतः शल्यशब्दो हिंसार्थक-शॄधातुना निष्पन्नो वर्तते। तथा धातुगत-ॠकारस्य 'अर्' इत्यादेशो रेफस्य लकारादेशोऽप्यभवत्।

ऋग्वेदसंहितायां मुहुर्मुहुः शल्येत्यस्य प्राचीनरूपं शर्यं इति प्रयुक्तमस्ति। उत्क्षेपणरूपास्त्रार्थे तत्रास्य प्रयोगोऽस्ति[2]। शाब्दिका उत्क्षेपणरूपगतिकारणादस्य व्युत्पत्तिं गत्यर्थक-शल्धातुना कृतवन्तः[3]।

(२) समासः—माध्यन्दिनसंहितायां समुपलब्धनिर्वचनात्मकसमासानामुत्तरपदं कृदन्तीयं विद्यते। एतेषां निर्वचनं (क) विग्रहं प्रदर्श्य[4], (ख) केवलमुत्तरपदस्य व्युत्पत्तिं दर्शयित्वा[5], (ग) तदुत्तरपदस्यान्यपदेन सह प्रयोगं कृत्वा च कृतमस्ति[6]। एषु प्रथमप्रकारीयनिर्वचनसंख्या अन्यप्रकारीयनिर्वचनापेक्षया अधिका वर्तते।

(३) तद्धितः—तद्धितीयनिर्वचनानां सङ्केतः प्रकृतिविकृत्योर्युगपत्प्रयोगेण क्रियते। प्रत्ययार्थनिर्धारणं प्रकरणेन करणीयं भवति। तद्धितीयप्रत्ययः क्वचि-

---

१. अवतत्य धनुष्ट्वं सहस्राक्ष, शतेषुधे।
निशीर्य शल्यानां मुखा, शिवो नः सुमना भव ॥ (मा० सं० १६।१३)

२. युवं पेदवे पुरु—वारमश्विना, स्पृधां श्वेतं तरुतारं दुवस्यथः।
शर्यैरभिद्युं पृतनासु दुष्टरं चर्कृत्यमिन्द्रमिव चर्षणी-सहम् ॥ (१।११९।१०)
पुरुणि दस्मो नि रिणाति जम्भैराद्रोचते वन आ विभावा।
आदस्य वातो अनु वाति शोचिरस्तुर्न शर्यामसनामनु द्यून् ॥ (१४८।४)

३. सिद्धान्तकौमुद्यां ५४७ (४।१०७) उणादिसूत्रमवलोकनीयम्। सानसि—वर्णसि—पर्णसि—तण्डुलाङ्कुश—चषालेल्वल—पल्लव—धिष्ण्य—शाल्याः। .... ... शलेर्यः = शल्यम्। तत्त्व—बोधिनी—'शलेः' शल गतौ (१।८१८); बालमनोरमा : शल्यमित्यत्राह—शलेः इति। शल गतावित्यस्मादित्यर्थः।

४. आयुष्या आयुर्मे पाहि (२२।१)। उदग्रभेणोदग्रभीत (१७।६३)। उरु—प्रथा उरु-प्रथस्व (१।२२, तुलनीयम्—२०।२९ : उरु-प्रथाः प्रथमानम्)। कामं काम-दुघे, धुक्ष्व (१२।७२) गातु-विदो गातुं वित्वा (८।२१)। घृतं घृत-पावानः पिबतः; वसां वसा-पावानः पिबतः (६।१९).। परिवीरसि, परित्वा दैवीर्विशो व्ययन्ताम् (३।६)। स्विष्टं कुर्वन्स्विष्ट-कृत्स्वि-ष्टमद्य करोतु नः। (२८।२२)

५. तांस्त्वं खाद सु-खादितान् (११।७८) सु-भृतं बिभृत। (८।२६)

६. स सूर्येण दिद्युतदुदधिर्निधिः। (३८।२२)

त्सम्बन्धार्थे[1] कुत्रचिदपत्यार्थेऽन्यत्रेदमर्थे[2] दृश्यते। [3]क्वचिद्देवतार्थेऽन्यत्र 'तस्मै'[4] इत्यर्थे परत्र तद्वान्[5] इत्यर्थे च तद्धितीयप्रत्ययस्य प्रयोगः प्रसिद्धतामैत्[6]।

(४) प्रकीर्णः—वर्गेऽस्मिन् त्रिप्रकारकाः पञ्च शब्दा दृश्यन्ते।

(क) एकस्मिन् प्रयोगे 'जि जये' इत्यनेन सह तस्य ण्यन्त-जावीत्यस्य प्रयोगः संदृश्यते[7]। द्वितीयप्रयोगे 'श्रु श्रवणे' इत्यनेन सह 'शुश्रूष' इति सन्नन्तस्य प्रयोग[8] उपलभ्यते, येन विज्ञायते यद् धातोः शुद्धरूपस्य प्रक्रियाया रूपस्य च पारस्परिक-सम्बन्धोऽनेन निर्वचनेन स्पष्टीकृतो वर्तते।

---

१. अयं पुरो भुवस्, तस्य प्राणो भौवायनः (१३।५४)। अयं दक्षिणा विश्व-कर्मा, तस्य मनो वैश्व-कर्मणम् (५५)। अयं पश्चाद्विश्व–व्यचास्, तस्य चक्षुर्वैश्व–व्यचसम् (५६)। इदमुत्तरात्स्वस्, तस्य श्रोत्रं सौवम् (५७)। इयमुपरि मतिस्, तस्यै वाङ्मात्या (५८)। टीकाकारैरेतेषां व्याख्या क्वचित्तस्येदम्, कुत्रचित् तस्यापत्यम् इत्याभ्यां कृता।

२. आ--पतये त्वा, परि--पतये गृह्णामि तनू--नप्त्रे शाक्वराय शक्वन ओजिष्ठाय (५।५)। उव्वटः—'शाक्वराय'—'शक्नुवन्त्याकाशे भूतानि स्थातुम्' इति शक्वर आकाशः। तस्यापत्यं शक्वरो = वायुस् तस्मै।

३. अश्विभ्यां दुग्धं भेषजमिन्द्रायैन्द्रं सरस्वत्या (१९।१५)। अत्र ऐन्द्रम् = इन्द्रदैवत्यमिति महीधरोक्तिः।

४. अतिथेरातिथ्यमसि। (५।१) सम्भवतो महीधरः श्रुतौ षष्ठ्यर्थं विलोक्यैवास्य व्याख्यां सम्बन्धार्थे कृतवान्। अतिथेरिदम् = आतिथ्यम्, 'अतिथेर्ञ्यः' (अष्टा० ५।४।२६) इति ञ्यप्रत्ययेन सिद्धोऽस्ति। परन्तु सूत्रमिदं देवताऽन्तात्तादर्थ्ये यत् (२४) इति तादर्थ्याधिकारे पठितमस्ति। तादर्थ्ये इत्येव काशिकाकारः। (५।४।२६)

५. जवो यस्ते वाजिन्, निहितो गुहा···तेन नो वाजिन्, बलवान्बलेन (९।९) व्यचस्वतीं, प्रथस्वतीं प्रथस्व; पृथिव्यसि (१३।१७)। अग्निर्ज्योतिषा ज्योतिष्मान्; रुक्मो वर्चसा वर्चस्वान् (४०)। तृतीयायाः प्रयोगं विधाय मत्वर्थं व्याख्यातवानिति प्राचीना पद्धतिरियं प्रतीयते। निरुक्तस्य पञ्चमाध्याये पृ० ४५३, टि० ३ ; तै० सं० (३।२।३।१६) तृतीयैव बहुव्रीहेरर्थं कृतवान्।

६. ब्राह्मणमद्य विन्देयं पितृमन्तं, पैतृमत्यम्, ऋषिम् आर्षेयम्, सु–धातुदक्षिणम् (७।४६)। ऋषिषु विख्यात आर्षेयस्तमिति महीधराचार्यः। जात्या प्रवरैर्ज्ञानेन सुज्ञातमित्यर्थः।

७. बृहस्पते, वाजं जयः; बृहस्पतये वाचं वदत; बृहस्पतिं वाजं जापयत।
इन्द्रं, वाजं जयेन्द्राय वाचं वदतेन्द्रं वाजं जापयत। (९।१)
जप्-जिधातुभ्यां जापीति सिद्ध्यतीत्युव्वटः। जिधातोः णिजप्रत्ययेन भवतीति महीधरोक्तिः।

८. शुश्रूषमाणाय स्वाहा शृण्वते स्वाहा। (२२।८)

(ख) एकस्मिन् प्रयोगे[1] 'श्रु' इत्यनेन सह श्रुधातुना निष्पन्नश्लोक[2]नामकस्य प्रयोग आख्यातरूपे विद्यमानोऽस्ति ।

(ग) एकत्र प्रयोगे द्वयोर्धात्वोः पारस्परिकसम्बन्धमस्पष्टयत् । सूक्तवाकशब्दो यथा 'सूक्त + वच्' इत्यनेन निष्पन्नोऽस्ति । अस्य व्याख्या 'सूक्त + ब्रू' इत्यनेन कृताऽस्ति[3] । तेन सूच्यते यद् 'वच्' इत्यस्य तद्विशेषलकारे प्रयोगो न भवति स्म तथा तत्स्थाने 'ब्रू' इत्यस्य प्रयोगो भवति स्म । पाणिनीयतन्त्रे वचित्यस्य प्रयोगवैशिष्ट्यमिदमवलोक्यैव ब्रुवः स्थाने वचित्यादेशो जायत इत्युक्तमस्ति[4] ।

√दुघ्-दुहोः परस्परं सम्बन्धोऽस्तीति पश्चादुक्तम्[5] । माध्यन्दिनसंहितायामेवयोर्युगपत्प्रयोगकथनमस्य पोषकतामुपैति[6] । दुघित्यस्य प्रयोग ऋगथर्ववेदयोरपि लभ्यते । दुघ्-दुहोः प्रयोगो माध्यन्दिनसंहितायान्तु वर्तत एव, मैत्रायणिसंहितायामप्यास्ते[7] ।

## निष्कर्षः

माध्यन्दिनसंहितोक्ता व्युत्पत्तय ऋग्वेदसंहितोक्तव्युत्पत्त्यपेक्षयाल्पहीनकोटेः, सन्ति । अमृतधान्यध्रुवनिर्वचनान्येवोदाहरणान्यस्येति । परवर्तिभाषाविद ऋग्वेद-माध्यन्दिनसंहितयोर्भेदमुपागतानां निर्वचनानां मध्ये ऋग्वेदनिर्वचनमेवाङ्गीकृतवन्तः । ध्वनिविज्ञानदृष्ट्या एषु निर्वचनेष्वपि ता एव प्रवृत्तयः कार्यं सम्पादयन्ति, य ऋग्वेदीय-निर्वचनव्याख्याप्रसङ्गेऽस्माभिर्दृष्टाः सन्ति । ऋग्वेदीयनिर्वचनानामपेक्षया माध्यन्दिन-निर्वचनेषु न कोऽपि विकासः दृष्टिपथमागतः, प्रत्युत ह्रास एवावलोकने समागतः ।

## अथर्ववेदसंहितायां व्युत्पत्तिचिन्तनम्

आथर्वणशौनकीयसंहितायां ३५० प्रयोगेषु त्रयस्त्रिंशदुत्तरद्विशतानां ( २३३ ) शब्दनिर्वचनानां सङ्केतोऽभिप्राप्यते । एतेष्वेकाशीतिनिर्वचनानि पूर्वचर्चितसंहितास्वपि समुपलभ्यन्ते । संक्षिप्तविवरणदृष्ट्या (क) ऋग्वेदसंहितायां षट्पञ्चाशत्, (ख) माध्यन्दिन-यजुषि षट्, (ग) तिसृणां संहितायामेकोनविंशतिनिर्वचनानि सम्प्राप्यन्ते ।

---

१. श्रोतं मे श्लोकाय । (१४।८)

२. व्युत्पत्तिरियमृग्वेदातिरिक्तमाध्यन्दिनसंहितायामपि प्राप्यते, यथा—श्लोकश्च मे, श्रवश्च मे, श्रुतिश्च मे । (१८।१)

३. सूक्तवाकाय सूक्तां ब्रूहि । (२१।६१)

४. ब्रुवो वचिः । (अष्टा० २।४।५३)

५. तुभ्यं धेनुः सर्वदुघा विश्वा वसूनि दोहते । (१।१३४।४)

६. इन्द्रो न रोदसी दुघे; दुहे धेनुः । (२१।३४)

७. ३।११।२ : अत्र प्रैष तनिकान्तरेण धृतमस्ति ।

(क) ऋगथर्ववेदसंहितयोः प्राप्तनिर्वचनानि—

एतयोः संहितयोर्लब्धनिर्वचनानि प्रायशः सामान्यं लभन्ते; किन्तु निर्वचनेषु किञ्चिदन्तरत्वं विद्यते। तथा हि—

१. आज्यम्—√अञ्ज्—ऋक्संहितायामेतयोर्व्युत्पत्तिः प्रकृतिविकृत्योर्युगपत्प्रयोगेण सूचिताऽस्ति[१], यदाथर्वसंहितायां[२] प्रकृतिः (क्रिया) विकृतिः (नाम) इत्यनयोः हेतुरूपे कथितमेवं यदञ्जनकारणादाज्यम्। अत्राञ्ज् (आंजना) = लिप्तिः (अभिघारणार्थे) अभिप्रेताऽस्ति[३]।

२. आपः —ऋग्वेदे नोधस्गौतमः[४], दीर्घतमस्[५]-औचथ्यः, प्राजापत्यसंवरणः[६], वशिष्ठमैत्रावरुणिश्च[७] 'आपः' इत्यस्य व्युत्पत्तिं पुष्ट्यर्थक-पीधातुना सूचितवन्तः। कदाचिद् नोधस्गौतमः[८], त्रसदस्यु-पौरुकुत्स्यश्च[९] पिन्वधातुना तद् व्युत्पत्तिं कृतवन्तः। एतद्विपरीतरूपेऽथर्ववेदे भृगुः 'आप्' इत्यनेन आपो व्युत्पत्तिं रचयन् स्पष्टतयावादीद् यद् यूयं वरुणप्रेरितास्तीव्रगत्या व्रजन्त्य इन्द्रेण लब्धाः, अतो यूयमापः स्थ[१०]। अथर्ववेदीयनिर्वचनं साध्वस्ति। एवन्नैरुक्तं[११] वैयाकरणा[१२] अपि इदमेवाङ्गीकृतवन्तः। डॉ० सिद्धेश्वरवर्माऽस्या व्युत्पत्तेर्निर्जीवत्वमुक्तवान्। तथा भारोपीय-जलनद्यर्थक-'ap' इत्यनेन व्युत्पादितवान्[१३]; परन्त्विदं व्युत्पत्तिकथनमुताहो इतिहासकथनमिति प्रश्ने

---

१. यं समाञ्जन्नाज्येना वृणानाः। (ऋ० सं० १०।८८।४)

२. यदाञ्जनाभ्यञ्जनमाहरन्त्याज्यमेव तत्। (९।६।११) अत्र प्रकरणे निर्देशरहितः सन्दर्भः अथर्वसंहिताशौनकीयेन बोध्यः।

३. क्रोडौ ते स्तां पुरोडाशावाज्येनाभिघारितौ। (१०।९।२५)
तुलनीयम्—अश्वो घृतेन त्मन्या समक्त उप देवाँ ऋतुशः पाथ एतु। (मा० सं० २९।१०)

४. त्वं त्यां न इन्द्र, देव, चित्रामिषमापो न पीपयः परिज्मन्। (१।६३।८)

५. उत वां विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः। (१।१५३।४)

६. तस्मा आपः संयतः पीपयन्तः, तस्मिन्क्षत्रममवत्त्वेषमस्तु। (५।३४।९)

७. आपश्चित्पिप्युः स्तर्यो न गावो नक्षन्नृतं जरितारस्त इन्द्र। (७।२३।४)

८. पिन्वन्त्यपो मरुतः सुदानवः, पयोघृतवद्विदथेष्वाभुवः। (१।६४।६)

९. अहमपो अपिन्वमुक्षमाणाः; धारयं दिवं सदन ऋतस्य। (४।४२।४)

१०. यत्प्रेषिता वरुणेनाच्छीमं समवल्गत।
तदाप्नोदिन्द्रो वो यतीस्, तस्मादापो अनुष्ठन्। (३।१३।२)

११. आप आप्नोतेः। (निरुक्तम्—९।२६)

१२. आप्नोतेर्ह्रस्वश्च।

१३. दी एटिमॉलॉजीज ऑफ यास्क, पृ० २२।८५ द्रष्टव्यम्।

जलं प्रवहति ( विस्तृतमाप्नोति ), अत आप: सन्ति। वर्मामहोदयो यास्ककथनानुवादमपि न शुद्धतया कृतवान्। सोऽब्रवीदाप आपनस्य कर्ताऽस्ति न कर्मेति[1]।

३. घृतम्—घृतमिति ऋग्वेदे दीपनार्थक-घृधातुनाऽभिप्रेतमस्ति[2]। अथर्ववेदे लेपनसेचनतरणार्थक-घृधातुना घृतमित्यभिप्रेतं प्रतीयते[3]। सम्भवतो व्युत्पत्तावत्र कर्मकाण्डविषय: प्रबलोऽस्ति। माध्यन्दिनसंहितायामेतदाशयाय घृतेन करणेन सह 'सम्-अञ्ज्' इत्यस्य प्रयोग:[4] प्राप्यते।

४. दामन्—शब्दोऽयं बन्धनार्थक-दाधातुना निष्पन्नोऽस्ति[5]। अथर्ववेदे सम्बन्धोऽयं स्पष्टतरेणोक्त:[6]।

५. राजन्—अयं शब्द: शासनैश्वर्यार्थक-राज्धातुनाऽभिप्रेतोऽस्ति[7]। अथर्ववेदे एतदाशयं किञ्चिद् भिन्नप्रकारेण वर्णितवान्। यो राजानमधिशास्ति सोऽधिराजपदेन[8] बोध्यो भवति स्म। आचार्यसायणस्तु सम्भवतो धातुपाठस्यार्थकथनेन[9] प्रभावितो भूत्वाऽत्र 'राजय' इत्यस्य प्रकाशयेत्यर्थं[10] कृतवान्; परन्तु 'राजसु' इति पदे या सप्तमी, सा ऐश्वर्यार्थे वर्तते, न तु मध्यार्थे। अतोऽग्रिममन्त्रघटकत्वमिन्द्र! देवप्रजा

---

१. तत्रैव, Lit that which is optained. वर्मणोऽयमर्थो राजवाडीयव्यवहाराधारित:। यतस्तत्रत्या: पानीयार्थमप् इत्युक्त्वा जलं प्राप्नुवन्ति। (द्र० निरुक्ताञ्चे भाषान्तरीय ६९४ पृष्ठे)। परन्त्वयमर्थ: परम्पराविरुद्धोऽस्ति। 'सेदं सर्वमाप्नोद् यदिदं किञ्च यदाप्नो-त्तस्मादाप:'। (शतपथ-ब्रा० ६।१।१।९) 'तद् यदब्रवीदाभिर्वा अहमिदं सर्वमाप्स्यामि यदिदं किञ्चेति, तस्मादापोऽभवन्' (गोपथ-ब्रा० १।२)। 'आप: ता: पुनरेता आप्नोते: सर्वमाभि-राप्तमिति' (दुर्ग: —९।२६)। 'आप: कस्मात्? आप्नोते:—कृत्स्नं ताभिर्व्याप्नम्'—इति तत्रैव स्कन्दे। 'आप: पुनन्तु पृथिवीम्' इति यजुर्वेदीयसन्ध्याविधौ।

२. जिघर्म्यग्निं हविषा घृतेन प्रति क्षियन्त भुवनानि विश्वा। (ऋ० सं० २।१०।४)

३. घृतेन पात्रमभिधारयैतत्। (१२।३।७३) तुलनीयम्—१०।९।२५ इत्यनेन।

४. अश्वो घृतेन त्मन्या समक्त उप देवाँ ऋतुश: पाथ एतु। (२९।१०)

५. यद्वाजिनो दाम सन्दानमर्वतो, या शीर्षण्या रज्जुरस्य। (१।१६२।८)
स आ गमदिन्द्रो, यो वसूनां चिकेतद्दातुं दामनो रयीणाम्। (५।३६।१)

६. ६।१०३।१-३ : सन्दानम्, दाम्ना सं द्या।

७. ईक्षे हि वस्व-उभयस्य राजन्। (६।१९।१०)

८. इन्द्रो जयाति, न परा जयाता; अधिराजो राजसु राजयातै। (६।९७।१)

९. द्र० राजृ दीप्तौ। माधवीयधातुवृत्ति: — १।८०७ )

१०. अधिको राजा अधिराज:, सर्वेषां राज्ञामधिपतिरिन्द्र:। राजसु = अन्येषु भूपालेषु, राजयातै = अस्मात् राजयतु = प्रकाशयतु, वीर्यवत्तया प्रख्यापयतु। सायणभाष्यं द्रष्टव्यम्।

इमाः शासयार्थाद् देवानां शासनं [1]कुर्वित्यर्थं एव सर्वथा सङ्गतः प्रतिभाति, न तु दीप्त्यर्थः। सायणोऽपि शासनार्थेनैव सहमतोऽस्ति[2]।

(ख) माध्यन्दिनाथर्वणसंहितयोरुपलब्धनिर्वचनानि—

अत्र षण्णां पदानां निर्वचनानि समतां व्रजन्ति। तत्र 'यव'शब्दस्य निर्वचनं द्रष्टव्यमस्ति। माध्यन्दिनसंहितायां यवशब्दः कर्मकाण्डपरम्परानुसारं हिन्द्याः 'जौ' इत्यस्य वाचकोऽस्ति। तथा स्वपवित्रतायाः कारणेन शत्रून् दुर्भाग्यादिकांश्च ऋत्विजो यजमानाद्वा पृथक् करोति। तस्मात् पार्थक्यार्थक-युधातोर्ण्यन्त-यापोति रूपेण यवशब्दो निष्पन्नोऽस्ति।

निर्वचनमिदं स्पष्टतया धार्मिकविश्वासोपर्य्याधारितमस्ति। अथर्वसंहितायां यवः, इन्द्रः, अग्निः, सोम इत्येता देवता विशेषणत्वेन प्रयुक्ताः सन्ति। तत्र शत्रोर्दूरीकरणार्थक-पार्थक्यार्थक-ण्यन्त-यापीत्यनेनैव यवो[3] व्युत्पादितो विद्यते। यवेऽभिषेचन-विधौ पानीयमिश्रणेन युधातोरेव[4] यवस्य निष्पत्तिं मन्यन्ते शाब्दिका अपि[5]।

(ग) तिसृषु संहितासु प्राप्तनिर्वचनानि—

इमानि निर्वचनानि साधारणान्तरं विहाय सर्वत्र प्रायशः समतामेव भजन्ति। सर्वत्र प्रकृतिरेकैवोक्ता, कारकादीनां साधारणान्तरत्वं यत्र क्वचन भवितुमर्हति। एकोनविंशतिनिर्वचनानामेकनिर्वचन एव प्रकृतेः सह्यान्तरत्वं वर्तते।

---

१. त्वमिन्द्राधिराजः, श्रवस्युस्, त्वं भूरभि-भूतिर्जनानाम्।
त्वं दैवीर्विश इमा विराजायुष्मत्क्षत्रमजरं ते अस्तु। (६।९८।२)

२. अथर्वभाष्यं द्रष्टव्यम्—दैवीर् = देव-सम्बन्धिर इमा विशः = प्रजास्त्वं विराज = ईशिष्व, राजतिरैश्वर्य-कर्मा।

३. यवोऽसि, यवयास्मद् द्वेषो, यवयारातीः। (मा० सं० ५।२६) महीधरभाष्यं द्रष्टव्यम्—'यवोऽसीत्यप्सु यवानोप्य'। (कात्यायनश्रौतसूत्रम्—६।२।१५) इति यवदैवत्यम्। हे धान्यविशेष, त्वं यवोऽसि। यौति पृथक्करोतीति यवः। अस्मद् द्वेषो = द्वेष्टॄन् शत्रून् द्वेषो = दौर्भाग्यं वा अस्मद् = अस्मत्तो यवय = पृथक्कुरु। तथाऽरातीर् = अदानानि च यवय = पृथक्कुरु।

४. अग्निर्यव इन्द्रो यवः, सोमो यवः। यव-यावानो देवा यावयन्त्वेनम्। (९।२।१३) अग्रिम-मन्त्रे द्वेष्यः (प्र० ए० व०) इत्यस्य चर्चाऽस्ति। यथा—असर्ववीरश्चरति प्रणत्तु द्वेष्यो मित्राणाम, परिवार्यः स्वानाम्। (१४) अतोऽत्रैनम्—इत्यनेन द्वेष्यस्यैव ग्रहणं कर्त्तव्यम्।

५ काशिकायामृदोरप् (३।३।५७) सू०....उवर्णान्तेभ्यः —यवः, स्तवः, लवः, पव इत्यादि विचारणीयम्। शब्दकल्पद्रुमे—यूयते अम्भसा इति। यु मिश्रणे + अप्।

समिध्—ऋग्वेदे भारद्वाजबार्हस्पत्यनामकाचार्यः 'सम + इन्ध्' धातुना निष्पन्नाग्नेर्विशेषणात्मक-समिद्ध( प्रदीप्त )पदकरणरूपे समिधः प्रयोगेण 'सम् + इन्ध' इति व्युत्पत्तिमेव सूचितवान्[1]। अथर्ववेदे[2] स्थलत्रयेऽपि, यजुर्वेदे एकस्मिन्नेव स्थले[3] व्युत्पत्तिरियमेवास्ति; किन्त्वथर्ववेदे एकस्मिन्[4] स्थले समिधित्यस्य सम् + एधित्यस्माद् व्युत्पत्तिः सूचिताऽस्ति। यजुर्वेदसंहितायामेतत्सदृशमन्त्रे समिधित्यस्य व्युत्पत्तिसूचकांशः परित्यक्तोऽस्ति[5]।

## निष्कर्षः

व्याकरणदृष्ट्या यद्यप्युक्तसंहितासु निर्वचनात्मको विशेषोऽन्तरो न प्रतीयते, तथापि शैलीदृष्ट्या निर्वचनात्मकं महदन्तरं दृश्यते। पूर्वोक्तसंहिताद्वये प्रकृतिविकृति-युगपत्प्रयोगेणोभयोः सम्बन्धं हेतुं मत्वा स्पष्टरूपेण पदव्युत्पत्तिः साध्यते स्म। 'आज्यम्, आप्' इत्यनयोर्निर्वचनमस्याः शैल्याः समुदाहरणत्वेन गृह्यते।

## अथर्ववेदस्य नैजानि निर्वचनानि

अथर्ववेदस्य नैजानि निर्वचनान्येकपञ्चाशदुत्तरशतं सन्ति। तत्र शब्द-विवरणमेवं द्रष्टव्यम्—१. सप्तषष्टिः कृदन्तीयाः, २. पञ्चपञ्चाशत् समस्ताः, ३. पञ्चदशशब्दास्तद्धितीयाः, ४. पञ्चदशशब्दाः प्रकीर्णकाः।

(क) धातुसम्बन्धसूचना अष्टौ। (ख) नामधातुनिर्वचनद्वयम्। (ग) प्रत्ययान्त-धातुनिर्वचनमेकम्। (घ) धात्वर्थनिर्वचनमेकम्। (ङ) नामार्थनिर्वचनमेकम्। (च) स्त्री-प्रत्ययान्तनिर्वचनमेकम्। (छ) उपसर्गयोगे पदभेद एकः।

निर्वचनशैल्यामेतत्संहितात्मकनिर्वचनेषु पूर्वोक्तसंहितानिर्वचनेभ्यो न कश्चिद्विशेषान्तरो दृश्यते। किञ्च, निर्वचनानां विकासदृष्ट्या यादृशं विकासं चर्चितवान्, तद्विकास एषु निर्वचनेष्वपि स्पष्टतया दृश्यते। निम्ननिर्वचनानि व्याकरण-दृष्ट्या तकनीकविकासदृष्ट्या च महत्त्वपूर्णानि वर्तन्ते –

---

१. समिद्धमग्निं समिधा गिरा गृणे। (६।१५।७) समिधापदमत्र 'समिद्धं गिरा' इत्याभ्यां सम्बद्धः प्रतीयते। इन्धनप्रदीप्ताग्नेः प्रशंसामहं दीप्तिकारिकया स्तुत्या करोमीत्यर्थः।

२. समिद्धो अग्ने, समिधा समिध्यस्व। (११।१।४) ब्रह्मचार्येति समिधा समिद्धः। (५।६) एतास्ते अग्ने, समिधस्, त्वमिद्धः समिद्भव। (१९।६४।४)

३. समिद्धो अग्निः समिधा सुसमिद्धो वरेण्यः। (२१।१२)

४. एधोऽस्येधिषीय, समिदसि, समेधिषीय। तेजोऽसि, तेजो मयि धेहि। (७।८९।४) एधिषीयेत्यस्य 'सम् + इन्ध' इति व्यत्ययेन यद्वा 'सम् + एध्' इत्यनेन व्युत्पत्तिद्वयप्रदर्शनं कारितवान् सायणः।

५. एधोऽस्येधिषीमहि, समिदसि, तेजोऽसि, तेजो मयि धेहि। (२०।२३)

१. अधि + √इ = अधि + √गा : आचार्यभृग्वङ्गिरा 'अधि + इ' इत्यनेन निष्पन्न-अधीतिशब्देन सह 'अधि + गा' इत्यस्य प्रयोगेणेत्थं[1] सूचितवान् यत्तस्मिन् काले 'इ'-'गा' इत्यनयोः समानार्थकता तु मान्याऽऽसीदेव; प्रत्युत कतिपयरूपेषु 'इ' इत्यपेक्षया 'गा' इत्यस्य प्रयोगाधिक्यमासीत् । पाणिनिरपि स्थितिरस्या वर्णितवान्[2] ।

२. अपामार्गः<अप् + √मृज्-धातुना निष्पन्नोऽयं शब्दः कस्याश्चिदूंगा-नाम-प्रसिद्धायाः पुष्पफलपाकान्तौषधेर्नामविशेषः । एतस्य प्रयोगो धार्मिकक्रियासु कृत्योपादितानिष्टनिवारणार्थं भवति स्म । अतोऽस्य व्युत्पत्तिः 'अप् + मृज्' इत्यनेन प्रदर्शिता[3] । तथोपसर्गान्त्यस्य दीर्घं धातूपधावृद्धिं जकारस्थाने विपरिणामेन गकारं कृत्वाऽस्य साधुत्वं कृतवान् । एतत्प्रवृत्त्या विदिता ऋग्वेदीयमहर्षय आसन् । अत्र धार्मिकपृष्ठभूमेराधारं मत्वैवास्य व्युत्पत्तिप्रदर्शनं बोध्यम् ।

३. √अस्/√भूः—इमौ समानार्थकौ सत्तायाम् । कदाचिदस्धातोः प्रयोग-प्रचलनं परित्यज्य बुधास्तत्स्थाने 'भू' इत्यस्य प्रयोगं कुर्वन्ति स्म । पाणिनिनाऽप्युक्तोऽयं प्रयोगोऽन्तिमामवस्थां निरूपयति[4] । अथर्ववेदे प्रथमायाः स्थितेः प्रदर्शनं विद्यते । तत्र 'अभि + भू' इत्यनेन सार्द्धमस्मिन्नेवार्थे 'अभि + अस्' इत्यस्य प्रयोगं कृतवान्[5] ।

४. इन्द्रजालम्—शब्दोऽयमद्य हिन्द्यां 'जादू'-मायार्थे प्रयुक्तो भवति । भृग्वङ्गिरा व्युत्पत्तिमस्यैवं कृतवान् । इन्द्रस्य जालम्—अर्थाज्जगदिदमिन्द्रस्य महाजालत्वेन व्यवहृतम् । तेनैवेन्द्रः शत्रुसेनां प्रबाध्य शत्रून् कर्तितवान् । अहमपि तेनैवेन्द्रजालस्वरूपान्धकारेणारिबन्धनं करोमीति[6] ।

५. उदक<उद् + अन्—भृगुर्हेतुकथनपूर्विकामिमां व्युत्पत्तिमकरोत्[7] । ऋग्वेदर्षयः परवर्तिपरम्परागताश्च 'उन्द्' इत्यस्मान्निष्पादयन्त्युदक इति । अथर्ववेद-

---

१. अधीतीरध्यगादयमधि जीवपुरा अगन् । (२।९।३)

२. द्रष्टव्यम्—२।४।४५ : इणो गा लुङि । ४९–५१ : गाङ् लिटि, विभाषा लुङ्-लृङोः, णौ च संश्चङोः ।

३. क्षुधा-मारं, तृष्णा-मारमगोतामनपत्यताम् । अपामार्ग, त्वया वयं सर्वं तदपमृज्महे । (४।१७।६) द्र० ७।८।१८; ७।६५।२-३ ।।

४. २।४।५२ । 'अस्तेर्भूः' (आर्धधातुके) सूत्रमवलोकनीयम् ।

५. अभिभूर्यज्ञो, अभिभूरग्निरभि-भूः सोमो अभिभूरिन्द्रः । अभ्यहं विश्वाः पृतना यथाऽसान्येवा विधेमाग्निहोत्रा इदं हविः ।। (६।९७।१)

६. अन्तरिक्षं जालमासीज्, जालदण्डा दिशो महीः । तेनाभिधाय दस्यूनां शक्रः सेनामपावपत् । (८।८।५) अयं लोको जालमासीच्छक्रस्य महतो महान् । तेनाहमिन्द्र-जालेनामूंस्तमसाऽभिदधामि सर्वान् । (८)

७. एको वो देवोऽप्यतिष्ठत्स्यन्दमाना यथावशम् । उदानिषुर्महीरिति तस्मादुदकमुच्यते । (३।१३।४)

संहिताया निर्वचनानि तकनीकविकासं प्रकटयन्तीति 'ऋग्वेदे व्युत्पत्तिचिन्तन'मिति शीर्षके उक्तं मया[1]।

६. खः —इन्द्रियपर्यायस्य 'ख' इत्यस्य व्युत्पत्तिमाचार्ययास्कः खन्-धातुना निष्पादितवान्[2]। एतत्पूर्वं कठोपनिषदि 'खन्' इत्यस्य स्थानेऽर्थेऽस्मिन्नेव 'तृद्' इत्यस्य प्रयोगेण सूचिता व्युत्पत्तिरस्ति[3]। एतस्मादपि पूर्वमथर्वसंहितायां 'ख' इत्यस्य निर्वचनं तृदित्यस्य प्रयोगेण दत्तमस्ति[4]। ऋग्वेदसंहितायां छिद्रार्थे 'ख' इति सङ्केतितवान् गातु-आत्रेयः[5]। एवं 'ख' इत्यस्येन्द्रियार्थः छिद्रार्थेन विकसित इति बोध्यम्।

७. दित्सः —दानार्थक-दाधातुना निष्पन्नप्रत्ययान्तद्वयस्य दित्स-दापीत्यस्य युगपत्प्रयोगो विद्यते[6]। अत्र दापिघटकदेत्यस्य स्पष्टतया दर्शनं जायते ; परन्तु 'दित्स' इत्यत्र देत्यस्य बोधे काठिन्यं वर्तते ; किन्त्वनेन प्रयोगेण 'दित्स' इत्यस्य दाधातुना निष्पन्नताया ज्ञानं वशिष्ठस्य हृद्यासीदिति सूच्यते। महर्षिपाणिनिः —दा + सन् √दिस् + स, दित्सेति व्युत्पादितवान्[7]।

८. धनपालः —अङ्गिराः 'धन + पाल्' इत्यनेन निष्पन्नस्यास्य शब्दस्य 'धन + रक्ष्' इति प्रयोगेण व्युत्पत्ति सूचितवान्[8]। अर्थादिममर्थनिर्वचनम्।

९ नक्षत्रम्—नारायणाचार्यः 'न-क्षत्र' इत्यस्य 'सत्क्षत्र' इत्यनेन सार्द्धं प्रयोग-दर्शनाद्स्य व्युत्पत्तिं सूचितवान्[9]। तैत्तिरीयब्राह्मणे प्रसङ्गान्तरे प्रयुक्तस्य नक्षत्रशब्दस्य व्युत्पत्त्यात्मिकां व्याख्यामेवमकरोद् यत् प्राचीनकाले तपोबलानां क्षत्रियजनानामिन्द्रः क्षत्रं बलमपहृतवान्, येन बलरहितास्तेऽभवन्। अतः क्षत्रहीनत्वात्ते नक्षत्रपदेन विख्यातिङ्गताः[10]। यास्को गत्यर्थक-'नक्ष्' इत्यनेन तारकवाचिनो नक्षत्रस्य व्युत्पत्ति

१. ऋग्वेदे–१।१४०।६ द्रष्टव्यम्। इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजेन दिव उत्सा उदन्यवे ॥ (ऋ० सं० ५।५७।१)

२. निरुक्तम्—३।१३ : 'ख' पुनः खनतेः। निरुक्तपञ्चाध्यायी, पृ० ५५।

३. पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन्। (२।१।१)

४. कः सप्त खानि विततर्द शीर्षणि—कर्णाविमौ, नासिके, चक्षुषी, मुखम्। (१०।२।६)

५. अदर्दरुत्समसृजो वि खानि, त्वमर्णवान् बद्बधानाँ अरम्णाः। (ऋ० सं० ५।३२।१)

६. उतादित्सन्तं दापयतु प्रजानन् रयिं च नः सर्ववीरं नियच्छ ॥ (३।२०।८)

७. सनि मी–मा–घु–रभ–लभ–शक–पत–पदामच इस्। (अष्टा० ७।४।५४)

८. स नो रक्षतु जङ्गिडो धनपालो धनेव। (१९।३५।२)

९. केन देवाँ अनु क्षियति ? केन दैव–जनीर्विश ?
केनेदमन्यन्नक्षत्रं ? केन सत्क्षत्रमुच्यते ? (१०।२।२२)

१०. सायणभाष्ये (२।७।१८।३)—प्रवाहुग्वा अग्रे क्षत्राण्यातेपुः। तेषामिन्द्रः क्षत्राण्यादत्त न वा इमानि क्षत्राण्यभूवन्निति। तन्नक्षत्राणां नक्षत्रत्वम्।

प्रदर्शितवान्। तथा ब्राह्मणस्य प्रमाणेन प्रमाणितवान्[१]। पाणिनिः 'न+क्षत्र' इत्येवोक्तवान्। टीकाकृदनुसारं नक्षत्रपदं 'न+क्षर' इत्यनेन क्षिधातुना वा निष्पन्नं भवति[२]। शाकटायनरीत्या क्षत्र<क्षद्+त्र इति व्युत्पत्तिर्बोध्या[३]। शतपथब्राह्मणे क्षत्र <क्षण् इति व्युत्पत्तिरुक्ता[४]। कालिदासोऽपि व्युत्पत्तिमिमामेवावादीत्[५]। न क्षरतीति नक्षत्रम्—तारकार्थवाचकं पदमिदम्। तथा चात्र 'नक्षत्रमृक्षं भं तारा तारिकाप्युडु वा स्त्रियाम्' इत्यमरकोशो 'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इति। श्रौतवचनञ्चात्रावधेयं मम मतानुसारेण।

---

१. निरुक्तम्—३।२० : 'ऋक्षाः, स्तृभिर्' (निघण्टुः—३।२०।९-१०) इति नक्षत्राणाम्। नक्षत्राणि नक्षतेर्गति-कर्मणः। 'नेमानि क्षत्राणि' इति च ब्राह्मणम्।

(निरुक्तपञ्चाध्यायी, पृ० ४११)

२. अष्टा० ६।३।७५। नभ्राण-नपात्-नवेदा-नासत्या-नमुचि-नकुल-नख-नपुंसक-नक्षत्र-नक्र-नाकेषु प्रकृत्या। काशिकायाम्—नक्षत्र-न क्षीयत इति वा।.... क्षियः क्षरतेर्वा क्षत्रमिति निपात्यते।

३. गु-धृ-वी-पचि-यमि-सदि-क्षदिभ्यस् त्रः। (उणादिसू० ६०६ : ४।१६६) धातुपाठे निघण्टावपि क्षदः पाठोऽनुपलभ्यते। ऋग्वेदे (१।२५।१७, ११६।१६, ११७।१८, १०।७९।७) तथाऽथर्ववेदे शौनकीय—१०।६।५; पैप्पलादीय—१६।४२।५ इत्येतेषु दानार्थे निश्चितरूपेण प्रयुक्तोऽयमिति। कक्षीवत-दैर्घतमाः "शतं मेषान् वृक्ये चक्षदानमृष्वाश्वं त पिताान्धं चकार"। ऋग्वेदे (१।११६।१६) प्रयुक्त-क्षद्धातुना निष्पन्नस्य चक्षदानस्याशये 'शतं मेषान्वृक्ये मामहानम्' (११७।१७) अत्र मंह इति निष्पन्नस्य मामहानस्य प्रयोगं प्रदत्तवान्। मंहिति दानार्थकं "स्तोतृभ्यो मंहते मघम्" (ऋग्वेदे—१।११।३) मन्त्रमस्ति। 'तस्मै धृतं, पुशं, मध्वन्नमनं क्षदामहे।' (अ० सं० १०।६।५) इत्यत्रापि अस्मिन्नेवार्थेऽयम्। तुलनीयम्—शुनः—प आ जीगर्ति : सं नु वोचावहै पुनर्यतो मे मध्वामृतम्। होतेव क्षदसे प्रियम्॥ (ऋ०सं० १।२५।१७) अग्ने मित्रो न बृहत ऋतस्यासि क्षत्रा वामस्य देव, भूरेः। (६।१३।२) भरद्वाजबार्हस्पत्योक्तं क्षतेति पदमस्यैवार्थस्य पोषकम्। तुलना कार्या—'वाममद्य सवितर् वाममुश्वो, दिवे दिवे वाममस्मभ्यं सावीः' (६।७१।६) अग्निपावकस्य 'राति वामस्य'। 'क्षदमन्' अत्र क्षदित्यस्यार्थो दानं मारणमुत्क्षेपणञ्च प्रतीयते। परुच्छेप-दैवोदासिरनेन सह तिग्मस्योत्क्षेपणस्य च प्रयोगं कृतवान्। (असनाय तुलना : अस्त्रस्य) भूतांशकाश्यपः 'मरण्योः' प्रयोगेणास्यार्थमपुष्टयत्। दादृहाणो वज्रमिन्द्रो गभस्त्योः क्षद्मेव तिग्मासनाय संश्यत्; अहि-हत्याय संश्यत् (ऋ० सं० ११।१३०।४) तथा पज्रेव चर्चरं, जारं मरायु क्षद्मेवार्थेषु तर्तरीथ उग्रा ( ऋ० सं० १०।१०६।७ )। अतः क्षदित्यस्यार्थौ दानं मारञ्च प्रतीयते। भूतलिङ् रोथह्वीटनीमहोदयाश्चास्यार्थंस्मन्यन्ते।

४. प्राणो वै क्षत्रम्। प्राणो हि वै क्षत्रम्—त्रायते हैनं प्राणः क्षणितोः॥ (१४।८।१४।४)

५. क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः॥ (रघुवंशे—२।५३)

१०. नदी—नदस्य पुंस्त्वस्य स्त्रीलिङ्गे रूपम्। अत्र विषये भृगुरवोचद् यत् प्रवहणकाले ध्वनिकरणेन नदीत्युच्यते[1]। ऋग्वेदे यद्यपि नदीत्यस्य व्युत्पत्तिं न व्यरचीत्, तथापि पुंस्त्वेन नदशब्देन सह नादस्य प्रयोगप्रदर्शनाद् नदीत्यस्यापि व्युत्पत्तिः सूचितैव[2]। यास्कोऽपि नदीशब्दस्येमामेव व्युत्पत्तिं प्रदर्शितवान्[3]। अथर्वसंहितायां निर्वचनात्मिकया रीत्या विकसितपद्धत्या नदीत्यस्य व्युत्पत्तिर्वर्तते। ऋग्वेदे नदस्य व्युत्पत्तिस्तु व्यञ्जनाया विषयतामाप्नोति।

११. बलीयस्—पूर्वं दृष्टं यद् ऋग्वेदीया महर्षयः इष्ठन्-ईयस्-प्रत्ययौ धातु-विहितौ वर्तेते तथा कर्तृकारकतुलनाश्चार्थौ एतयोरेव सन्तोति प्रस्तुतवन्तः। कर्त्रर्थक-'तृ'प्रत्ययेन निष्पन्नशब्देभ्य 'इष्ठन्–ईयस्' इत्यनयोर्विधानं कृत्वा 'तृ' इत्यस्य लापविधानमङ्गीकृतवान् पाणिनिः[4]। 'अ–बल' इत्यनेन सह बलीयसः (बलवत्तरस्य)[5] प्रयोगदर्शनादेतत्कालं तया पद्धत्या ईयसः प्रयोगः प्रचलितोऽभवद् यद्विधानं पाणिनि-रकरोदित्यजल्प्युद्दालकेन। अर्थात् पाणिनिर्बलवदर्थे विद्यमानबल्शब्दादीयस्प्रत्ययस्य प्रयोगमवादीत्। ईयसोऽर्थस्तुलनामात्रत्वेनावशिष्टः।

१२. रक्षस्—वैदिकभाषायां 'रक्षः रक्षस्' इति द्वयोः शब्दयोर्दर्शनं जायते। प्रथमो आद्युदात्तः। द्वितीयो मध्योदात्तः। अर्थोऽनयोः समानतां भजति। अस्माद्रक्षणं त्राणं क्रियतेऽस्मादयं रक्षसित्यस्तीति व्युत्पत्तिरथर्ववेदसंहितायां प्रसिद्धा[6]। शतपथे रक्षित्यनेनैवास्य व्युत्पत्तिः सूचिता[7]; परन्तु तस्यार्थमवरोधनमिति कृतवान्। यास्के-नास्यानेनैव निर्वचनेन सहैवान्यव्युत्पत्तयोऽपि प्रदर्शिताः; किन्तु ता विज्ञानस्य विषयं

---

१ यददः सम्प्रयतीरहाव-नदता ह ते। तस्मादा नद्यो नाम स्थ; ता वो नामानि सिन्धवः॥ (३।१३।१)

२. रपद् गन्धर्वीरप्या च योषणा नदस्य नादे परि पातु मे मनः॥ (१०।११।२)

३. नद्यः कस्मात्? नदना भवन्ति—शब्दवत्यः। (निरुक्तम्—२।२४)

४. तुश्छन्दसि (अष्टा० ५.३।५९), तुरिष्ठेमेयस्सु (६।४।१५४), स्थूल-दूर–युव–ह्रस्व–क्षिप्र-क्षुद्राणां यणादिपरं पूर्वस्य च गुणः। (अष्टा० ६।४।१५६)

५. स नाकमभ्या–रोहति, यत्र शुल्को न क्रियते अबलेन बलीयसे॥ (३।२९।३)

६. या ओषधयो, या नद्यो, यानि क्षेत्राणि, या वना।
तास्त्वं वधु, प्रजावतीं पत्ये रक्षन्तु रक्षसः॥ (१४।२।७)
'प्रत्ये मुञ्चन्त्वंहसः' इति, आपस्तम्बमन्त्रपाठे चतुर्थपादः। (१।७।९) प्राप्यते।

७. देवान्ह वै यज्ञेन यजमानांस्तानसुर–रक्षसानि ररक्षुर्, 'न यक्ष्यध्व इति' इति। तद् यद-रक्षंस्, तस्माद्रक्षांसि।

न भजन्ते, प्रत्युत अन्धविश्वासिनो मनस उपजा[1] सन्ति। अतो व्युत्पत्तिरथर्ववेदस्योचिता विद्यते।

१३. सिन्धुः—वामदेवगौतम ऋग्वेदे सिन्धुरित्यस्य व्युत्पत्तिं सूचितवान्[2]। अथर्वसंहितायां भृगुः सिन्धुना सह वारमेकं व्युत्पाद्य पुनः परोक्षरूपेण स्यन्द्[3] इत्यस्य प्रयोगेण (नद्या सह) व्युत्पत्त्यन्तरमुक्तवान्[4]।

१४. स्कम्भ-स्तम्भ्—इमौ द्वौ धातू पर्यायौ स्तः, तथा संहितासु सुप्रयुक्तौ विद्येते। अथर्वा स्कम्भस्य ब्रह्मणो महत्त्वमुद्गिरन् तदर्थव्याख्यां स्तम्भस्य प्रयोगेण कृतवान्[5]। अनेन स्कम्भस्यार्थनिर्वचनन्तु भवत्येव कदाचित् 'स्तम्भ्' इत्यस्य लोकप्रियताप्रकाशोऽपि जायते।

१५. स्मर—स्मृशब्दोऽयं प्रत्यक्षवृत्तिकः परन्त्वथर्वसंहितायामस्य व्युत्पत्तेर्महत्त्वं द्वाभ्यां दृष्टिभ्यां वर्तते—

क. अयं स्मरशब्दः पुराणेषु कामदेवस्य स्मरेति नाम्ना अभिन्नोऽस्ति।

ख. अस्य निर्वचनं हेतुकथनपूर्वकनिर्वचनोयमनसैव कृतम्[6]।

---

१. रक्षो (१) रक्षितव्यमस्मात्; (२) रहसि क्षणोतीति वा; (३) रात्रौ नक्षत इति वा (४८१-४८५ पृ० द्रष्टव्यम्) (निरुक्तम्—४।१८)।

२. दीर्घामनु प्रसितिं स्यन्दयध्यै। पिपीले अंशुर्मद्यो न सिन्धुः॥ (ऋ० सं० ४।२२।७–८)
उप क्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः। (तत्रैव—१।१२५।४)

३. भृगुः जलपर्यायवाचकानां कतिपयशब्दानामुत्पत्तिमुद्गिरन् जलस्य सामान्यसंज्ञां सिन्धव इति कथयन् वारद्वयं स्यन्दमाना इत्यस्य प्रयोगं कृतवान्। तथा हि–'ता वो नामानि सिन्धवः' (३।१३।१) अपकामं स्यन्दमाना अवीवरत वो हि कम्। इन्द्रो वः शक्तिभिर्देवीस् तस्माद् वार्नाम वो हितम् (३)। एको हि देवोऽप्यतिष्ठत् स्यन्दमाना यथा वशम्। उदानिषु महीरिति तस्मादुदकमुच्यते॥४॥

४. उत्तिष्ठता प्रतरता सखायोऽश्मन्वती नदी स्यन्दत इयम्। (१२।२।२७)

५. यस्मिन्त्स्तब्ध्वा प्रजापतिर्लोकान्त्सर्वा अधारयत्।
स्कम्भं तं ब्रूहि कतमः स्विदेव सः। (१०।७।७)
स्कम्भेनेमे विष्टमिते द्यौश्च भूमिश्च तिष्ठत। (८।२)

६. रथजितां राथजितेयो नामाप्सरसामयं स्मरः। (६।१३०।१)
असौ मे स्मरतादिति, प्रियो मे स्मरतादिति।
देवाः प्रहिणुत स्मरम्–असौ मामनु शोचतु॥२॥

## निष्कर्षः

ऋग्यजुषोः संहितानां निर्वचनेभ्योऽथर्ववेदीयनिर्वचनेषु व्याकरणदृष्टया यद्यपि कश्चिद्विकासो न भवेत्, तथापि प्राविधिकीदृष्ट्या निर्वचनानीमानि निश्चप्रचं विकासस्थितौ वर्तन्ते। यतोऽस्यां संहितायां व्युत्पत्तेर्व्याकरणपक्षः पूर्णतया विकसित आसीत्। डॉ० सिद्धेश्वरवर्मणोऽनुसारं वैदिकनिर्वचनानीमानि यथार्थरूपेण निर्वचनानि न सन्ति। प्रत्युत निर्वचनदिक्सूचकसम्बद्धशब्दानां प्रयोगत्वेनैव सन्ति[1]; परन्तु विषयेऽस्मिन् विश्रब्धोऽस्मि यद् वर्मामहाशयः अथर्वसंहिताया निर्वचनानां सम्बन्धे तथा कथयितुं नार्हतीति विश्वासः। अथर्ववेदीयनिर्वचनेषु शब्दानां प्रयोगक्षेत्रं प्रकरणञ्च पूर्णतया ध्यानगर्भितं कृतमस्ति। अस्याः प्रवृत्तेरुदाहरणानि अपामार्गस्येन्द्रजालस्य रक्षसश्च निर्वचनान्येव सन्ति।

व्याकरणदृष्टया बलीयसो निर्वचनमुदाहरणं भवितुमर्हति विकासस्य। पूर्वोक्तसंहितासु ईयस्-प्रत्ययः कृदन्तीय एव लगति; परन्त्वत्रायं तद्धितीय एवास्ति पश्चादयं तद्धितीय एवेति सर्वैरङ्गीकृतम्।

## कृष्णयजुर्वेदीयनिर्वचनानि[2]

स्वपश्चाच्चर्चितव्युत्पत्तीनामाधारे वैदिकवाङ्मयोपलब्धनिर्वचनानां भागद्वयं कर्तुमर्हति ओङ्कारनाथः —

---

१. The author takes up a magnificent description of etymologies attempted in the whole field of vedic Literature,...... these may not be called etymologies proper, but setting up of associ ated words together indicate a notable etymological tresd even among the earliest Vedic poets. विश्वेश्वरानन्द इण्डॉलॉजिकल् जर्नल, Vol. VIII (1970), Literary Reviews.

२ व्यस्ततायाः कारणात्कृष्णयजुर्वेदस्य समस्तोपलब्धनिर्वचनानामालोडनं न कृतवान्। प्रकृताध्ययनेऽतः कृष्णयजुर्वेदस्य प्रतिनिधिरूपे तैत्तिरीयसंहितायाः कपिष्ठलकठसंहितायाश्च निर्वचनविवरणं दीयते। वैदिकवाङ्मयभाषाचिन्तनाय कृतप्रतिज्ञोऽपि समस्तसंहितासाहित्यस्याध्ययने न पारं गतोऽतः चेखिद्ये तथा पाठकान् क्षमां याचे। प्रकृताध्ययने सातवलेकरजीवस्य वि० सं० २०१३ (१९५७) ईस्वीये प्रकाशितद्वितीयसंस्करणस्योपयोगं कृतवान्। एतत्सन्दर्भसंकेतविवरणमेतादृशम्—प्रथमसंख्या काण्डस्य, द्वितीयसंख्या प्रपाठकस्य, तृतीयसंख्या कण्डिकायाः, अन्तिमा संख्या एतत्संस्करणे कण्डिकागतवाक्यानामुपरि लघ्वक्षरे प्रदत्तसंख्यायाः सूचकमस्ति। ग्रन्थनामरहितसन्दर्भाङ्क एतत्संहितयाऽभिप्रेतोऽस्ति।

१. परोक्षनिर्वचनम्—वर्गेऽस्मिन् तेषां निर्वचनानामुपलब्धिर्भवति येषां प्रकृति-विकृत्योर्मध्ये यो विद्यमानः सम्बन्धोऽस्ति स एतयोर्युगपत्प्रयोगेणानुमीयते। एतत्सम्बन्धस्य साक्षात्कथनं न जायते। ऋग्वेदसंहितायास्तथा माध्यन्दिनसंहिताया निखिलानि निर्वचनानि एतद्वर्गस्यैव प्रातिनिध्यं सम्पादयन्ति। अथर्ववेदीयाधिकांशनिर्वचनान्यप्येतद्वर्गागमनयोग्यानि विद्यन्ते।

२. प्रत्यक्षनिर्वचनम्—अत्र शब्दस्य प्रकृतिविकृत्योः सम्बन्धचर्चा यत्र हेतुपूर्विका कृताऽस्ति, तान्येव निर्वचनानि वर्गमिममागच्छन्ति। अथर्ववेदस्य कतिपयनिर्वचनानि वर्गस्यास्य प्रतिनिधित्वं कुर्वन्ति[१]।

## तैत्तिरीय-संहिता-निर्वचनानि

अत्रेमानि द्विप्रकारकाणि निर्वचनानि मिलन्ति। सर्वाणि १२७ शब्दानां निर्वचनानि पञ्चत्रिंशदधिकशतप्रयोगाणां माध्यमेन कृतानि सन्ति। एषु–(अ) चतुःपञ्चाशत्-शब्दानां परोक्षनिर्वचनम्। (ब) षट्षष्टिशब्दानां प्रत्यक्षनिर्वचनमस्ति। (स) त्रयाणां शब्दानामुभयविधात्मकं निर्वचनम्, तथा (द) चतुर्णां शब्दानामर्थ-निर्वचनं मिलति।

अत्र संहितायामुपलब्धनिर्वचनानां विषये तथ्यमेतद् ध्यातव्यं यत् पूर्वोक्ताः संहिता मन्त्ररूपे सन्ति। तासु शब्दव्युत्पत्तिकथनं प्रकृतौचित्ये न रक्षति स्म। तैत्तिरीय-सहितायां ब्राह्मणमपि सम्मिलितमस्ति। तथाऽस्यां मन्त्रकर्मकाण्डयोर्व्याख्याया[२] अभिप्रेतत्वकारणान्मन्त्रगतमहत्त्वपूर्णशब्दानां कर्मकाण्डगतपारिभाषिकशब्दानाञ्च व्याख्या प्रकृता तथौचित्यपूर्णाऽऽसीत्। एतत्संहितान्तर्गतनिर्वचनानि प्रायशो ब्राह्मणभाग एवोपलभ्यन्ते। मन्त्रान्तर्गतोयनिर्वचनमल्पसंख्यकमस्ति तथा सर्वं परोक्षनिर्वचनं वर्तते। ब्राह्मणभागेषु प्राप्तनिर्वचनानां प्रत्यक्षनिर्वचनसंख्याऽधिकाऽस्ति।

### (१) परोक्षनिर्वचनम्

१. अक्ष ᐸ √अञ्ज्—अस्य शब्दस्य व्युत्पत्तिविषये भाषाशास्त्रिणां मतभेदो दृश्यते। यास्को [३]वाहनानां धूर्वाचक-अक्षस्य व्युत्पत्तिं तैलादिना स्निग्धत्वाद् अञ्ज्-

---

१. ३।१३ अथर्वसंहितायामुपलब्धानामापः, उदकम्, नदी, वार्—इत्येतेषामन्यत्रोपलब्धाज्य-स्मरयोर्निवचनानि द्रष्टव्यानि।

२. ब्रह्म = वेदः, तस्य व्याख्यानं ब्राह्मणम्। तस्य व्याख्यान इति व्याख्यातव्यनाम्नः। अष्टाध्याय्याः ४।३।६६ सूत्रमवलोकनीयम्। एतद्वै ब्राह्मणम्—'सोमाय पितृपीताय' इति मन्त्रस्य व्याख्यानरूपमेतद् ब्राह्मणम्।

३. अक्षो यानस्याञ्जनात्। तत्प्रकृतीतरद् वर्तनसामान्यात्॥ (निरुक्तम्—१३।१२)

धातुना प्रावोचत् । स द्यूतक्रीडासाधनीभूताक्षेण सहोभयोः परिभ्रमणक्रियायां साम्यादर्थान्तरे[1] प्रयुक्तमङ्गीकृतवान् । शाकटायनस्तु द्यूतक्रीडासाधनीभूताक्षं टीकानुसारम् अशित्यनेनोक्तवान्[2] । तैत्तिरीयसंहितायां यानसाधनाक्षस्य व्युत्पत्तिम् अञ्ज्-धातुना निष्पादितवान्[3] ।

२. अरातीयः —शत्रुपर्यायारातेः प्रयोगेण सह नामधातुज-'अरातीयत्' इत्यस्य सेनावाचकपृतनाशब्देन सार्द्धं तन्नामधातुज-'पृतन्यत्' इत्यस्य प्रयोगं कृत्वानयोर्वैयुत्पत्तिकसम्बन्धस्य ज्ञानं सूचितवान्[4] । स्थलेऽस्मिन् षड्वारं 'सह' इति प्रयोगानन्तरमुपर्य्युक्तसर्वासां षट्सहनक्रियाणां समुचितपराक्रमं सहस्रवीर्यशब्दस्य प्रयोगेण बोधितवान् । अत्र सहस्रपदं न केवलं संख्यावाचकम्; अपि तु सहनसमर्थार्थे यौगिकः प्रतीयते । अनेन 'सहस्र <सह्' व्युत्पत्तिः सूचिताऽभवत्[5] ।

३. आर्तिः —शब्दोऽयं दुःखपीडादुर्गतिविषयवाचकोऽस्ति । अस्यां संहितायामस्य शब्दस्य प्रयोगः कदाचिद् 'ऋ' इत्यनेन सह, जातुचिद् 'ऋच्छ्' इत्यनेन सार्द्धं जातः[6] । पाणिनीयतन्त्रे धात्विमौ परस्परसम्बद्धौ[7] स्तः । अत्राप्येवमेव प्रतीयेते ।

---

१. यानचक्रस्य भ्रमणार्थे बहुधा वर्णितम् । तथा हि—विवर्तेते अहनी चक्रियेव ।
(ऋ० सं० १।१८५।१)

नीचा वर्तन्त, उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते ।
दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति ॥ (ऋ० सं० १०।३४।९)
लौकिकेऽपि कालक्रमेण जगतः परिवर्तमाना चक्रार-पङ्क्तिरिव गच्छति भाग्य-पङ्क्तिः ।
नीचैर्गच्छत्युपरि च दशा चक्र-नेमिक्रमेण । (स्वप्नवासवदत्तम्—१।४)

२. उणादिसूत्रम्—३४५ (३।६५) : अशेर्देवने । तत्त्वबोधिनी—अशू व्याप्तौ (मा० धा० वृ० ५।१८) अस्माद् देवने वाच्ये स स्यात् ।

३. यथाऽक्षोऽनुपाक्तोऽवाच्छंति ।। (२।६।३।५)

४. सहोऽसि, सहमानमसि, सहस्वारातीः, सहस्वारातीयतः, सहस्व पृतनाः, सहस्व पृतन्यतः । सहस्र—वीर्यमसि । (१।६।१।२)

५. अयं सहस्रमृषिभिः सहस्कृतः समुद्र इव पप्रथे । (ऋ० सं० ८।३।४)
व्रता रक्षन्ते अमृता सहोभिः पुरु सहस्रा जनयो न पत्नीः ॥ (ऋ० सं० १।६२।१०)
अस्मिन् सन्दर्भे निरुक्तमपि द्रष्टव्यम्—३।१० : सहस्रं सहस्वत् ।

६. आर्तिमाऽरिष्यति (२।६।६।१, ८।११; ६।२।८।६) । आर्तिमार्पयन्ति (३।२।४।१३) । आर्तिमार्च्छेयुः (३।१।३।५) । आर्तिमार्च्छंति (३।२।४।१३) । आर्तिमार्च्छंन्ति (३।१।३।५) ।

७. अष्टा० ७।३।७८ : पा-घ्रा....र्ति....सदां पिब-जिघ्र....ऋच्छ....सीदाः । धातुपाठे-'ऋ' गतिप्रापणयोः । ६।१६ । ऋच्छ गतीन्द्रिय-प्रलय-मूर्ति-भावेषु ।

४. उदकम् √उन्द्—जलवाचकोदन्नुदकशब्दो 'उन्द्' इत्यस्माद् व्युत्पन्नो स्तः। एतच्चर्चा पूर्वं कृता मया[१]। तैत्तिरोयसंहितायां जीवनाय जलमुन्दनं कुर्याः। [२]कथनेऽस्मिन् 'आप' इत्यनेन सहोन्दित्यस्य प्रयोगेण जलप्रशंसाकथनेन सहायःपदस्यार्थनिर्वचनं कृतमस्ति।

५. पङ्क्तिः—शब्दोऽयं पञ्चसंख्यावाची तथा पङ्क्तिशब्दः पञ्चानां समूहस्य वाचकः। शब्दोऽयं व्युत्पत्तिदृष्टया पञ्चन्नित्यस्य समानधर्मत्वमाप्नोति। तथा विंशति-षष्टि-सप्तति-शब्दादोनां श्रेण्यन्तर्गतोऽस्ति[३]। पाश्चात्त्या विद्वांसः पञ्चन्-घटकचकारस्य स्थाने ककारस्य मौलिकतायाः कल्पनां कृतवन्तः।

६. पेरुः √पा—मन्त्रप्रयुक्त-'पेरु' इत्यस्य व्याख्या 'पा' पाने धातुना निष्पन्न-पातु[४]शब्देन कृताऽस्ति। शाकटायनः 'पो' (पोना) इत्यस्मादस्य व्याख्यां कृतवान्। भट्टोजिदीक्षितस्तु 'पा' पाने इत्यस्माद् [५]बाहुलकाद् व्याख्यां कृतवान्। एरु-प्रत्ययान्त-पेरुशब्दो मदेरुः सनेरुः इत्यादिना तुलनीयः।

७. रज्जुः √सृज्—रज्जुशब्दस्य व्युत्पत्तौ भणितवानहं यद् दोर्घतमस्-औचथ्येन रश् इत्यस्मादभिप्रेतम्[६]। अस्यां संहितायामयं 'सृज्' (बनाना) सर्जनार्थकेन व्युत्पन्नम्[७]। परवर्तिभाषाशास्त्रिणस्तैत्तिरोयसंहितोक्तां व्युत्पत्तिमेवाङ्गीकृतवन्तः[८]।

८. लभ्-लम्भ्—रभ्-धातुः 'रम्भ, रभ्' इत्यनयोः स्वरूपयोरुपलब्धो भवति। तेनैव प्रकारेण 'रभ्' [९]इत्यस्माद्विकसितो 'लभ्' इत्यपि रूपद्वये मिलति। प्रथमो 'लभ्'

---

१. इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे। (५।५७।१)
चर्मेवोदभिर्व्युन्दन्ति भूम। (ऋ० सं० १।८५।५)

२. आप उन्दन्तु जीवसे। (तै० सं० १।२।१।१)

३. पङ्क्ति—प्रायणो वै यज्ञः पङ्क्त्युदयनः। पञ्च प्रयाजा इज्यन्ते—चत्वारः पत्नी—संयाजाः समिष्ट—यजुः पञ्चमम्। पङ्क्तिमेवानु प्रयन्ति; पङ्क्तिमनूद्यन्ति। (२।६।१०।७)

४. 'अपां पेरुरसि' इत्याहैष ह्यपां पाता यो मेघागारभ्यते। (६।३।६।१४) अत्र पेरुरश्ववाचकः। ऋग्वेदसंहितायामपि पेरोरन्तोदात्तस्यायमेवार्थः।

५ उणादिसूत्रम्—५४१ (४।१०१) मीपोभ्यां रुः। सिद्धान्तकौमुद्यां पेरुः=सूर्यः। वासुदेव-दीक्षितस्य ग्रन्थे सूत्रम्—'मिपिभ्यां रुः'। अत्रैवं लगति यत्सः पीत्यस्य स्थाने "रिपि गतौ" (मा० धा० वृ० ६।१२०।१) इत्यत्र पठितः पिधातुर्गत्यर्थक इत्युक्तवान्। ज्ञानेन्द्रसरस्वतो तु पीङ् पाने (मा० धा० वृ० ४।३३) पीयते रसानिति पेरुरिति व्याख्यातवान्।

६. यद् वाजिनो दाम सन्दानमर्वतो, या शीर्षण्या रशना रज्जुरस्य। (ऋ० सं० १।१६२।८)

७. या रज्जुं सृजति, तस्या उद्बन्धुकः। (२।५।१।७)

८. द्र० निरुक्तम्—२।१; उणादिसूत्रम्—१५ : सृजेरसुम् च।

९. पशुमेधप्रकरणे ह्येतद्द्वयमालभ्यते, मेधायालभन्त। (६।३।५।१) मेधायारभ्यते। (६।१४)

द्वितीयो 'लम्भ्' इति। अयम् 'आ' उपसर्गकः पशुमेधप्रसङ्गे आयाति। तैत्तिरीय-संहितायामस्य द्वयो रूपयोः [1]प्रयोगोऽस्यैतत्सम्बन्धसूचको विद्यते। पाणिनिस्तु 'लभ्' इति प्रकृतिं मत्वाऽत्र नासिक्यध्वनेरागमने 'लम्भ्' इति निष्पादितवान्[2]।

**(२) प्रत्यक्षनिर्वचनम्—**

तैत्तिरीयसंहितायामेतच्छ्रेण्या निर्वचनानां संख्यायाः सर्वाधिक्यं (६६।४५) वर्तते।

१. अतिग्राह्याः—शब्दोऽयं कर्मकाण्डस्यैकः पारिभाषिकः। तैत्तिरीयसंहिता-यामेतादृशो व्याख्याऽस्येति। देवा इन्द्रपराक्रमं विभाजितवन्तः। यः शिष्टोऽभवत्, स अतिग्राह्येति नाम्ना प्रसिद्धोऽभूत्। या अतिग्राह्या गृह्यन्ते तत्तासामतिग्राह्यात्वम्। तस्यामवस्थायां यजमान इन्द्रस्यैव पराक्रमं धारयति[3]। अतिग्राह्येति नाम्नः–(१) अति-शेषणम् (२) तथा ग्रहणमिति यत्कारणद्वयमस्ति, तन्न केवलं हेतुकथनपूर्वकमपि तु व्युत्पत्तिकथनान्तरमतिग्राह्याणामतिग्राह्यत्वमस्तीति कथयित्वा निर्वचनं पुष्टवान्।

२. अश्व <√ श्वि:—हयवाचकस्याश्वशब्दस्यैतादृशं व्युत्पत्तिकथनं विमृशन्तु भवन्तः। प्रजापतेर्वामाक्षिशोथत्वमवाप, तत् पतितवान्। पश्चात्तदश्वत्वमैत्। यच्छोथत्वं तदेवाश्वस्याश्वत्वम्। तद्देवा अश्वमेधेन प्रत्यावर्तितं स्थापितवन्तः[4]।

---

१. तेऽग्निमेवाग्नये मेधायालभन्त। न ह्यन्यदालम्भ्यमविन्दन्। ........यत्पशुमालम्य........। (६।३।५।१-२)

२. अष्टा० ७।१।६४ : लभेश्च। ६५ : आङो यि। तथा ६६-६९।

३. द्र० ६।६।८।१ : देवा वा इन्द्रियं वीर्यं व्यभजन्त। ततो यदत्यशिष्यत, तदतिग्राह्या अभवन्। तदतिग्राह्याणामतिग्राह्यत्वम्। यदतिग्राह्या गृह्यन्त, इन्द्रियमेव तद्वीर्यं यजमान आत्मनि धत्ते। अग्रे स्त्रीलिङ्गप्रयोगो जातः 'यदति-ग्राह्याश्चक्रे।' अत्र तद्धितीयत्वपूर्वस्थिता-कारस्य ह्रस्वो जातः। अमावास्यत्वम् (२।५।३।१३), पृथिवित्वम् (७।१।५।१), वसती-वरित्वम् (६।४।२।१), वेदित्वम् (६।२।४।६) पृथिवित्वमित्यादिषु ह्रस्वे इकारस्येति मे मतिः। अग्रिमोद्धृतं तथा संयानित्वम्। (५।३।१०।४) एतद्व्याकरणलक्षणोपपन्नमस्ति। द्र० अष्टा० (६।३।६४) : त्वे च। काशिका सञ्ज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्तीति काशिकाः एतत्प्रयोगेण विदितो भवति यत् तस्मिन् काले स्त्रीलिङ्गस्य तथा तद्वाचकप्रत्ययांशस्य शब्दागन्तुकत्वं मन्यन्ते स्म। माध्यन्दिनसंहितायां तथा काठकपरम्परायां विशेषतेयं नोपलभ्यते। तत्र दीर्घात्मकान्येव रूपाणि मिलन्ति।

४. प्रजापतेरक्ष्यश्वयत्। तत्पराऽपतत्। यदश्वयत्। यदश्वयत्, तदश्वस्याश्वत्वम्। तद्देवा अश्वमेधेनैव प्रत्यदधुः। (५।३।१२।१)

३. आपूर्य < आ + पृ : इयमपि कर्मकाण्डप्रयुक्तकस्यचनपदार्थस्य गुणाभिधानात्मिका संज्ञा वर्तते। एतद्विषयेऽद उक्तवान्। त्वमापूर्यार्थात् सन्तानेन धनेन च मां परिपूरय[१]। अत्र व्युत्पत्तिस्तु स्पष्टतया प्रदर्शिता; परन्तु पूर्वोक्तनिर्वचनानां विवरणं न दत्तवान्।

४. क्रोशः —अयमपि पारिभाषिकः शब्दः। अन्तर्गच्छतां देवानामिन्द्रसम्बन्धिपराक्रमो निष्कसितवान्। वार्तेयमुक्ता क्रोशशब्दस्य व्याख्यायाम्। तं पराक्रमं क्रोशेनावरोधितवन्तो देवाः। असावेव क्रोशस्य क्रोशत्वं विद्यते[२]। अत्र क्रोशस्य कर्मकाण्डगतं महत्त्वमवर्णयत् किन्तु व्युत्पत्तिं स्पष्टतया नावादीत्।

५. नवनीत < √नव + √इ, ६. सर्पिष् < √सृप् —यज्ञे प्रयुज्यमानस्य घृतस्य पर्याययोरनयोरेवं व्याख्या कृताऽस्ति। तथा हि—यो नवतामागतः स, नवनीतोऽभवत्। यश्च प्रवहमानतां गतः स सर्पिरभूत्[३]। यो लिप्तामवस्थां गतः स घृतमभूत्[४]। अत्र हेतुकथनेन सह नामप्रकृतिं समीरितवान्; किन्तु त्वेत्यस्य प्रयोगं कुर्वन् तत्पुष्टिं न कृतवान्।

७. वेदी —विद् लाभे धातुना निष्पादितः पारिभाषिको वेदीशब्दः। अर्थभेदेनास्य व्याख्याद्वयमेकेनैव धातुनावलोक्यते। तद्यथा—पारेसप्तपर्वतं वराहेण धृतमसुरधनं तान् पर्वतान् त्रोटयित्वा इन्द्रो वराहं हत्वा गृहीतवान्। वेदीत्वस्यैकं कारणमिदमस्ति। (२) पृथिव्यामसुराणां प्रभुत्वमासीद्। देवताधिपत्यं तावदेवासीद् यावदुपविष्टो जनः पृथिवीमवलोकयति। देवतास्तानसुरान् स्वांशमयाचन्त। तदासुरा एवं निश्चितवन्तो यद्देवाः सलावृकी त्रिःकृत्वा परिक्रमेयुः। यावत्परिक्रमिता

१. आ पूर्या स्थाऽऽमा पूरयत प्रजया धनेन च।

२. देवानां वा अन्तं जग्मुषामिन्द्रियं वीर्यमपाक्रामत्। तत् क्रोशेनावरुन्धत। तत् क्रोशस्य क्रोशत्वम्। (७।५।८।१)

३. यन्नवमैत्तन्नव-नीतमभवत्। यदसर्पत्तत्सर्पिरभवत्। (२।३।१०।१) द्रष्टव्यम्।

४. तैत्तिरीयसंहितायां धारणार्थक-'धृ' इति प्रयुक्तवान्। तत्र यद्ध्रियत, तद्घृतमभवत्। मैत्रायणी (२।३।४।१३; ५।२०) तथा काठकसंहितायां कवर्गीयचतुर्थादि 'घृ' इति प्रयुक्तमस्ति (११।७।१३) तत्र यदघ्रियत, तद् घृतमभवत् (मै० सं०) यदघ्रियथास् तद् घृतमभवः। (का० सं०)। अतस्तैत्तिरीयसंहितायाः पाठो भ्रष्टः प्रतीयते। यद्वा, कवर्गवतो 'घृ' इत्यस्यार्थनिर्वचनं तवर्गवता 'धृ' इत्यनेन कृतं विद्यते। कवर्गादिघृतेन सह पूर्वकथितसंहितासु स्थापितं सम्बन्धं दृष्ट्वा मम हृदये प्रथमविकल्प एव पुष्टतां गृह्णाति। तत्त्वं वेत्ति महेश्वरः।

भूर्भविष्यति तावद् भूस्तेषां देवानां कृते। तदेन्द्रः स्वयमेव सलावृको भूत्वा सम्पूर्णां पृथिवीं परिक्रम्य प्राप्तवान्। अनेन हेतुना पृथिवी वेदीति कथ्यते[1]।

## परोक्षप्रत्यक्षोभयविधानि निर्वचनानि

१. अमावास्या—अमा + वस्—अस्य द्विप्रकारकं निर्वचनं मिलति। तदमावास्याया अमावास्यात्वमस्ति[2]। एकत्र स्थिता देवाः, हे अमावास्ये! त्वन्महिम्नैव स्वांशं स्थापितवन्तः[3]। कथनेऽस्मिन् 'सं + वस्' इत्यस्य प्रयोगेण परोक्षरूपेणास्यार्थस्पष्टीकरणमभवत्।

मम मते त्वस्य शब्दस्य मूलम् 'अमा' इत्येवासोत्। तथा पश्चाद् वास्येत्यंशोऽनेन संयुक्तोऽभवत्। 'अमा'शब्दः 'अ + मास्' इत्यनेन विकसितोऽभिप्रतीयते, न तु 'साथ' 'सचा' (तु. सचिव, अमात्य) इत्येतत्पर्यायवाचकेन 'अमा' इत्यनेनाभिप्रतीयते। अत्र मास् इति चन्द्रार्थे विद्यते। चन्द्रार्थे 'मास्' इत्यस्य प्रयोगो वैदिकवाङ्मये बहुवारमजायत। ऋग्वेदे यत्र सूर्यचन्द्रयोरर्थे 'सूर्याचन्द्रमस'योगस्य वारत्रयं प्रयोगो प्राप्यते, तत्रैव 'सूर्या-

---

१. द्र० ६।२।४।५-६ : स विष्णुः अब्रवीत्—वराहोऽयं वाममोषः सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्ति। तं जहि ···· । स दर्भपुञ्जीलमुद्वृह्य सप्त गिरीन्भित्त्वा तमहन्। सोऽब्रवीद्·········एतदाहरेति। तमेभ्यो यज्ञ एव यज्ञमाहरत्। यत्तद्वित्तं वेद्यमसुराणामविन्दत, तदेकं वेद्यै वेदित्वम्। असुराणां वा इयमग्र आसीत्। यावदासीनः परा-पश्यति, तावद्देवानाम्। ते देवा अब्रुवन्—अस्त्वेव नोऽस्यामपीति। कियद्वो दास्याम? इति; यावदियं सलावृकी त्रिः परिक्रामति, तावन्नो दत्तेति। स इन्द्रः सलावृकीरूपं कृत्वेमां त्रिः सर्वतः पर्यक्रामत्। तदिमामविन्दन्त। यदिमामविन्दन्त, तद्वेद्यं वेदित्वम्। अत्र समासोऽपेक्षितः। परन्तु मुद्रितसंहितायामिमौ पृथक्-पृथक् स्तः। उभावन्तोदात्तौ।

२. इन्द्रो वृत्रं हत्वा परां परावतमगच्छद् 'अपराधम्' इति मन्यमानः। ता देवताः प्रैषमैच्छन्। सोऽब्रवीत्—प्रजा-पतिर्नः प्रथमोऽनु-विन्दसि, तस्य प्रथमं भागधेयमिति।····सोऽमावास्यां प्रत्यागच्छत्। तं देवा अभिसमगच्छन्त-अमा वै नोऽद्य वसु वसतीति। इन्द्रो हि देवानां वसु। तदमावास्याया अमावास्यात्वम्। ( २।५।३।१२-१३ )

३. यत्ते देवा अदधुर्भाग-धेयममा-वास्ये संवन्तो महित्वा। (३।५।१।२)
मन्त्रोऽयं किञ्चित् पाठभेदेन दृष्टिगोचरीभवति। (अथर्वसंहितायाम्—७।७९।१) मानवश्रौतसूत्रे (६।२।३) 'संवसन्तः' इत्यस्य स्थाने 'संविशन्तः' इति पाठोऽवलोक्यते। पूर्वटिप्पण्यामुद्धृतं तैत्तिरीयसंहितोक्तकथायाः किञ्चित् सूत्रम् अथर्वसंहिताया उपर्युक्तसूत्रेऽस्ति। तत्रापि अर्धप्रत्यक्षरूपेणामावास्याया इयमेव व्युत्पत्तिः प्रदत्ताऽस्ति। 'अहमेवास्म्यमावास्या—माऽमा वसन्ति सुकृतो मयीमे'।

मास' इत्यस्य पञ्चकृत्वः प्रयोगोऽभवत्[१]। कतिपयप्रयोगेषु एकमाशयं 'सूर्याचन्द्रमस' इत्यस्य प्रयोगेण व्यक्तमकरोत्, तत्रैवान्यस्मिन् प्रयोगे तं 'सूर्यामास' इत्यस्य प्रयोगेण प्रकटितवान्[२]। एकाकिनो मासशब्दस्य प्रयोगोऽपि चन्द्रार्थेऽभवत्[३]। एकत्र 'अमा' चन्द्रहीनतिथिवाचकः, तत्रैव 'अमा' पूर्णचन्द्रवत्यै तिथये प्रयुक्त-'पूर्णमास'[४] इत्यनेन निष्पन्नतद्धितीया पौर्णमासीत्यपि एतदर्थस्य पोषिका वरीवर्ति। अत्रापि मासः = चान्द्र एव, न तु पक्षद्वयात्मको मासः। वैदिककाले चन्द्रवन्तं पक्षं पूर्वपक्षेण तथान्धकारवन्तमपरपक्षेणाशंसितो वर्तते[५]। संहिताकाले चन्द्रयुक्तस्य पक्षस्य पूर्वपक्षत्वम्, तमसा युक्तस्या-

---

१. द्र० सूर्या–चन्द्रमसः १।१०२।२; ५।५१।१५; १०।१९०।३ (ऋग्वेदे)।
सूर्या–मासः ८।९४।२; १०।६४।३; १०।६८।१०; १०।९२।१२; १०।९३।५ (ऋग्वेदे)।

२. अस्मे सूर्या–चन्द्रमसाऽभि-चक्षे श्रद्धे कमिन्द्र चरतो वितर्तुरम। (ऋ० सं० १।१०२।२)
सूर्या–मासा दृशे कम् (८।९४।२)। यात्सूर्या–मासा मिथ उच्चरातः। (१०।८६।१०)
स्वस्ति पन्थामनु चरेम सूर्या–चन्द्रमसाविव (५।५१।१५)। सूर्या-मासा वि चरन्ता दिवि क्षिता। (ऋ० सं० १०।९२।१२)

३. सूर्ये ज्योतिरदधुर्मास्यक्तून् (ऋ० सं० १०।१२।७) (वैदिककाले कालस्य गणना चन्द्रमसमाधारीकृत्य भवति स्म।) अवलोकनीयम्—

पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परि यातो अध्वरम्।
विश्वान्यन्यो भुवनाऽभि-चष्टे, ऋतुरन्यो विदधज्जायते पुनः। (ऋ० सं० १०।८५।१८)
कस्मादङ्गाद्दिमिमीतेऽधि, चन्द्रमा महस्कम्भस्य मिमानो अङ्गम्॥ (अ० सं० १९।७।२)
अतस्तं मासः मास्—इत्युक्तवानासीत्। एतत्तुल्यान्यः मास्-मास-शब्दोऽपि दरीदृश्यते। तुलनीयं निरुक्तेन—११५: 'चन्द्रमाश्.......चन्द्रो माता।'

४. अदन्त-मासशब्दः, हलन्त-मास्शब्दोऽपि प्राप्यते। द्रष्टव्यम्–चित्रानक्षत्रस्य पूर्णचन्द्रमा = चित्रापूर्णमासः (७।४।८।३) तिष्यनक्षत्रस्य पूर्णचन्द्रे = तिष्यपूर्णमासे निर्वपेत् (२।२।१०।२)। पूर्णचन्द्रोपलक्षितपौर्णमासेष्टीत्यस्मै पौर्णमासहलन्तस्य प्रयोगः मैत्रायणासंहितायां (१।९।५) लभ्यते। तेज सेकं पूर्णमा इज्यते।........आयुषे कममावास्येज्यते। काठक-सं० ९।१३-१४ द्रष्टव्यम्।

५. नवो-नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम्।
भागं देवेभ्यो विदधात्यायन्प्र चन्द्रमास्तिरते दीर्घमायुः॥ (ऋ० सं० १०।८५।१९)
निरुक्ते—११।५ द्रष्टव्यम्: 'नवो-नवो भवति जायमानः' इति पूर्वपक्षादिमभिप्रेत्य। 'अह्नां केतुरुषसामेत्यग्रम्' इत्यपरपक्षान्तमभिप्रेत्य। एतत्पूर्वम्—'यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनः' इति, पूर्वपक्षापरपक्षाविति वा। वाक्येऽस्मिन् कृष्णपक्षाय पूर्वपक्षस्य प्रयोगश्चिन्त्यः। अत्र सम्भवतो मन्त्रगतवर्णनेन यथासङ्ख्यं नाभिप्रेतम्। पूर्वपक्ष-

परपक्षत्वं वावदितम्। अतो मासस्य पूर्णतामावास्यानिहिता न तु पूर्णिमानिहिताऽस्ति[१]। यथा 'अमास'-'अमास्' इत्यनेन प्रकारेण विकासो बोध्यते, तथैव 'पूर्णमास-' 'पूर्णमास्' इत्यनेन पूर्णिमाशब्दो विकसति। एवमेव मण्डलब्राह्मणोपनिषदि तथाथर्वपरिशिष्टेऽपि प्रयुक्तः पूर्णिमाशब्दो विकसितो मद्विचारपोषकोऽस्ति। मैत्रायणीसंहितायां ज्योतिष्मतीरित्यनेन सह प्रयुक्त-( अमस्वरोः )[२] शब्दोऽपि प्रतिपादयत्यमावदन्धकारवन्तं पक्षमिति।

एवं कालान्तरे 'अमास' इति विकसिता मासार्द्धार्थे स्थिता जाता। अस्यां तिथौ सूर्याचन्द्रमसौ भवत एकत्राविति। ऋग्वेदे शब्दोऽयं न केवलेऽस्मिन्नर्थे प्रत्युत गृहार्थेऽपि प्रयुक्तोऽभवत्[३]। अमावास्याशब्दस्य प्रयोगोऽथर्वसंहितायाश्चतुर्मन्त्रावच्छिन्ने सूक्ते तथान्यान्यपञ्चमन्त्रेष्वपि दरीदृश्यते[४]। आथर्वणपरम्परातिरिक्तस्यास्य शब्दस्य प्रयोगस्तैत्तिरीय-मैत्रायणीसंहितयोरमावास्येति रूपे तथा काठककपिष्ठलकठसंहितयोरमावस्येति रूपे वर्तते। पैप्पलादसंहितायामेतद्रूपद्वयं मिलति। अथर्वातिरिक्ततैत्तिरीयसंहितायामस्य निर्वचनं समीरितं वर्तते। एतद्द्वयोः संहितयोरस्य निर्वचनं धार्मिकपरिप्रेक्ष्य एवाभवत्। (क) सुकर्मकारिणस्तथा देवा अत्र निवसन्ति। (ख) वसवोऽत्र वसन्ति।

---

स्याभ्यर्हिततायाः कारणात् पूर्वापरक्रमकारणादेवोपर्युक्तक्रमं प्रदत्तवान्। कृष्णपक्षः पूर्वपक्ष इति स्वीकारे। i. स्वीयाग्रिमकथनेन स्पष्टविरोधो जायते। ii. पूर्वपक्षो राकाऽपरपक्षः कुहूः (३।४।९।११)। पूर्वपक्षे सुत्या सम्पद्यते (७।४८।३) इत्यादि श्रुतिवचनविरोधोऽप्यपरिहार्यो भविष्यति। अथर्वसंहितायामेष एव क्रमोऽस्ति (७।८६।६)। यं देवा अंशुमाप्याययन्ति; यमक्षितमक्षिता भक्षयन्ति : (निघण्टुः-५।५।२०।२३) इत्यपि अवलोकनीयम्। तथा निरुक्ते (११।२९।३३) पूर्वं पौर्णमास्याः पाठः पश्चादमावास्यायाः।

१ अमावास्या-पूर्णिमा चैतद्द्वयं यत्राभीष्टत्वमुपैति स्म तत्र पौर्णमास्याः प्राक् स्तुतिर्भवति स्म, पश्चादमावास्यायाः। ( विलोकनीयम्—अ० सं० १५।१६।१।३, तै० सं० ३।५।१।१-२ तथा अथर्वसंहितायामेतदपवादोऽपि लभ्यते। )

१. सप्तमे काण्डे पूर्वममावास्यासूक्तं तत्पश्चात् पौर्णमासीसूक्तस्य पाठ उपलभ्यते।

२. अमावास्या च पौर्णमासी च परिष्कन्दौ मनो विपथम्। (१५।२।१४)।

३. यदादित्यमभिसंविशन्त्यमावास्या चैव तत् पौर्णमासी च। (१५।१७।९)

२ मान्दा, वशा, ज्योतिष्मतीरमस्वरी ··· ·· (२।४।७।२४)। ( तै० सं० २।४।७।११ तथा का० सं० ११।९। )

३. अमा-जुरश्चिद्भवथो युवं भगो। ( ऋ० सं० १०।३९।३ ) तुलनीयम्— ऋ० सं० १।११७।७ तथा २।१७।७। निरुक्तमवलोकनीयम्—(११।४६) सा नो अमा, सो अरणे (ऋ० सं० १०।६३।१६) अत्र अमा गृहं। ( ऋ० सं० ८।२२।१५, तु० १०।८५।२।

४. द्रष्टव्यम्—अ० सं० ७।८४ तथा १।१६।१; १५।२।१४-१६, ३।१७।९)

आथर्वणसंहितायान्तु 'अमावास्या' इत्यस्य धार्मिकं महत्त्वमेतादृगवर्द्धत येन तत्स्तुतिरेकस्मिन् सम्पूर्णसूक्ते व्याप्ताऽभवत्। ऋग्वैदिकदर्शने प्रजापतेर्हिरण्यगर्भपरमतत्त्वस्य स्थानमपि तस्मै प्रदत्तमस्ति[१]। अतोऽमावास्याया निर्वचनं वैदिककर्मकाण्डस्य प्रभावाद् यदि मौलिकं स्वरूपं न प्रकाशयति, तदात्राश्चर्यलेशो न दृश्यते।

यास्कस्तु अमेत्यस्य 'अ+मा' (माने मापने) इत्यनेन व्याख्यामाशंसितवान्[२]। पाणिनीयतन्त्रेऽव्युत्पन्नप्रातिपदिकोऽमाशब्दः कथ्यते। तथा 'अमा+वस्' इत्यनेन रूपेणामावास्या—अमावस्येति शब्दौ व्युत्पादितौ स्तः[३]।

२. पृथिवी √प्रथ्—अस्य शब्दस्यापि द्वेधा व्युत्पत्तिर्दृश्यते—(क) पृथिवी लघ्व्यासीत्। देवाः प्रददुरादित्याय मेषवलिम्। तदा पृथिवी विस्तृताऽभवत्। (ख) सृष्टेः पूर्वं केवलं जलमासीत्। प्रजापतिर्वायुर्भूत्वा जलं प्रविष्टवान्। ते तत्र धरामद्राक्षिषुः। पुनः वराहा भूत्वा तामानीतवन्तः। सा विस्तृता जाता। तथा पृथिव्यभवत्। तदेव पृथिव्याः पृथिवीत्वम्[४]। प्रथमकथने व्युत्पत्तिरियमेवमनुमीयाऽस्ति। द्वितीयकथने स्पष्टतया प्रतिपादिताऽस्ति।

३. शरव √शृ—इत्यस्मान्निष्पन्नस्यास्य प्रकारद्वयमवगम्यते—(क) दर्भः शरमयो भवति। तं त्राटयति। (ख) इन्द्रो वृत्राय वज्रं प्राहरत्। स त्रेधाऽभवत्—१. यज्ञप्रयुक्तः स्फयो हस्ताकृतिः। २. रथः। ३. तृतीयो यूपोऽभवत्। मध्ये त्रुटितो भूत्वायोऽपतत्। सः शरोऽजायत। एतदेव शराणां शरत्वम्[५]।

---

१. तु० ऋग्वेदे १०।१२१।१० तथा अ० सं० ७।८४।४।

२. निरुक्तम्—५।१ : अमत्रम् =पात्रम्। अमा अस्मिन्नदन्ति। अमा पुनरनिर्मितं भवति। ६।२३ : अमत्रोऽमात्रो महान्भवति।

३. अष्टा० ३।१।१२२ : अमावस्यदन्यतरस्याम्। काशिका : सह वसतोऽस्मिन्काले सूर्याचन्द्रमसाविति, अमावस्या, अमावास्या।

४. अथ वै तर्ह्यल्पा पृथिव्यासीत्।.... तामवि वशामादित्येभ्यः कामायाऽलभन्त। ततो वा अप्रथत पृथिवी। (२।१।२।४) तथा, आपो वा इदमग्रे सलिलमासीत्। तस्मिन्प्रजापतिर्वायुर्भूत्वाऽचरत्। स इमामपश्यत्। तां वाराहो भूत्वाऽहरत्। तां विश्वकर्मा भूत्वा व्यमार्ट्। साऽप्रथत। सा पृथिव्यभवत्। तत् पृथिव्यै पृथिवीत्वम्। (७।१।५।१)

५. द्रष्टव्यम्—२।१।५।१५ : शरमयं बर्हिः; शृणात्येवैनम्। तथा ६।१।३।११ : इन्द्रो वृत्राय वज्रं प्राहरत्। स त्रेधा व्यभवत्—स्फ्यस्तृतीयम्, रथस्तृतीयम्। यूपस्तृतीयम्। येऽन्तःशरा अशीर्यन्त, ते शरा अभवन्; तच्छराणां शरत्वम्।

## अर्थनिर्वचनम्

१. आप्—उदकः—आर्द्रीकरणस्वभावादयमुदकशब्द उन्दित्यनेन सिद्ध इति पूर्वं प्रस्तुतवान् (ऋग्वेदसंहितायां व्युत्पत्तिचिन्तमवलोकनोयम्[1])। तैत्तिरीयसंहिताया एकस्मिन् मन्त्रे एतद्विशेषतया सममाप इत्यस्य प्रयोगः कर्त्रर्थेऽवलोक्यते[2]। अर्थादत्र उदकस्याधारभूतक्रियायाः प्रयोगं तत्पर्यायभूताय 'आप' इत्यस्मै कृत्वाऽस्यार्थमस्पष्टयत्।

२. ओजस्विन्—ओजस्विन्नित्यनेनेन्द्रं सम्बोध्य व्याहृतमस्ति यत् त्वया ह्याप्तमोजः[3]। कथनेऽस्मिन् ओजस्विन्घटक-विनिति प्रत्ययांशस्य व्याख्या 'विद्' लाभे धातुना निष्पन्नेन विदित्यनेन कृताऽस्ति। अतो विदोऽर्थंस्पष्टकारकस्य प्रयोगादिदमर्थनिर्वचनत्वेन ज्ञायते।

३. ओजस्विन्नितिवदस्यापि निर्वचनं प्राप्यते[4]।

४. यज्ञ<कृष्णाजिनः। यज्ञस्य यास्कोदितपञ्चव्युत्पत्तिषु औपमन्यवनाम्ना प्रसिद्धैका व्युत्पत्तिस्तत्र यज्ञे कृष्णमृगचर्मणो बहुधोपयोगकरणादजिनो यज्ञोऽस्ति[5]। औपमन्यवः सम्भवतस्तैत्तिरीयसंहितायाः कथनेन निर्वचनमिदं कृतवान् यद् यज्ञो निश्चप्रचं कृष्णमृगचर्मविशेषो भवति[6]। एवं कृष्णाजिनयज्ञसम्बन्धः परवर्तिनो ह्याचार्यान् निर्वचनार्थं नुदति।

### निष्कर्षः

तैत्तिरीयसंहिताया निर्वचनेष्वेवं प्रवृत्तयोऽभिलक्ष्यन्ते—

[क] अत्र शब्दस्य भाविकस्वरूपं स्पष्टयितुं ध्यानं प्रदत्तम्।

---

१. चर्मेवोदभिर्व्युन्दन्ति भूम। (ऋ० सं० १.८५.५)
उदानिषुर्महीरिति तस्मादुदकमुच्यते। (अ० सं० ३.१३.४)

२. आप उन्दन्तु जीवसे। (का० सं० २.१)

३ इन्द्रौजस्विन्, ओजस्वी त्वं देवेषु भूयाः। ब्रह्मणश्च त्वा क्षत्रस्य चौजसे जुहोमि—ओजोविदसि। (३.३.१.३-४)

४. अग्ने, तेजस्विन्,····तेजोविदसि। (३.३.१.१-२)

५. यज्ञः कस्मात्? प्रख्यातं यजतिकर्मेति नैरुक्ताः। याञ्चो भवतीति वा। यजुरुन्नो भवतीति वा। बहुकृष्णाजिन इत्यौपमन्यवः। यजूंष्यनेन नयन्तीति वा। औपमन्यवस्य निर्वचने ध्यातव्यं यद्-यदत्र दृश्यते प्रतिविशिष्टं साधनं किञ्चित्, तत्तत्कृष्णाजिनमिति यज्ञः सोमे तावदजिनद्वयम्, यजमानेऽप्यजिनद्वयम्, अव-हन्यमानेषु हि हविःष्वजिनम्, घर्मपात्रेष्वप्यजिनम्, एवं बहुकृष्णाजिनम्।

६. यज्ञो वै कृष्णाजिनम्। यज्ञेनैव यज्ञं संसृजति। (५.१.६.९)

[ख] कर्मकाण्डस्य रहस्यमयवर्णनशैली सर्वत्र प्रभावशीलाऽस्ति। अर्थात् कर्मकाण्डेन सम्बद्धं शाब्दिकं महत्त्वं निर्वचनेन स्पष्टयितुं निदेशः। यस्मात्कारणात् शब्दानां कर्मकाण्डसम्बद्धमहत्त्वं निर्वचनेन प्रतिपादयितुमुत्सुका अभवन् विद्वच्छिरोमणयः।

[ग] अस्यां निर्वचनानामन्यसंहितापेक्षया विकासतरो नालक्ष्यते।

(i) शब्दानां पारिभाषिकस्वरूपद्योतनाय निर्वचनमङ्गीकृतम्।

(ii) कार्यमिदं शब्दशब्दार्थयोर्मध्ये विद्यमानसम्बन्धं सहैतुकं निर्गीर्णितम्।

(iii) बहुविधं निर्वचनममुकनामहेतुपरकमिति भणितम्।

(iv) निर्वचनं भाषाचिन्तनचैतन्यमालोक्यते।

[घ] ऋग्वेदे भाषाचिन्तनात्मकप्रयोगं दर्शं दर्शं विकासतरमापन्नः परन्त्वत्र ध्वनिव्युत्पत्तिविज्ञानदृष्ट्येति।

व्युत्पत्तिचिन्तनदिशायामियं संहिता परिपूर्णा सत्यपि भाषादृष्ट्यातीवश्रेष्ठतराऽस्ति।

१. अक्षरस्वरूपे वाचिति विचार्यते। अग्निरेकाक्षरेणैव वाचमजयत्। ततो देवा अधिकाक्षरैरन्यपदार्थान् स्ववश्यानकुर्वन्[1]। अयमाशयो यद्वाचः सूक्ष्मतम एकाक्षरः।

२. वाङ्मनसः सम्बन्धः—मनसश्चेतनाभिगमनध्यानानीति त्रीणि कार्याणि दृष्टिगोचरीभूतानि। तत्र चेतनाया ध्यानस्य च साक्षात्सम्बन्धो वाचाभिवर्तते। यतो हि मानवो यं यं चिन्तयति ध्यायति वा तं तं वाचा प्रकाशयति। इच्छायाः सम्बन्धो वाचा क्रियया च लक्ष्यते। यतो यद् वाञ्छति तत्प्रकाशनं वाचा कुरुते क्रियान्वितं वेति[2]।

३. वागित्येतस्य व्याकरणम्—वागित्यस्य इन्द्रवायुभ्यां कृता रचना। देवैः प्रार्थितेन्द्रो मध्यादवक्रम्य वागिति व्याकृतवान्। व्याकृतरूपमेवास्माभिर्निगद्यते[3]।

---

१. अग्निरेकाक्षरेण वाचमुदजयत्। अश्विनौ द्व्यक्षरेण प्राणापानावुदजयताम्। विष्णुस्त्र्यक्षरेण त्रीन्लोकानुदजयत्।

२. यत्पुरुषो मनसाऽभिगच्छति, तद्वाचा वदति। ६।१।७।६ : यद्धि मनसा जवते तद्वाचा वदति।.... मनसा हि वाग्धृता। ६।१।७।९ : यद्धि मनसा चेतयते, तद्वाचा वदति।.... यद्धि मनसाऽभिगच्छति, तत्करोति। यद्धि मनसा ध्यायति, तद्वाचा वदति। ६।४।३।७ : 'अप इष्य होतर्' इत्याह। दूषितं हि कर्म क्रियते।

३. वाग्वा एषा यदैन्द्र-वायवः। यदैन्द्र-वायवाग्रा ग्रहा गृह्यन्ते, वाचमेवानु प्रयन्ति। वाग्वै पराच्यव्याकृताऽभवत्। ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति।....तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यते। (द्रष्टव्यम्—६।४।७।१)

वागित्यस्य विषये महाभाष्यकृता पतञ्जलिनाऽपि व्याकरणस्य गौणप्रयोजनानां मध्ये यो वा इमामिति प्रयोजनमजल्पि। अर्थाद् यो वा इमां पदशः स्वरतोऽक्षरशश्च वाचं विदधाति स आर्त्विजीनो भवति। आर्त्विजीनाः स्याम इत्यध्येयं व्याकरणम्।

अस्य टीकाकारेण श्रीमता मधुसूदनेनैवमवादि। तद्यथा वाक्तत्त्वस्य चत्वारो भेदा भवन्ति। तत्र प्रथमः **परावाग्**। इयं मूलाधारे तिष्ठति। अस्यामवस्थायां द्वैतबुद्धेरभावो व्यज्यते। तथा परातत्त्वस्य साक्षात्कारादधिकारनिवृत्तिर्जायते। षोडशकलापूर्णपुरुषे साऽमृतत्वेनाक्षयकलात्वेन कथ्यते।

**पश्यन्तीवाक्** सा उच्यते या योगिनां नाभिचक्रे प्रत्यक्षत्वमापद्यते। यत्र भेदक्रमयोरभावो विद्यते। सा स्वप्रकाशरूपा लोकव्यवहारातीतान्तस्तले प्रकाशरूपा निर्विकल्पसमाधिरूपाऽऽस्ते। अत्र योगिनो योगेन प्रकृतिप्रत्यययोर्भेदं पश्यन्ति; परन्तु परायां न किमपि पश्यन्तीत्ययमेवोभयोरन्तरः।

**मध्यमावाक्**—हृदयनादो मध्यमात्वेन प्रचक्ष्यते। या आन्तरिकसङ्कल्परूपाऽस्ति। यस्या उपादानकारणं केवला बुद्धिरेव। या क्रमात् प्राणवृत्तेरपि परा। सा सूक्ष्माऽस्ति। यद्यपि तत्र क्रमसंहारस्तथापि क्रमश उक्तियुक्ताभिव्यक्तिरहिता वर्तते। तत्र पदप्रत्यक्षीकरणं न जायते। सा व्यवहारकारणीभूता विद्योतते।

**वैखरीवाक्**—इयं कण्ठताल्वादिस्थानेषु जाते वायुविकारे वर्णस्वरूपं धारयन्ती श्रवणविषयाभिजायतेति मे मतिः।

## कपिष्ठल-कठसंहितायां व्युत्पत्तिचिन्तनम्

अत्र षट्पञ्चाशदुत्तरशत-(१५६) प्रयोगैः पञ्चविंशत्युत्तरशत-(१२५) शब्दानां निर्वचनमुपलभ्यते। एकाशीतिशब्दानां निर्वचनमन्यसंहितास्वपि विहितम्; परन्तु षट्चत्वारिंशच्छब्दानां निर्वचनमेतत्संहितायां स्वातन्त्र्यमभिरक्षति। कतिपयशब्दनिर्वचनान्युदाह्रियन्ते —

१. अदिति :—आदानक्रियायाः कारणात् पृथिव्या नामादितिः[१]। अर्थादियं धरा आसन्ताद्ददाति प्रतिगृह्णाति चान्नादिकम्। तस्माद्धेतोरियमदितिः कथ्यते। 'आ+दा' इत्यस्मादस्या निष्पत्तिर्बोधव्या। स्पष्टञ्च निर्वचनमेकस्मिन्स्थले। नैरुक्ता अदितिरित्यस्याः[२] क्षीणेऽर्थे 'दोङ् क्षये' इत्यस्मात् तथा शाब्दिका अवखण्डनार्थक-'दा' इत्यस्मादखण्डतार्थे[३] मैकडॉनलमहोदयश्च अबद्धतार्थे स्वतन्त्रतार्थे[४] निष्पत्तिममन्यन्त

१. कपिष्ठलकठसंहिता—६।७ : यत्तदादत्त तददितिः।

२. निरुक्तम्—४।२२ : अदितिरदीना। (निरुक्त के पाँच अध्याय, पृ० ५०५)

३. अष्टाध्यायी—७।४।४० : द्यति-स्यति-मा-स्थाम् इत् ति किति। दोऽवखण्डने इति निष्पन्नं द्यतीति पदम्।

४. डॉ० सूर्यकान्तः वैदिकदेवशास्त्रस्य पृ० ३२० द्रष्टव्यम्।

इति। ऋग्वेदे वशिष्ठमैत्रावरुणीनां कृते मया योऽपराध आचरितः, स अर्यम्णा अदित्या (अग्निमित्रवरुणेन्द्रैः) क्षन्तव्यः। अर्थाद्देवा इमेऽपराधप्रायश्चित्तस्वरूपे वरुण-पाशनिगडितं मां मोचयत[1]। कथनेऽस्मिन् अदित्या सह श्रथित्यस्य प्रयोगो मुक्ति-सन्दर्भेऽभवत्। मैकडॉनलमहानुभावाशयपोषकोऽयमिति।

२. अध्वर < न + √ध्वर् —अस्य निर्वचनं तैत्तिरीयसंहितायामप्यजायत। यज्ञे देवा यत्कार्यं कुर्वन्ति स्म तदेवासुरा अप्याचरन्ति स्म। देवा महायज्ञमपश्यन्त तमसुराः स्वायत्तीकर्तुं वाञ्छन्तोऽपि नाप्नुवन्। तेऽवदन्। देवा अवशगा अभूवन्। अध्वरणीय एवाध्वरस्याध्वरता[2]। कपिष्ठलकठसंहितायामसमस्तरूपे निषेधमाजल्पन् व्युत्पत्तिः प्रदर्शिता[3]।

३. अमा-वास्या < 'अमा + वसु'—अस्य निर्वचनं तैत्तिरीयाथर्वसंहितयोरपि 'अमावास्या' इति रूपे वर्णितम्। तत्र 'अमा + वस्' इत्यनेन चोक्तम्। प्रकृत-संहितायाम् 'अमा + वसु' इत्यनेनोद्घुणितम्। तत्र देवा ऊचुः[4]—अस्माकं धनं (वसु) एकत्रितम् (अमा) अभवत्। अतः सा तिथिरमावास्या। अस्य शब्दस्योत्तरपदं न कृदन्तीयमपि तु तद्धितीयमस्ति।

४. अहन् < √हन्—वेदे प्रायशोऽहर्दिवम् इत्यर्थेऽहन्शब्दस्य प्रयोगोऽभिदृश्यते। यत्र क्वचन केवले दिनार्थं एव प्रयोगोऽभिलक्ष्यते[5]। अस्यां संहितायां दिनार्थे कदाचिद् हृन्नित्यनेन व्युत्पत्तिरभवत्। अहन्नित्यनेन राक्षसानां मारणं जातम्[6]। संहितायामेतदर्थं 'निर् + हन्' इति प्रयुक्तम्। अत्र 'निर्' इति शब्दस्य 'अ' इत्येतद् व्याख्यानाय 'आ' इत्यस्य स्थाने प्रयोगोऽनुमीयते। यतो हि—एकत्रीकरणे वदने वार्थे 'आ + हन्' इत्यस्य प्रयोगोऽवलोक्यते। अतोऽत्र समन्तादित्यर्थे निरित्यस्य प्रयोगो दृष्टिपथमवगच्छति।

---

१. सो अग्न, एना नमसा समिद्धोऽच्छा मित्रं वरुणमिन्द्रं वोचेः।
यत्सीमागश्च कृमा, तत्सु मृळः, तदर्यमाऽदितिः शिश्रिथन्तु॥ (ऋ० सं० ७।९३।७)

२. तै. सं० ३।२।२।१--४ : देवा वै यद् यज्ञेऽकुर्वत, तदसुरा अकुर्वत। ते देवा एतं महायज्ञम-पश्यन्। तमतन्वत·······। तमेषामसुरा यज्ञमन्ववाजिगांसन्। तं नान्ववायन्। तेऽब्रुवन्न अध्वर्तव्या वा इमे देवा अभूवन्निति। तदध्वरस्याध्वरत्वम्।

३. ३६।४ : तेऽसुरा अप-क्रामन्तो अब्रुवन्न वा इमे ध्वर्तवा अभवन्निति। तदध्वरस्याध्वर-त्वम।

४. तै. सं० ५।९ : ते देवा अब्रुवन्नमा वै नो वस्वभूदिति। साऽमावस्या।

५. निरुक्ते, पृ० २३३-२३४ द्रष्टव्यम्।

६. देवा वा अह्नो रक्षांसि निरघ्नन्। (५।९)

५. आज्यम् <अज: —अस्य निर्वचनमृगथर्ववेदसंहितयोरञ्ज् इत्यनेन दृष्टं भवति[१]। प्रकृतसंहितायां कर्मकाण्डस्य परिवेशे शंसितं वर्तत एवं यदजेन लब्धत्वादिदमाज्यं प्रचक्ष्यते[२]।

६ घृतम्—आज्यस्य पर्यायवाचकस्य घृतस्य ऋ० अ० मा० तै० संहितासु परोक्षापरोक्षरूपेण ङकारेत्संज्ञक-घृधातुना निर्वचनमकारि[३]। अत्र कटाहे निपातितोष्णस्नेहेन द्रव्ये व्यञ्जनपाकार्थं वृन्ताकादिखण्डप्रदानकाले घृङिति ध्वनिविशेष उत्पद्यते[४]। स एव घृङित्यनेनाभिप्रेत इति व्यज्यते वा न अस्पष्टतयेति। काठकसंहितोक्तिपठनेनेदं ज्ञायते यदजः (पशुविशेषः) चरन् 'घृङ् घृङ्'[५] इति ध्वनयति तस्माद् घृतमिदम्।

७ जिह्वा—माध्यन्दिनसंहितायां प्रकृतसंहितायामपि सूक्तिरियं विद्यते यद् देवानां कृते स्वाह्वानकर्त्री 'सु-हू' इत्यभिधीयते[६]। सुहू-शब्दः करणे 'सुहवे' इत्यनेन निष्पद्यते। कारकभेदादनेनैव योगेन निष्पन्नोऽन्य सुहवेति शब्दः सुशोभते।

८. जुहू—यज्ञे प्रयुक्तपात्रैकस्य वाचकाऽयं जुहूशब्द ऋग्वेदे गृत्समदेन तथा तत्पुत्रकूर्मेणापि होमार्थक-जुहोत्यादिगणीय-हुधातुना करणे संसाधितः[७]। मैत्रायणीसंहितायां 'ह्वे' इत्यनेन प्रत्यक्षनिर्वचनं 'हु' इत्यनेन करणे परोक्षनिर्वचनमभिहितम्। काठके प्रत्यक्षनिर्वचनं 'ह्वे' इत्यनेन प्रदर्शितम्[८]। कात्यायनेन 'हु' धातुनैवाभिशंसितम्[९]। प्रकृतसंहितायां उभावपि √ह्वे इत्यनेन कथितम्।

---

१. यं समाञ्जन्नाज्येना वृणानाः। (ऋ० सं० १०।८८।४)
यदञ्जनाभ्यञ्जनमा—हरन्त्याज्यमेव तत्॥ (अ० सं० ९।६।११)

२. यदजोऽविन्दत, तदाज्यस्याज्यत्वम्। (काठक-सं० २४.७.१७)

३. जिघर्म्यग्निं हविषा घृतेन प्रति क्षियन्त भुवनानि विश्वा। (२।१०।४)

४. स घृङ्ङकरोत्। तद् घृतस्य घृतत्वम्। (७।३।७।८)

५. सः (अजः) घृङ्ङकरोत्। तद् घृतस्य घृतत्वम्। तस्मादजो घृङ् करिक्रच्चरति।
(काठक सं० २४।७।१७)

६. मा० सं० १।३०, क० क० सं० १।१७ : अग्नेर्जिह्वाऽसि; सुहूर्देवेभ्यः।

७ अनूनमग्निं जुह्वा वचस्या मधुपृचं धन सा जोहवीमि॥ (ऋ० सं० २।१०।६)
इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि। (२।२७।१)

८. द्र० मै० सं० ३।१।१, काठक-सं० १८।१९, क० क० सं० २९।७ : जुह्वा वै देवा विराजमह्वयन्त। तज्जुह्वा जुहूत्वम्। (तैत्तिरीयसंहितायां त्वप्रत्ययात्पूर्वस्थदीर्घस्य यद्यपि ह्रस्वः प्रतिपादितस्तथाप्यत्र न ह्रस्वोऽभवदिति ध्यातव्यम्)। मै० सं० ३।१।१ : यज्जुह्वा जुहोति। १।१२ : जुह्वेहि; अग्निस्त्वा ह्वयतु।

९. अष्टा० ३।२।१७८ : वा० जुहोतेर्दीर्घश्च।

९. जू—काठकपरम्परायां मैत्रायणीसंहितायामपि गत्यर्थक-'जव्' इत्यनेन निष्पादितो[1] जू-शब्दो वैयाकरणानां चक्षुःष्वपीदृशीमेव व्युत्पत्तिमलभत्[2]।

१०. पशु<पश्य—प्रकृतसंहितायां दर्शनार्थक-दृशधातोः कर्मणि पश्यादेशेन व्युत्पत्तिरालोकिता। पशुशब्दस्य तथैव शतपथब्राह्मणेऽपि। यास्कोऽपि कारकमकथयन् पश्यादेशेनैव पशुशब्दं साधितवान्। शाकटायनस्तु कर्त्रर्थकप्रत्ययानां प्रकरणे दृशः पशिरित्यादेशेन पशुशब्दो विज्ञापितः[3]।

११. भूमिः—प्रकृतसंहितायामस्य शब्दस्य निर्वचनद्वयमवाप्यते। एकत्र 'भूमन्' इत्यनेनास्यान्वयः सूचितः। परत्र सहेतुकं 'भू' इत्यनेन प्रकाशितम्। वैदिकवाङ्मयेऽर्थ-द्वये भूमन्नित्यस्य प्रयोगो लभ्यते।

(अ) बहुत्वे आधिक्ये विस्तृतौ श्रेष्ठतायाञ्च, (ब) भूम्यर्थे प्रथमार्थ एतत्प्रयोग ऋग्वेदे कवष-ऐलूषेणाचरितः[4]। प्रसङ्गेष्वन्येषु कुत्साङ्गिरस ऋभूभिः कृतायां प्रार्थनायां 'भूमना' इत्यस्य प्रयोगो ग्राह्यो वर्तते। तथा च 'हे सुधन्वनः पुत्राः स्वचरितमहिम्ना सोमाभिषवकृतां यजमानानां गृहं व्रजत[5]। द्वितीयार्थेऽस्य प्रयोगो गौतमराहूगणेन[6] तथा कवष-ऐलूषेणापि व्यवहृतः[7]। प्रायशः कवष-ऐलूषस्याशयानुसारमेव ऋग्वेदीय-भूमनः स्थाने भूमेः प्रयोगं साक्षात्कृत्य अथर्वसंहितायामपि द्योतितवान्[8]। एवमेव ऋग्वेदीय-वशिष्ठमैत्रावरुणेराशयस्य किञ्चिदन्तरं भूमेः प्रयोगोऽभिजातः[9]।

एतद्विवरणेन सिद्ध्यति यद् भूमन्-भूम्योः प्रवृत्तिव्युत्पत्तिनिमित्तमैक्य दृश्यते। प्रकृतसंहितानुसारं भूमिशब्दः सत्तार्थक-भूधातुना निष्पन्नः। पाणिनिना तु बहुसंख्यक-

---

१. काठक-सं० २३।३,३७।४ : जूरसीति-वाग्वै सोमक्रयणी। जवतं हि वाचा। मैं० सं० ३।७।५ : जुरसीति—यद्वाव जवत इत्थमसादित्थमसादिति जूत्वम्।

२. अष्टा० ३।२।१७७ : भ्राज-भास-धुर्वि-द्युतोर्जि-पॄ-जु-ग्रावस्तुवः क्विप्।

३. क० क० सं० ५।९ : ते रात्र्यां भूतायां पशून्नापश्यन्। सावेन्न वै पश्यन्तीति। श० ब्रा० ६।२।१।२ : स (अग्निः कुमारः) एतान्पञ्च पशूनपश्यत्—पुरुषम्, अश्वम्, गाम्, अविम्, अजम्। यदपश्यत्तस्मादेते पशवः। तेष्वेतमपश्यत्। तस्मादेवैते पशवः। निरुक्तम्—३।१६ : पशुः पश्यतेः। सि० कौ० : सर्वानविशेषेण पश्यतीति पशुः।

४. अस्येदेषा सुमतिः पप्रथानाऽभवत्पूर्व्या भूमना गौः। (ऋ० सं० १०।३१।६)

५. सौधन्वनासश्चरितस्य भूमनाऽऽगच्छत सवितुर्दाशुषो गृहम्। (१।११०।२)

६. उतारुषस्य विष्यन्ति धाराश्चर्मेवोदभिर्व्युन्दन्ति भूम। (१।८५।५)

७. स्तेगो न क्षामत्येति पृथ्वीं; मिहं न वातो वि ह वाति भूम। (१०।३१।९)

८. स्तेगो न क्षामत्येवि पृथिवीं; मही नो वाता इह वान्तु भूमौ। (१८।१।३९)

९. उदस्य शुष्माद् भानुर्नार्त बिभर्ति भारं पृथिवी न भूम। (७ ३४।७)
तुलनीयम्—उदस्य ····· भानोर्नाव्या ···· भूमीः। (मैं० सं० ४।९।१४)

बह्वोः स्थाने भ्वादेशो गृहीतः। अत्र 'भू' इत्यस्य व्युत्पत्तिनिमित्तं नाभिव्यक्तमस्ति[1]। शाकटायनेन भूमेर्व्युत्पत्तिः 'भू' इत्यनेन सम्पादिता[2]। विश्वबन्धुनाऽपि व्युत्पत्तिरियमेवाङ्गीकृता[3]। मम मतानुसारेण अत्रायमाशयो भाति यद् 'भू' इत्यस्य कृतद्वित्वरूपं 'भूभू' कालान्तरे 'बभू>बहु' इति रूपे विकसितः। 'भू' इत्यस्मादेकस्यां दिशि सत्ता = महत्त्वपूर्णसत्ता = बाहुल्यम् = अधिकतेत्यर्थो विकासमापन्नस्तथान्यदिशि सत्तार्थेन बाहुल्यार्थेन वा पृथिवीति अविकसत्। एतन्निष्कर्षगमकत्वेन कवषस्य वाणीयं ध्यातव्या। यदियं देवगणानां सुमतिमहिम्ना प्रथिता गतिशीलाऽभूत्[4]।

१२. रुद्रः —तैत्तिरीयसंहितायां रुद्रशब्दस्य प्रत्यक्षनिर्वचनं रुद्-धातोः कर्त्रर्थे घोषिता[5]। काठकप्रणाल्यां रुजित्यस्मात् कर्त्रर्थे प्रत्यक्षनिर्वचनेन रुद्रशब्दो विनिर्मितः[6]। बृहदारण्यकोपनिषदि प्राणेभ्यो रोदीति ण्यन्तान्निष्पन्नो रुद्रशब्दः[7]। यास्केन व्युत्पत्तित्रयमाचर्य 'रु', रु + √द्रु तथा रोदीत्यनेनापि रुद्रशब्दो निष्पादितः[8]।

१३. (सु-) शमीः —अस्य शब्दस्य ऋग्वेदमाध्यन्दिनसंहितयोर्यन्निर्वचनं चर्चितम्[9], तत्पूर्वं प्रोक्तम्। मैत्रायिणीसंहितायां[10] शैत्यकरणक-शम्-धातोः करणरूपे निष्पन्नोऽयं शब्दः काठकसंहितायामपि तस्मादेव धातोस्तस्मिन्नेव रूपे व्युत्पादितः[11]। कठ-कपिष्ठलसंहितायां हिंसार्थक-शम्धातोरपि कथितः।[12]माध्यन्दिनसंहिताया निर्वचनापेक्षया व्याकरणलक्षणोपपन्नविकरणयुक्तक्रियारूपस्याधिकाः प्रयोगा दरीदृश्यन्ते।

---

१. अष्टा० ६।४।१५८ : बहोर्लोपो, भू च बह्वोः।

२. उणादिसूत्रम्—४८५ (४।४५) भुवः कित्।

३. वैदिकपदानुक्रमकोषः—१।४, पृ० २३६५, टि० ७।

४. अस्येदेषा सुमतिः पप्रथानाऽभवत्पूर्व्या भूमना गौः। (१०।३१।६)

५. १।५।१।१ : सोऽरोदीत्। यदरोदीत्, तद्रुद्रस्य रुद्रत्वम्।

६. का० सं० २५।१, क० क० सं० ३८।४ : रुद्रः ताम् (इषुं) व्यसृजत्। तया पुरस्समरुजत्। यत्समरुजत्, तद्रुद्रस्य रुद्रत्वम्।

७. ३।९।४ : दशमे पुरुषे प्राणाः, आत्मैकादशः। ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति। तद् यद्रोदयन्ति, तस्माद्रुद्राः।

८ निरुक्तम्—१०।५ : रुद्रो (१) रौतीति सतः। (२) रोरूयमाणो द्रवतीति वा। (३) रोदयतेर्वा।

९. यो वः शमी-शशमानस्य निन्दात्तुच्छ्यान्कामान्करते सिष्विदानः। (५।४२।१०)
स इदं देवेभ्यो हविः शमीष्व; सुशमि, शमीष्व। (१।१५)

१०. ४।१।१ : वनस्पतीन्वा उग्रो देव उदौषत्। तं शम्या अध्यशमयस्, तच्छम्याः शमीत्वम्।

११ ३०।१० : प्रजापतिः पशूनसृजत। तानयं देवोऽभ्यमन्यत। तं शम्याऽशमयत। तच्छम्याः शमीत्वम्। (क० का० सं० ४६।८)

१२. १।५ : सुशमि, शम्नीष्व। मा० सं० : शमीष्व—इति प्राप्यते।

## निष्कर्षः

तकनीकीदृष्ट्या प्रकृतसंहितानिर्वचनेषु तैत्तिरीयसंहिताया निर्वचनानां नागतं वैशद्यम्। भाषाशास्त्रदर्शनेनैतत्संहितीयं निर्वचनमोजस्वितां नाप्नोति। अदित्याज्य-घृतजुहूरुद्राणां निर्वचनं समीचीनतां वितनुते।

कृष्णयजुर्वेदीयपरम्परागतानां निर्वचनानां विषये सामान्यतया वक्तव्यमिदं यत् कर्मकाण्डीयमहत्त्वेन संयुक्तप्राचीनानुश्रुतीनामवदानानां किञ्चिद्रहस्यमथमान्यताना-मेतादृशान्यावरणानि विराजन्ते येषां भेदनाभावाद्यतनीयचिन्तकानां सम्मुखे वैचित्र्यं यत्र क्वचन वैपरीत्यञ्चाभाति। तथापि प्राविधिकोविकासालोके निर्वचनशास्त्रस्यै-तिहासिकमहत्त्वमविस्मरणोयतया वरीवर्ति। यत्रास्पष्टता सा निजाऽज्ञानकारणादिति विज्ञेयम्।

## ब्राह्मणेषु व्युत्पत्तिचिन्तनम्

पूर्वमेव दृष्टगतानां निर्वचनविकासानां प्राप्तिस्तु ब्राह्मणवाङ्मयेषु वर्तत एव। तदतिरिक्तमपि प्रकारद्वयमीक्षणपथमागतवान्। तथा हि—

१. निर्वचनीयः शब्दः कथमेतादृश उच्यते? एवं प्रश्नं विधाय क्वचित्-क्वचित् तन्निर्वचनं कृतम्। यथा—कथं स होतेत्युच्यते? स यथोचितेन देवानां मध्येऽमुक-माह्वयेति कथयति। तदेव होतॄणां होतृत्वम्[1]। शैलीयं यास्कीयनिरुक्ते प्राप्यते। तद्यथा—कस्मान्निघण्टवः? कस्माद्वाक्? कस्मान्नद्य इत्यादिः[2]।

२. टीकाकारप्रणाल्या निर्वचनीयशब्दानां त्रयो भेदा भवन्ति—

(क) प्रत्यक्षवृत्त्यात्मकः प्रथमोऽथवा प्रत्यक्षक्रियात्मकः।

(ख) परोक्षवृत्त्यात्मकोऽथवा परोक्षक्रियात्मको द्वितीयः।

(ग) अतिपरोक्षवृत्त्यात्मकोऽथवातिपरोक्षक्रियात्मकस्तृतीयः[3]।

ब्राह्मणेष्वन्तिमश्रेणिद्वययोग्यशब्दानां परोक्षकथनात्मिका चर्चा समुपलभ्यते। कालान्तरे शब्दाः प्राचीनस्वरूपं विहाय नवरूपतामुपगच्छन्ति, तथा एतादृशशब्दानां प्राचीनस्वरूपं परोक्षतामावृणुते सर्वविजानता। यथा—

---

१. ऐतरेय-ब्राह्मणम्—१।२ : कस्मात्तं होतेत्याचक्षत इति। यद्वाव स तत्र यथा-भाजनं देवता 'अमुमा-वहामुमा-वह'त्या-वाहयति, तदेव होतुर्होतृत्वम्।

२. निरुक्तम्—१।४ : निघण्टवः कस्मात्? वाक् कस्मात्? नद्यः कस्मात्?

३. द्रष्टव्या दुर्गाटीका (१।१) : त्रिविधा हि शब्दव्यवस्था—प्रत्यक्षवृत्तयः, परोक्षवृत्तयोऽति-परोक्षवृत्तयश्च। तत्रोत्कटक्रियाः प्रत्यक्षवृत्तयः। अन्तर्लीन क्रियाः परोक्षवृत्तयः।

१. मा—दुष>मानुषः। प्रजापतिवीर्यं (मा दुषत्) इति यदुक्तं तदेव मादुषस्य मादुषत्वम्। मादुष एव परोक्षत्वेन मानुषत्वं भजते[1]।

२. अग्निस्तोमः —अयमग्निरेव योऽग्निष्टोमोऽभिराजते। तत्स्तुतेः कारणात्स अग्निस्तोमोऽस्ति अग्निस्तोमेव परोक्षरूपेऽग्निष्टोम इति व्यवह्रियते[2]।

३ न्यग्रोहः>न्यग्रोधः—तद्यज्ञपात्रं यन्नीचैः प्ररोहति। न्यग्रोह एव परोक्षरूपे न्यग्रोधोऽभिचक्ष्यते[3]।

४. इन्ध>इन्द्रः —अयमिन्धनामक एवास्ते यो दक्षनेत्रे पुरुषोऽवलोक्यते। इन्ध एव परोक्षरूपे इन्द्र इतीर्यते[4]।

५. मखवत्>मघवत्—स एव मखोऽसावेव विष्णुरत इन्द्रो मखवान् निगद्यते। मखवानेव परोक्षरूपे मघवानिति[5] ब्रूयते।

ब्राह्मणानां निर्वचनेषु संहितानां निर्वचनादेकोऽन्तरः प्रतीयते। संहितासु प्रसक्त-विद्यमानानां शब्दानामेव निर्वचनेन व्याख्यानं क्रियते; किन्तु ब्राह्मणेषु प्रसक्तानुप्रसक्तपदयोरपि व्याख्यानमीक्षणपथमागतते। यथा 'महानाम्नी' कतिपयर्चां पारिभाषिको संज्ञा[6]। तन्नामान्तरः सीमेति। ऐतरेयब्राह्मणे 'महानाम्नी'-शब्दनिर्वचनानन्तरं सीमेति पदमपि निर्वचनत्वेन गृहीतम्[7]। एतत्प्रवृत्तेरुपबृंहणमक्षरशो यास्कीय-निरुक्ते वरीवर्ति।

ब्राह्मणग्रन्थानां त्रयो विषया विद्यन्ते—

(क) अधिभूतात्मकः, (ख) अध्यात्मकः, (ग) अधिदैवात्मकस्तृतीयः।

---

१. ऐतरेयब्राह्मणे (३।३३): यदब्रुवन् 'मेदं प्रजापते रेतो दुषद्' इति, तन्मादुषमभवत्। तन्मादुषस्य मादुषत्वम्। मादुषं ह वै नामैतद् यन्मानुषं सन्मादुषमित्याचक्षते परोक्षेण।

२ ऐ० ब्रा० ३।४३ : स वा एषोऽग्निरेव यदग्निष्टोमः। तं यदस्तुवंस्, तस्मादग्निस्तोमः। तमग्निस्तोमं सन्तमग्निष्टोम इत्याचक्षते परोक्षेण।

३. ऐ० ब्रा० ७।३० : ते यन्यञ्चोऽरोहंस्, तस्मान्न्यङ् रोहति न्यग्रोहः। न्यग्रोहो वै नाम तत्। न्यग्रोहं सन्त न्यग्रोध इत्याचक्षते परोक्षेणेव।

४. शतपथ ब्राह्मणे (१४।६।११।२): स होवाच—इन्धो वै नामैष, योऽयन् दक्षिणेऽक्षन्पुरुषः। तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणेव।

५. श० ब्रा० (१४।१।१।१३): स उ एव मखः, स विष्णुः। तत इन्द्रो मखवान भवत्। मखवान्ह वै तं मघवानित्याचक्षते परोक्षम्।

६. ऐतरेयारण्यके (४।१): अत्र 'विदा मघवन्....' इत्यतः 'नूनं तं ' अद्ययापर्य्यन्तं न वर्चः सन्ति।

७. ऐ० ब्रा० (५।७, २२।२): इन्द्रो वा एताभिर्महानात्मान निरमिमीत। तस्मान्महानाम्न्यः। .... ता ऊर्ध्वाः सीम्नोऽभ्यसृजतु—तत्सिमा अभवन्। तत्सिमानां सिमात्वम्।

एतत्त्रयाणां प्रकाश एव कतिपयानां शब्दानां निर्वचनमविवक्षितम् । तद्यथा—शतपथब्राह्मणे यजुरित्यस्य व्याख्या वाय्वाकाशप्राणान्नानामर्थेषु √इ + जन्, यत् + जु तथा जन् + जु इत्येभिः कृतावलोक्यते[१] ।

ब्राह्मणेषूपलब्धनिर्वचनाधारोपरि निम्नलिखितसिद्धान्ता निस्सरन्ति—

१. प्रकृत्या सह विकृतेः ( नाम्नः ) प्रयोगं कृत्वा तयोः सम्बन्धः सूच्यते[२] ।

२. नामेति संज्ञाकारणात् कथावर्णनादेरपेक्षायां जातायां सहैव स्पष्टीकृत्य हेतुवाचकशब्दानां प्रयोगकरणपूर्वकं निर्वचनेन सह निर्वचनीयपदमप्युपादीयते[३] ।

३. पूर्वोक्तप्रकारेण शब्दनिर्वचनं विधायान्ते निर्वचनीयपदं षष्ठन्तं कृत्वा त्व-प्रत्ययेन सहापि प्रस्तूयते[४] ।

४. हेतुपूर्वकं निर्वचनं प्रस्तुत्य लोके एवं कथयन्तीति कृत्वा लोकमतमपि प्रदर्शनीयमत्र[५] ।

५. प्रसक्तानुप्रसक्तशब्दानां निर्वचनमपि प्रस्तौति । यथा--सिमा ।

६. वाङ्मयेऽस्मिन् शब्दस्य मूलार्थमविचिन्तयन्नपि स्वप्रतिपाद्यानुकूलार्थे निर्वचनीयम् । यथा—मघवान्, यजुरित्यादीति ।



---

१. श० ब्रा० (१०।३।५।१-२, ४-६) : अयं वाव यजुर्योऽयं पवते । एष हि यन्नैवेदं सर्वं जनयति । यन्तमिदमनु प्रजायते । तस्माद् वायुरेव यजुः (१) । अयमेवाकाशो जूः । यदिदमन्तरिक्षम् । एतं ह्याकाशमनु जवते । तदेतद्यजुर्वायुश्चान्तरिक्षञ्च, यच्च जूश्च, तस्माद् यजुः (२) । अथाध्यात्मम्—प्राण एव यजुः (३) प्राणो हि यन्नैवेदं जनयति । प्राणं यन्तमिदमनु जवते । तदेतद् यजुः (४) । अयमेवाकाशो जूः । योऽयमन्तरात्मन्नाकाशः । ···· प्राणश्चाकाशश्च, यच्च जूश्च, तस्माद् यजुः प्राण एव । यत्प्राणो ह्येति (५) । अन्नमेव यजुः । अन्नेन हि जायते; अन्नेन जवते । तदेतद् यजुः (६) ।

२. तै० ब्रा० ( १।१।९।३ ) : यदाज्यमुच्छिष्यते, तेन समिधोऽम्यज्यादधाति । ( अत्राज्यस्य व्युत्पत्तिरञ्ज-धातुना सूचिता । )

३. श० ब्रा० (१।१।३।४) : वृत्रो ह वा इदं सर्वं वृत्वा शिश्ये यदिदमन्तरेण द्यावापृथिवी । स यदिदं सर्वं वृत्वा शिश्ये, तस्माद् वृत्रो नाम ।

४. तै० ब्रा० (१।१।५।४) : ऽसोऽश्वः पूर्ववाड् भूत्वा प्राञ्चं पूर्वमुदवहत् । तत्पूर्ववाहः पूर्ववाट्त्वम् ।

५. अग्निष्टोमः, इन्द्रः, न्यग्रोधः, मानुषश्चेति ।

# हेतुकरणयोरर्थभेदनिरूपणम्

**प्रो० आद्याप्रसादमिश्रः**

आचार्योऽध्यक्षश्च, व्याकरणविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी

❁ ❁ ❁

'कर्तृकरणयोस्तृतीया' ( अष्टा० २।३।१८ ) इत्यनेन कर्त्तरि करणे चार्थे तृतीया विधीयते। तदनु 'हेतौ' ( अष्टा० २।३।२३ ) इति सूत्रेण हेत्वर्थे तृतीया इष्यते। अत्र हि 'कारके' इत्यन्वर्थसंज्ञाश्रयेण क्रियासाधकस्य साधनत्वेऽभिहिते हेतुरपि क्रियासाधक इति हेतोरपि करणत्वात् कर्तृकरणयोस्तृतीयेति सूत्रेणैव सिद्धायां तृतीयायां किमर्थं हेताविति पुनर्विधानमित्याशङ्क्य हेतोः साधनाद् भेदं दर्शयति भर्तृहरिः —

**अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते।**
**आश्रितावधिभावं तु लक्षणे लक्षणं विदुः[1]॥**

अयमाशयो यद्व्यापारमाश्रित्य क्रियायां निमित्तं साधनम्, व्यापारमनाश्रित्य तु सम्बन्धमात्रेण क्रियायां निमित्तं तु हेतुरिष्यते। तत्राद्यस्योदाहरणम्—बाणेन हत इति। अत्र हननक्रियायां बाणस्य व्यापारः शरीरभेदनादिः। द्वितीयस्य तूदाहरणम्—अध्ययनेन वसतीति। अत्राध्ययनं वासक्रियायां सम्बन्धमात्रेण फलत्वेन हेतुः। एवञ्च लक्षणे= लक्ष्यमाणवस्तुप्रकाशने, आश्रितावधिभावम्=अवधिभावमाश्रित्य निमित्तं तल्लक्षणं लक्ष्यतेऽनेनेति व्युत्पत्त्या ज्ञापकहेतुं विदुः—जानन्ति तज्ज्ञाः, न तु कारकहेतुमिति साधनकारकहेतुज्ञापकहेतूनां भेद इति।

अत एव हेतुकारकयोर्जनकत्वसाम्येऽपि विषयभेदाद् भेदमाह—

**द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्[2]।**

अत्र 'हेतौ' इति सूत्रे लौकिक एव हेतुर्विवक्षितो न तु शास्त्रीय इति। इममेवाशयं प्रकाशयन्नाह हरदत्तः[3] —

---

१. वाक्यपदीयम्, तृतीयकाण्डम्, साधनसमुद्देशः —२४।

२. तदेव—२५।  ३. पदमञ्जरी—२।३।२३।

हेतुर्द्विविधः —शास्त्रीयो लौकिकश्चेति । तत्र शास्त्रीयः—'तत्प्रयोजको हेतुश्च' ( अष्टा० १।४।५५ ), लौकिकः —फलसाधनयोग्यः पदार्थः । तत्र शास्त्रीये हेतौ 'कर्तृकरणयोस्तृतीया' इत्येवं सिद्धा तृतीया । तस्माल्लौकिकस्य हेतोरिदं ग्रहणमित्यत आह-—फलसाधनयोग्य इत्यादि । अनिष्पादयन्नपि फलं तत्साधनयोग्यः पदार्थो लोके हेतुरित्युच्यत इति योग्यग्रहणम् । धनेन कुलमित्यादौ कुलादीन्यकुर्वन्त्यपि धनादीनि तत्करणयोग्यतया लोके हेतुव्यपदेशमासादयन्तीति तेभ्यस्तृतीया । इह यूपाय दार्विति सदपि दारुणो हेतुत्वं न विवक्षितम्, किं तर्हि ? कारणस्यान्यथात्वम् । तेन तादर्थ्ये चतुर्थी भवति ।

इत्थं हि करणहेत्वोर्नार्थसाम्यम्; अपि तु मिथः पार्थक्यमेवेति स्वाशयं प्रकाशयन्नाह भट्टोजिदीक्षितः सिद्धान्तकौमुद्याम्[1]—

द्रव्यादिसाधारणं निर्व्यापारसाधारणञ्च हेतुत्वम्, करणत्वञ्च क्रियामात्रविषयं व्यापारनियतञ्च । द्रव्यादिसाधारणमित्यत्रादिपदेन गुणक्रिये ग्राह्ये । तेन द्रव्यगुणक्रियानिरूपितं निर्व्यापारसव्यापारवृत्ति च यत्तद्धेतुत्वमित्यर्थः । करणत्वञ्च क्रियामात्रनिरूपितं व्यापारवद्वृत्ति च यत्तत्करणत्वमित्यर्थः । एवं हि हेतुकारणयोर्भेदादन्यतरेणान्यथासिद्धिर्न सम्भवतीति भावः । करणत्वशक्त्यपेक्षया हेतुत्वशक्तिर्विलक्षणेति प्रतिपादनाय ब्रूते शब्दरत्नकारः[2]—करणत्वहेतुत्वविषयकशाब्दबोधाय सूत्रद्वयमिति ।

अत्र हेतुलक्षणे द्रव्यगुणक्रियानिरूपितान्युदाहरणानि यथाक्रममुच्यन्ते—दण्डेन घटः, कोपेन रक्तः, पुण्येन दृष्टो हरिरिति । तत्र 'दण्डेन घटः' इत्यस्य दण्डहेतुको घट इत्यर्थः । अत्र हि व्यापारोऽस्तु वा माऽस्तु, साक्षात् क्रियान्वयित्वाभावात् करणत्वं नेति भावः ।

'कोपेन रक्तः' इत्यस्य कोपहेतुको रक्तत्ववान् इत्यर्थः । अत्रापि क्रियापदाश्रवणात् करणत्वशङ्कैव नास्ति । पुण्येन दृष्टो हरिरित्यत्र पुण्यशब्देनापूर्वमुच्यते । तस्य च हरिदर्शनरूपक्रियान्वयित्वेऽपि व्यापारवत्त्वाभावान्न करणत्वमिति भावः । वस्तुतस्तु पुण्यं व्यापारतयैव सर्वत्र कल्प्यते तदव्यवधानेनैव फलनिष्पत्तेः । न च तद्व्यापारः कश्चिदस्तीति पुण्यस्य करणत्वं नैव वक्तुं शक्यते । अतो हेतुत्वादेवात्र तृतीया भवतीति निश्चीयते । यदा तु यागादिकमेव पुण्यशब्देन विवक्ष्यते, तदा तस्य व्यापारवत्त्वमस्त्येवेति 'कर्तृकरणयोस्तृतीया' इत्यनेनैव तृतीया सिद्धयति ।

अत एतत् सुस्पष्टं यद्धेतुर्द्रव्यगुणक्रियान्यतमनिरूपिता भवति । तत्र च योग्यतामात्रमपेक्ष्यते व्यापारस्तु नापेक्षितः । तदेव परिपोषयति कैयटः —योग्यतामात्रयुक्तोऽनाश्रितव्यापारोऽर्थो द्रव्यगुणक्रियाविषयत्वे च हेतुः । उद्द्योतकारोऽप्यभिवदति—

---

१. सि० कौ०, कारकम्—'हेतौ' (२।३।२३) ।

२. प्रौ० म० शब्दरत्नम्–'हेतौ' इति सूत्रम् ।

व्यापारानाविष्टत्वे द्रव्यगुणक्रियाविषयत्वे च हेतुर्योग्यतामात्र इति। व्यापाराविष्टं क्रियामात्रविषयं च करणम्, व्यापारावेशश्च क्रियाविषयत्वमेव फलोपधानमेवेति ततो भेदः। नागेशमतेऽपि न ह्यत्र शास्त्रीयो हेतुर्गृह्यते। उक्तञ्च शब्देन्दुशेखरे[1]—हेतुरिह कारणं न शास्त्रीयः, तस्य कर्तृसंज्ञाया अपि सत्त्वेन कर्तृतृतीययैव सिद्धेः। एवं हि शास्त्रकारैर्हेतुकरणयोः परस्परमगतार्थता भिन्नस्वरूपञ्च बहुधा चिन्तितम्।

**करणस्वरूपविचारः**

हेतुवत् करणमपि लौकिकशास्त्रीयभेदेन द्विधा विभज्यते। लौकिककरणशब्दो क्रियासिद्धौ साधकतमं क्षेत्र-ग्राम-इन्द्रियादिष्वर्थेषु प्रयुज्यते। उक्तञ्च[2] कोशकारेण—

**करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि।**

शास्त्रीयं करणन्तु 'साधकतमं करणम्' (१।४।४२) इति सूत्रेण विधीयते। वस्तुतस्तु यथा लौकिककरणशब्दः क्रियासिद्धौ साधकतमार्थे प्रयुज्यते, तथैव शास्त्रीयोऽपि करणशब्दस्तस्मिन्नेवार्थे विहितो दृश्यते। अत एव शास्त्रीयकरणव्याख्याने अर्थान्तराभावाल्लौकिककरणरूपार्थोऽप्यन्तर्हितो भवति। तादृशस्य करणस्य लक्षणं कुर्वन्नाह भर्तृहरिः —

**क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।**
**विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम्[3]॥**

अयं भावः—सर्वेष्वपि साधनेषु सत्स्वपि यद्व्यापारादनन्तरमव्यवधानेन क्रियायाः परिनिष्पत्तिर्यदा यत्र विवक्ष्यते, तदा तत्र तस्य करणत्वं भवतीति ज्ञेयम्। तथा चाव्यवधानेन क्रियासंसाधकत्वप्रकारकेच्छीयमुख्यविशेष्यतावत्त्वं करणत्वमिति लक्षणं सिद्धम्। तेन 'रामेण बाणेन हतो बाली' इत्यत्र बाणस्य करणत्वं सम्पद्यते। अत्र कर्त्तरि व्यापारसत्त्वेऽपि बाणव्यापारात् पूर्वं हननक्रिया नोत्पद्यते, बाणव्यापाराऽव्यवधानेन हननोत्पत्तिसत्तया तस्य करणत्वमिति।

अधिकरणादीतरसाधनेषु करणे च तत्तत्साधनत्वव्यवहारो विवक्षाधीनः, करणस्य तु स्वरूपमेव विवक्षाधीनमिति विशेषख्यापनाय।

'साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धनः' इत्युक्तेऽपि विवक्ष्यत इति पुनः कथितम्। वस्तुतस्तु करणस्य स्वरूपं विवक्षाधीनमेव, न तु नियतमिति। एतदेवाह—

**वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।**
**स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः[4]॥**

---

१. शब्देन्दुशेखरः —'हेतौ' (२।३।२३);　　२. अमरकोशः —३ ३।५४।
३. वाक्यपदीयम्—३।२, साधनसमुद्देशः —९०।
४. तदेव—३।२, साधनसमुद्देशः —९१।

अस्यायमर्थः —वस्तुतः, तद्=यत्किञ्चिद्वस्तु आश्रित्य अनिर्देश्यम् = इदमेव करणम्, इदं करणमेवेति निरूपयितुं न शक्यते। आद्ये, असिदात्रादिकमेव करणम्, न तु स्थाल्यादिकमिति वक्तुं न शक्यते। 'स्थाल्या पच्यते' इति स्थाल्यादेरपि करणत्वस्य विवक्षाधीनस्य दृष्टत्वात्। द्वितीये असिदात्रादिकं करणमेवेत्यपि निर्देष्टुं न शक्यते, 'असिश्छिनत्ति' इत्यादौ तत्र कर्तृत्वस्यापि दर्शनात्। हि=यतः, करणरूपं वस्तु व्यवस्थितम्=इदमेव करणम्, इदं करणमेव इत्येवं नियतं न। यतः=यस्मात् कारणात्, स्थाल्या पच्यते—इत्येषाधिकरणस्यापि करणत्वविवक्षा दृश्यत इति।

अयं भावः —इदमेव नियतजातीयं वस्तु असिदात्रादिकं करणं नान्यदित्येवं निरूपयितुं न शक्यते। यस्मान्न किमपि वस्तु व्यवस्थितं करणतया नियतमस्ति। अधिकरणत्वेन प्रमिताऽपि हि स्थाली सूक्ष्मतरकपालत्वात् शीघ्रतरं पाककार्ये समर्थतया अनुभवत्येव विवक्षाकृतं करणत्वम्। तथा हि—लोके 'स्थाल्या पच्यते' इति करण-तृतीयान्तः प्रयोगः प्रसिद्धः। अत्र आर्द्रेन्धनरूपकरणापेक्षया सुसन्निवेशा स्थाली क्रिया-सिद्धौ प्रत्यासीदति। अतः करणापेक्षयाऽत्राधिकरणस्य साधकतमत्वेन करणत्वविवक्षया 'स्थाल्या पच्यते' इति प्रयोगो भवति।

## हेतुः

कर्त्ता कर्त्रन्तरापेक्षः क्रियायां हेतुरिष्यते। कर्त्ता=प्रयोजककर्त्ता प्रयोज्यकर्तृ-शक्तिद्वारा क्रियायामुपयुज्यमानः प्रयोज्यकर्तारं प्रेषयन् तत्प्रयोजको हेतुश्चेति शास्त्रे हेतुत्वेनेष्यते। शास्त्रे तु कर्त्तैव प्रयोजकः सन् हेतुसंज्ञां लभते। उक्तञ्च हरिणा—

**प्रेषणाध्येषणे कुर्वंस्तत्समर्थानीति चाचरन्।**
**कर्त्तैव विहितां शास्त्रे हेतुसंज्ञां प्रपद्यते[1]॥**

अयं भावः —आज्ञापुरःसरा निकृष्टस्य व्यापारणा प्रेषणम्, यत्पुनरभ्यर्थित व्यापारयति तद् अध्येषणम्। तत्समर्थानि = प्रयोज्यक्रियासम्पत्त्यनुकूलानि चेष्टितानि च आचरन् कर्त्तैव सन् तत्प्रयोजको हेतुश्चेति विहितां शास्त्रे हेतुसंज्ञां प्रपद्यते। 'हेतुसंज्ञां प्रपद्यते' इत्युक्त्या प्रदेशेषु अस्यैव हेतोः क्रियाविषयत्वेन कारकरूपस्य ग्रहणं भवति, न तु लौकिकस्य द्रव्यादिविषयस्य। यद्यप्यत्र हेतुसंज्ञाया विधानाद् "कृत्रिमा-कृत्रिमयोः कृत्रिमस्यैव ग्रहणम्" इति प्राप्तम्, तथापि उभयगतिरिह भवतीति न्यायेन इष्टानुरोधादाश्रितेनोभयग्रहणमत्र शास्त्रे भवति।

तद्यथा—'हेतुमति च' (अष्टा० ३।१।२६) इत्यत्र, 'भियो हेतुभये षुक्' (अष्टा० ७।३।४०) इत्यत्र च कृत्रिमस्यैव हेतोर्ग्रहणम्, 'हेतौ' (अष्टा० २।३।२३) इत्यत्र तु अकृत्रि-मस्यैव लौकिकस्य हेतोर्ग्रहणम्, प्रयोजकरूपकृत्रिमहेतोरत्र ग्रहणे कर्तृत्वादेव तृतीयासिद्धौ

---

१. वा० प० ३।२, साधनस० १२५।

'हेतौ' इत्येतत्सूत्रवैयर्थ्यापत्तिः। अतः कृत्रिमाऽकृत्रिमयोरुभयोर्हेत्वोर्यथापेक्षं ग्रहणमिष्यते । अपि चोक्तम् हरिणा—

क्रियायै करणं तस्य दृष्टः प्रतिनिधिस्तथा।
हेत्वर्था तु क्रिया तस्मान्न स प्रतिनिधीयते[1] ॥

अयं भावः —क्रियायै करणम्=क्रियासिद्ध्यर्थं करणमिति क्रिया उपकार्यत्वात् प्रधानम्, करणं तूपकारकत्वादप्रधानमिति तस्य करणस्याप्रधानस्य प्रतिनिधिर्दृष्टः। यथा—'बाणेन हतः' इत्यादौ हननक्रियायाः प्रधानीभूताया न प्रतिनिधिः, अप्रधानस्य बाणरूपकरणस्य शक्तिप्रासतोमरमुद्गरादिः प्रतिनिधिः। तथा क्रिया तु हेत्वर्था इति क्रियाऽप्रधानम्, हेतुः प्रधानमिति तस्मात् प्रधानत्वात् स हेतुः। न प्रतिनिधीयते=न प्रतिनिधिमान् क्रियते। यथा—'अध्ययनेन वसति' इत्यत्राध्ययनरूपहेतुफलवासक्रिया इत्यध्ययनं प्रधानमिति न तस्य प्रतिनिधिः, वासक्रिया तु अध्ययनसाधनीभूताऽप्रधानमिति तस्याः प्रतिनिधिः क्रियतेऽर्जनभिक्षणादिः। अध्ययनेन अर्जयति, अध्ययनेन भिक्षते इत्यादाविति।

न चाध्ययनस्य करणत्वमभ्युपेत्य गुणत्वमेवास्तु, गुणानुरोधि=गुणापेक्षं च प्रधानमिति अध्ययनरूपगुणाभावे वासार्थमन्यत् किञ्चिद् भिक्षादिकं प्रतिनिधातुं युक्तम्। अन्यस्य हि प्रतिनिधित्वोपादाने तादर्थ्यं क्रियायाः प्रतीयेत इति तदानीं स एव मुख्यो हेतुः स्यात्। तथा च प्रतिनिधेर्हेतुत्वाभ्युपगमेऽध्ययनस्यैव हेतुत्वं युक्तम्। तस्मात् 'अध्ययनेन वसती'ति नेयं करणतृतीया, अपि तु हेतुतृतीयैवेति।

न ह्यध्ययनेन व्यापाराविष्टेन वासो निर्वर्त्यते, येनाध्ययनस्य करणत्वं स्यात्; अपि तु वासस्याध्ययनमेव सम्पाद्य प्रधानमिति निर्व्यापारं योग्यतामात्रेणोद्देश्यमध्ययनं वासस्य हेतुः, निर्व्यापारत्वेन करणत्वासम्भवात्। अध्ययनस्य व्यापाराविष्टत्वे तु वासं प्रत्यनुकूलविवक्षायां भिक्षादिवत् तत्समर्थाचरणात्=वाससिद्ध्यनुकूलाचरणात् प्रयोजककर्तृत्वम्, अध्ययनं वासयतीति।

तदेवं कारकविषये क्रिया प्रधानम्, कारकं गुणभूतम्। हेतुविषये तु हेतुः प्रधानम्, क्रिया तु गुण इत्यनेनापि विशेषेण करणाद् हेतोर्विशेषो ज्ञेय इति।



१. वाक्यपदीयम्, साधनसमुद्देशः —२६।

# ब्राह्मणभागस्यापि वेदत्वम्

**डॉ० देवेन्द्रनाथत्रिपाठी**

प्राध्यापकः, संस्कृतविभागस्य

स्वामीदेवानंन्द-स्नातकोत्तरमहाविद्यालये

मठ-लार, देवरिया

❀ ❀ ❀

केचिदाधुनिका विचारका ब्राह्मणभागस्य वेदत्वं न स्वीकुर्वन्ति। स्वमतं समुपस्थापयन् ते कथयन्ति यद् ब्राह्मणानां वेदत्वं न साधनीयम्, यतो हि साक्षात्श्रुतिरेव ब्राह्मणभागस्य वेदत्वं नोररीकरोति। मन्त्रब्राह्मणयोरुभयत्रापि प्रयुक्तो वेदशब्दो ब्राह्मणभागं न स्पृशतीति समर्थयन् स्वमतपुष्टयर्थं ते "यस्मिन् वेदा निहिता विश्वरूपाः[1]", "वेदेन रूपे व्यपिबत्सुतासुतौ[2]", "तस्माद्यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे[3]", "त्रयो वेदा अजायन्त अग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सामवेद आदित्यात्[4]", "वेदा वा एते, अनन्ता वै वेदाः[5]", "स होवाच ऋग्वेद भगवोऽध्येमि यजुर्वेदं सामवेदमथ्याथर्वणं चतुर्थम्[6]" इत्यादीनि श्रुतिवाक्यान्येव प्रमाणरूपेण समुपस्थापयन्ति। तेषामिदमभिमतं यदुपर्युक्तानि विविधानि श्रुतिवाक्यानि मन्त्रब्राह्मणयोरुभयोरपि भागयोर्वेदत्वं नानुमोदयन्ति। "मन्त्रब्राह्मणयोर्वेदनामधेयम्[7]" इति वचनमपि न सर्वेषां ब्राह्मणानां वेदत्वसाधनपरम्; अपि तु केवलं कृष्णयजुर्वेद एव ब्राह्मणग्रन्थस्य वेदत्वं साधयति। यतो ह्यन्येषां वेदानां तु मन्त्रसंहिताः स्वतन्त्ररूपेण पृथक् पठिताः, ब्राह्मणानि च स्वतन्त्ररूपेण पृथगेव निबद्धानि सन्ति; परन्त्वेवं मन्त्रब्राह्मणयोः स्वतन्त्ररूपेण पृथक्-पृथग् विभागो नावलोक्यते कृष्णयजुर्वेदे। तत्र तु मन्त्रब्राह्मणयोरेकत्रैव सम्मिश्रणमवलोक्यते। अतः कृष्णयजुर्वेदे मन्त्राणां वेदत्वं ब्राह्मणानामवेदत्वञ्च मा भूदित्याशङ्क्य सम्पूर्णसंहितायां वेदत्वसिद्धये कृष्णयजुःश्रौतसूत्रकारेणैतादृशं वाक्यमुपनिबद्धम्। इदमेवोरीकृत्य ब्राह्मणभागस्यावेदत्वं समर्थयन् हरदत्तेनोक्तम्—

"अतः स्पष्टमेतत्प्रतीयते यत्प्राचीनैरनेकैराचार्यैर्मन्त्राणामेव वेदत्वमङ्गीकृतम्, न ब्राह्मणानामिति"[8]।

---

१. अ० सं० ४.७१६; २. शु० य० १९.७८; ३. ऋ० सं० १०।९०।९।
४. ऐ० ब्रा० २५।७; ५. तै० ब्रा० ३।१०।११।४; ६. छा० उ० ७।१।२।
७. आ० यज्ञप० २२।१।३१; ८. उद्धृतं वेदस्वरूपवि०, पृ० ४२१।

तदेतत्कथनमप्रामाणिकमसङ्गतञ्च। यतो हि, न केवलं मन्त्रब्राह्मणयोर्वेदत्वं कृष्णयजुःश्रौतसूत्रकारेणैव समर्थितम्; अपि तु मन्त्रब्राह्मणयोर्वेदत्वसाधकानि वचनानि बहुत्र मिलन्ति[1]। वस्तुसिद्धिर्हि लक्षणप्रमाणाभ्यां सम्भवति। ब्राह्मणानां वेदत्वं लक्षण-प्रमाणाभ्यां दुर्निवारम्। प्रथमं तावद्वेदस्य यानि लक्षणानि सन्ति, तानि सर्वाणि ब्राह्मणभागेऽप्युपसर्पन्ति। वेदत्वसाधकानि त्रीण्येव लक्षणानि सर्वतोभावेनादुष्टानि सर्वैश्चानुमोदितानि सन्ति। प्रथमं लक्षणं तु वेदस्य फलमुद्दिश्य सायणाचार्येण कृतम्— "इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः[2]" इति। अतो वेदानामिदमेव वेदत्वं यत् प्रत्यक्षानुमानादिभिः प्रमाणैर्येषामिष्टसाधकानां फलानां प्राप्तिरनिष्टकारकाणां दुर्विघ्नानां निवृत्तिश्च भवितुं नार्हति, प्रमाणान्तरनिरपेक्षो भूत्वा तत् सर्वमपि वेदो वेदयति[3]। अग्निष्टोमस्येष्टसाधनत्वं कलञ्जभक्षणस्यानिष्ट-साधनत्वञ्च वेद एव साधयति। एतेषु विविधेष्वलौकिकविषयेषु लौकिकानां प्रमाणानां शक्तिः प्रतिहता भवति। इदमेवाङ्गीकृत्य शङ्कराचार्येणोक्तं यत्—

"चोदना हि भूतं भवन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोति अवगमयितुम्[4]" इति।

वेदमूलकत्वादेव मन्वादिस्मृतीनामपि प्रामाण्यम्[5]। अलौकिकविषयवर्णनक्रमे सर्वाण्यपि शास्त्राणि स्वमतपुष्टयर्थं वेदवचनमेव प्रमाणीकुर्वन्ति[6]। अतः सर्वत्रेष्ट-प्राप्त्यनिष्टपरिहारयोरलौकिकं ह्युपायं वेद एव वेदयति।

इदं वेदत्वसाधकं प्रथमं लक्षणमशेषरूपेण पूर्वं ब्राह्मणभाग एव मिलति। यथा ब्राह्मणग्रन्थेषु—"अग्निहोत्रं जुहुयात् स्वर्गकामः", "उद्भिदा यजेत् पशुकामः", "न कलञ्जं भक्षयेदि"त्यादयो ह्येष्टप्राप्त्यनिष्टपरिहारयोरलौकिका उपाया वर्णिताः सन्ति। ब्राह्मणग्रन्थो विधिवाक्यैरिष्टफलप्रदेषु कर्मसु जनान् प्रेरयति, निषेधवाक्यैश्चानिष्ट-फलप्रदात् कर्मणो निवारयति। इष्टानिष्टहेयोपादेयधर्माधर्मबोधकानि विधिनिषेध-

---

१. बौ० गृ० सू० २।६।३; आ० श्रौ० सू० २४।१।३१; सत्या० श्रौ० सू० १।१।७; का० परि० २, बौ० ध० सू० २।९।७; कौशि० गृ० सू० ३।१२।२३।

२. सायणीया कृ० य० भा० भू०।

३. प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुद्धयते। एवं विदन्ति वेदेन तस्माद्वेदस्य वेदता। (उद्धृतं सायणाचार्येण, ऋ० भा० भू०)

४. ब्र० सू०; शां० भा० १।१।२।

५. धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः। (मनु० २।१३)

६ धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजः।
क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः॥ (पा० स्मृ० ८।२४)

वाक्यानि ब्राह्मणभाग एवायान्ति। मन्त्रभागेषु विधिनिषेधरूपा शक्तिर्न हि दृश्यते। यथावलोकयतु नामाग्निचयनप्रकरणे —"ऐन्द्रया गार्हपत्यमुपतिष्ठते" अनेन विधिवाक्येन ब्राह्मणग्रन्थो ऐन्द्रया ऋचा गार्हपत्याग्नेरुपस्थानस्य विधानं करोति। अस्यामैन्द्रयामृचि इन्द्रसामर्थ्यवर्णनं स्पष्टमेवावलोक्यते, यथा—

"कदाचन स्तरीरसि नेन्द्रसश्चासि दाशुषे।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते[1]" ॥

ऋचोऽस्या अयं भावो यत्—हे इन्द्र! त्वं कदाचिदपि हिंसको न भवसि। सदैव त्वं हविर्दत्तवते यजमानायेष्टफलप्रदानं करोषि। पुनरेव तव देयं हविर्यजमानस्यात्यन्तसमीप एव सम्बद्धयत इति। अतो हीन्द्रसामर्थ्यवर्णनादनया ऋचा इन्द्रस्यैवोपस्थानं करणीयम्, न तु गार्हपत्याग्नेः। अनेनैव प्रकारेणास्य मन्त्रस्येन्द्रशब्दस्य मघवन्शब्दस्य च मुख्यार्थं इन्द्र एव मत्वा "ऐन्द्रया गार्हपत्यमुपतिष्ठते" इत्यस्मिन् ब्राह्मणवाक्ये समागतस्य गार्हपत्यशब्दस्य मुख्यार्थमग्निविशेषमतिहाय गौणार्थ इन्द्र एव ग्राह्यः। यतो हीन्द्रस्यैवोपस्थान ऐन्द्रया ऋचोऽर्थः सम्यग्रूपेणान्वितो भवति; परन्त्वेवं न योजनीयम्, यतो ह्युपर्युक्तस्य ब्राह्मणवाक्यस्यैन्द्रयापदे तृतीयाविभक्तेर्गार्हपत्यपदे द्वितीयाविभक्तेश्च श्रवणाद्ब्राह्मणवचनेनेदं विधीयते यदुपस्थाने गार्हपत्यस्यैव प्राधान्यम्, ऐन्द्री ऋग् तूपस्थानाङ्गभूता एव[2]। अतः प्रधानभूतस्य ब्राह्मणवाक्यस्य विनियोजके 'ऐन्द्रया गार्हपत्यमुपतिष्ठते' इत्यस्मिन् वाक्ये गृहीतस्य गार्हपत्यशब्दस्य मुख्यार्थस्याग्निविशेषस्यैवोपस्थानं भवति। मन्त्रेण प्रकाशितस्येन्द्रस्योपस्थानं न हि क्रियते। अत्र लिङ्गप्रमाणमिन्द्रशब्दस्यार्थञ्चावधूय ब्राह्मणवाक्यस्य प्राधान्यं स्वीकुर्वन् इन्द्रशब्दस्य गार्हपत्यानुकूलो गौणार्थः परमैश्वर्यादिविशेषणविशिष्टोऽवगृह्यते।

ब्राह्मणभागे विधिवाक्यस्यैव प्राधान्यम्, यता हि तेषां विधिवाक्यानामर्थावबोधो मन्त्रैर्लौकिकैर्वाक्यैर्वा भवितुं नार्हति। तानि विधिवाक्यानि कदाचिदपि स्वार्थं नापोह्नन्ति; अपि तु सर्वथा स्वार्थमेव परिपोषयन्ति। 'न विधौ परः शब्दार्थः' इति न्यायसरणिमनुसृत्य विधिवाक्येषु मुख्यार्थस्य परित्यागो गौणार्थस्य च परिकल्पनं न हि भवति; परन्त्वतो विपरीतो मन्त्रभागोऽप्रधानो ब्राह्मणभागस्यावबोधितस्यार्थस्यावबोधकत्वात्। ब्राह्मणभागस्याङ्गरूपा अनुवादरूपाश्च मन्त्राः। इदमेव कारणं मन्त्राणामप्रधानत्वप्रयोजकम्। अनेन प्रकारेण ब्राह्मणभागस्य वेदत्वं स्वयमेव सिद्धम्। तत्रापि ब्राह्मणभागे मन्त्रभागे च ब्राह्मणभागस्यैव प्राधान्यम्, न तु मन्त्रभागस्य। क्रियाविधायकत्वान्मन्त्रभागापेक्षया ब्राह्मणभागो हि प्रबलतरः। यदि ब्राह्मणभागो वेदो न स्यात्, मन्त्रभागापेक्षया

---

१. शु० य० ३।३४; तै० सं० १।४।२२।
२. वचनात्त्वयथार्थमैन्द्री स्यात्। (जै० मी० सू० ३।२।३)

प्रबलतरो न भूत्वा तुल्यबलो दुर्बलो वा स्यात्, तर्हि ब्राह्मणभागस्य क्रोष्ट्रीव द्वितीयादयो विभक्तयो मन्त्रलिङ्गं सिंहशावकमिव द्रष्टुमपि न शक्नुयुः; परन्त्वत्र मन्त्राणां मुख्योऽप्यर्थो ब्राह्मणवाक्यस्य द्वितीयादिभिर्विभक्तिभिर्बाध्यते। यथा व्रीहियवादीनि द्रव्याणि यज्ञेषु क्रत्वङ्गरूपेण ब्राह्मणभागस्य निर्देशमनुसृत्य विनियुक्तानि भवन्ति, तथैव ब्राह्मणभागेन विनियुक्तत्वादेव तेषु क्रत्वङ्गसाधकेषु द्रव्येषु ह्यलौकिकस्वर्गादीष्टसाधनता प्रसिद्धयति। मन्त्रा अपि यज्ञाङ्गरूपेण ब्राह्मणभागस्य निर्देशं स्वीकृत्यैव द्रव्याङ्गरूपे विनियुक्ता भवन्ति तथा च तेषु मन्त्रेष्वपि प्रसिद्धयत्यलौकिकस्वर्गादिसाधनता। वार्त्तिककारेण स्पष्टरूपेणाभिहितं यत् कर्मविधानसामर्थ्यं मन्त्रेषु न हि विद्यते। यतो हि व्रीहियवादीनां द्रव्याणामिव मन्त्रा अपि ब्राह्मणभागस्य निर्देशेनैव कारणरूपेणान्विता भवन्ति[1]। सूत्रकारेण महर्षिणा जैमिनिना सिद्धान्तरूपेण मन्त्रस्थमाख्यातपदमभिधानपदेन व्यवहृतम्। यतो हि प्रयोगानुष्ठानकाले तत्तु केवलमर्थप्रकाशनमेव करोति, न तु कर्मविधानम्[2]।

अतो लौकिकवाक्यवदेव मन्त्रेषु ह्यविधायकत्वरूपानुवादकतैव विद्यते। अत्रेयं विचारणा समुदेति --यद्यपि ब्राह्मणभागो वेदो न स्यात्तर्हि इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकोपायज्ञापकता धर्ममूलकता वा मन्त्रभागस्य विनष्टैव स्यात्[3]। यतो हि, ब्राह्मणभागेनैव ज्ञायते यद्वेदमन्त्रा यज्ञकर्मणि विनियुक्ता भवन्तीति। यदि "स्वाध्यायोऽध्येतव्यः" इदं ब्राह्मणवाक्यं न स्यात्, तर्हि वेदाध्ययनस्य किमपि फलमेव न प्रसिद्धयेत्। पुनः फलश्रवणाभावात् सुतरां निरर्थकं बहुप्रयत्नसाध्यञ्च मन्त्रभागाध्ययनं प्रति कस्यापि जनस्य प्रवृत्तिरपि कथं भवेत्? व्रीहियवादीनामिव मन्त्रभागोऽपि स्वस्मिन् स्वर्गादिसाधनतासिद्धयं केवलमेकमात्रं ब्राह्मणभागमेवापेक्षते। अनेन प्रकारेण वेदस्य फलमुद्दिश्य प्रथमं यल्लक्षणं क्रियते, तत्तु समग्ररूपेण ब्राह्मणभागमन्वेत्येव। अतोऽनेन वेदत्वसाधकेन प्रथमलक्षणेन ब्राह्मणभागस्यापि वेदत्वं सुस्थितमेव।

द्वितीयं वेदस्य लक्षणमौत्पत्तिकस्वरूपदृष्टया क्रियते। कोऽपि पुरुषो वेदकर्त्तारूपेण नोपलभ्यते, अतो हि **"अपौरुषेयं वाक्यं वेदः"**[4] इति वेदस्य द्वितीयं लक्षणम्। सृष्टेरादिकालादेव वेदप्रवचनकर्तॄणां[5] वेदमन्त्रद्रष्टॄणाञ्च नामानि मिलन्ति[6]; परन्तु

१ यस्माद् व्रीह्यादिवन्मन्त्राः कारणत्वेन कर्मणाम्।
ब्राह्मणेन वियुज्यन्ते तस्मात्ते न विधायकाः॥ (जै० सू० वा० २।१।३०)

२. विधिमन्त्रयोरैकार्थ्यमेकशब्दात्। (जै० सू० २।१।३०); प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात्। (तत्रैव—२।१।३१)

३. चोदनालक्षणोऽर्थो धर्मः। (तत्रैव—१।१।२)

४. न कस्यचिद्वेदकर्ता च। (पा० स्मृ० १।२१)

५ यज्ञेन वाचः। (ऋ० मं० १०।७१।३)

६ तामन्वविन्दन् ऋषिषु प्रविष्टाम्। (तत्रैव—१०।७१।३)

वेदकर्त्रनुपलम्भेन वेदानामपौरुषेयता सिद्धैव[1]। वेदोऽयं परमेश्वरस्य निःश्वास[2]-भूतोऽपौरुषेयः, स्वशक्तिसम्पन्नो[3] नित्यवाग्रूपश्चास्ति[4]। अत्रेयं शङ्का क्रियते, यद्यदा सर्व एव शब्दा नित्या एव, यथा प्रायशः सर्वे शास्त्रकाराः स्वीकुर्वन्ति, तर्हि कथं परिमितस्य शब्दराशेरेव वेदत्वं स्वीकरणीयम्? सर्वेऽपि शब्दा वेदा एव। यतो हि सर्वेऽपि दृश्यमानाः शब्दा नित्याः; परन्त्विदं कथनं नोचितम्, यतो हि नापौरुषेयशब्दस्य वेदसंज्ञा; अपि तु वेदस्तु सार्थकानां शब्दानां संघटनारूपमपौरुषेयं वाक्यम्। इदमेवोरीकृत्य पदक्रमादीनां विकृतिपाठानां[5] वेदत्वं न हि साधयन्ति शास्त्रकाराः[6]। यद्यपीमे विकृतिपाठाः साक्षाद्वैदिकशब्दानामेव पौरुषेयसंग्रथनरूपाः सन्ति, तथाप्यपौरुषेयवाक्यत्वाभावात्तेषां स्वयं वेदरक्षणपराणामपि विकृतिपाठानां स्ववेदत्वरक्षा न हि भवति।

इदं वेदत्वसाधकं द्वितीयं लक्षणमपि ब्राह्मणभागमन्वेति। बहवो ह्याधुनिका विचारकाः—"पुराणप्रोक्तेषु ब्राह्मणकल्पेषु[7]" इतीदं महर्षिपाणिनिसूत्रमधिकृत्य ब्राह्मणभागस्य ऋषिप्रोक्तत्वं विचार्य तस्य वेदत्वं खण्डयन्ति[8]। तत्तु नोचितम्, यतो हि मन्त्राणां ब्राह्मणानाञ्च ऋषयो द्रष्टारः प्रवक्तारश्च सन्ति[9]। न खलु कोऽपि प्रवक्ता निर्माता कर्त्ता वा भवति। अतस्तेषामिदं कथनमनुभवप्रमाणविरुद्धम्। यथा ऋषिप्रोक्ता मन्त्रास्तथैव ऋषिप्रोक्तानि ब्राह्मणान्यपि सन्ति। ऋषीणां मन्त्रकर्तृत्वविषये बहूनि प्रमाणानि मिलन्ति;[10] परन्तु ब्राह्मणभागस्य ऋषिकर्तृत्वं न केनापि श्रुतं दृष्टं वा। यद्यपि मन्त्राणामृषिकर्तृत्वमीश्वरकर्तृत्वं वा प्रबलतरेणान्येन प्रमाणेन

---

१. जै० न्या० मा० १।१।८; २. शतपथब्रा० १४।

३. निजशक्त्यभिव्यक्तेः स्वतःप्रामाण्यम्। (सां० सू० ५।५१)

४. वाचा विरूपनित्यया। (ऋ० सं० ८।७५।६); अत एव च नित्यत्वम्। (ब्र० सू० १।३।२९)

५. जटामालाशिखारेखा ध्वजो दण्डो रथो घनः।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः॥ (विकृतिलक्षणम्)

६. कैय्यटः—प्रदी० ३।१।१०९; ७. पा० अष्टा० ४।३।१०५।

८ स्वामिदयानन्दः, ऋ० भा० भूमिकायाम्।

९. य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च। (न्या० द० ४।१।६२)

१०. यां ऋषयो मन्त्रकृतो मनीषिणः अन्वैच्छन्देवास्तपसा श्रमेण।
तां देवीं वाचं हविषा यजामहे सा नो दधातु सुकृतस्य लोके॥ (तै० ब्रा० २।७।७)
नमः ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यः। (तत्रैव—४।१।१); सूर्य ऋषिर्मन्त्रकृत् (ऐ० ब्रा० ६।१); यत्र धीरा मनसा वाचमक्रत। (ऋ० सं० १०।७१।२); ब्रह्मेन्द्राय वज्रिणे अकारि। (तत्रैव—७।९७।९)

बोध्यते[1]; परन्तु ब्राह्मणभागस्येश्वरकर्तृत्वसाधने प्रमाणान्येव न हि मिलन्ति। अतो वेदत्वसाधकं द्वितीयं लक्षणमपि ब्राह्मणभागस्य वेदत्वं साधयति। उभावपि मन्त्रब्राह्मण-भागौ समानरूपेणापौरुषेयौ नित्यौ च। तयोरुभयोरपि भागयोर्वेदत्वविषये न कापि विचिकित्सेति द्वितीयं वेदत्वसाधकं लक्षणं सुदृढीकरोति।

अत्र केचनाधुनिका विचारका युक्तिं समुपस्थापयन्ति यन्मन्त्रभागस्य व्याख्यान-रूपो ब्राह्मणभागो नापौरुषेयः। तानि ब्राह्मणानि वेदव्यतिरिक्तानि सन्ति वेदभाष्यत्वात्; परन्त्वियं विचारणा न समीचीना; यतो हि वाक्यकलापस्य पदान्तरेणार्थकथनमेव व्याख्यानम्। एतादृशं व्याख्यानं तु मन्त्रभागेऽपि दरीदृश्यते। शुक्लयजुर्वेदस्याथर्ववेदस्य च पुरुषसूक्ते वाक्यभेदेऽपि अर्थभेदो नावलोक्यते। अत इमे मन्त्रा व्याख्यानरूपा इति कथितुं शक्यते। अनेनैव प्रकारेण ऋग्वेदस्य—

"प्रजापते न त्वदेतान्यन्यो विश्वाजातानि परितो बभूव।
यत् कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्"[2] ॥

शुक्लयजुर्वेदस्य च—

"प्रजापते न त्वदेतान्यन्यो विश्वारूपाणि परितो बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्"[3] ॥

इत्यनयोर्मन्त्रयोः किञ्चित् शब्दभेदेऽप्यर्थभेदो न दृश्यते। अनेनैव प्रकारेण बहवो मन्त्राः सन्ति, येषां व्याख्यानरूपत्वमवलोक्यते; परन्तु तेऽपि मन्त्रा अपौरुषेयत्वाद् वेदा एव। तथैव मन्त्राणां व्याख्यानहेतुना ब्राह्मणभागस्यापौरुषेयत्वं वेदत्वञ्च न प्रतिहन्यते। महाभाष्यकारेण पतञ्जलिना समर्थितं यद् व्याख्यानसंवलितमेव सूत्रं व्याकरणम्, न तु केवलं सूत्रम्। अनेनापि न्यायेन व्याख्यानरूपब्राह्मणसंवलिता एव मन्त्रा वेदरूपा इति कथितुं शक्यते। पुनश्च ब्राह्मणभागो न केवलं व्याख्यानरूप एव; अपि तु तस्य प्रधानविषयाः स्वतन्त्ररूपेण यज्ञादिकर्मविधानम्, तेषां कर्मणामवान्तरेति-कर्तव्यता स्तुतिः, मन्त्राणां विनियोगादयश्च सन्ति। वस्तुतो व्याख्यानरूपता व्याख्येयरूपता वा न वेदत्वकारणता; अपि तु वेदत्वसाधिकापौरुषेयता एव। यस्य ग्रन्थस्य कोऽपि कर्त्ता नावलोक्यते, सम्प्रदायपरम्परया यस्याध्ययनाध्यापनमविच्छिन्न-रूपेणायाति स एव वेदः। मन्त्रब्राह्मणयोरुभयोरपि तुल्यमेतदतो मन्त्रभागवद् ब्राह्मण-भागस्यापि प्रामाण्यं वेदत्वञ्च सिद्धमेव।

---

१. एवं वा अरे महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इति। (श० ब्रा० १४।६); तस्मै नूनमभिद्यवे वाचा विरूपनित्यया वृष्णे चोदस्व सुष्टुतीम्। (ऋ० सं० ८।७५।६, १०।७१।३; निरुक्तम्—१।१; सा० सू० ५।५१; ब्रह्मसू० १।३।२९)

२ ऋ० सं० ८।७।५, ३. शु० य० सं० २३।६५।

बहवो विद्वांसो ब्राह्मणग्रन्थेषु भरद्वाजपुलहयाज्ञवल्क्यजनकादीनां संवादमन्येषामपि जन्मजराव्याधिपीडितानां मनुष्याणां जन्मोल्लेखपुरःसरमितिवृत्तवर्णनमवलोक्य ब्राह्मणभागस्य वेदत्वमपौरुषेयत्वञ्च नानुमोदयन्ति, तत्तु नोचितम्, यतो हि मन्त्रभागेष्वपि उर्वशीपुरूरवादीनाममनुष्याणां नदीपर्वतानाञ्च पर्याप्तरूपेण वर्णनं मिलति, तथापि स मन्त्रभागो वेद एव सर्वैः स्वीक्रियते। अतो ब्राह्मणभागस्यापि वेदत्वापौरुषेयत्वयोर्विषयेन कापि विचिकित्सा समापतति। लौकिकमाख्यानं वाक्यञ्चार्थमनुसृत्य समुदेति। वैदिकं वाक्यमाख्यानञ्च सर्वथार्थनिरपेक्षरूपेणातीतानागतदूरेवर्तिपदार्थानां घटनाक्रमाणाञ्च ज्ञापनं करोति[१]। यदार्थमनपेक्ष्य भविष्यवक्तृत्वक्षमता ऋषिषु दृश्यते[२], तदा परमेश्वरस्य निःश्वासरूपेषु वेदेषु क्षमतेयं कथं न स्यात्? अतो ब्राह्मणभागेषु दृश्यमानो घटनाक्रमोऽनुकरोति ब्राह्मणवाक्यान्। एवं वेदत्वसाधकं द्वितीयं लक्षणमपि ब्राह्मणभागस्य वेदत्वं नूनमेव साधयति।

अनेन प्रकारेण वेदत्वलक्षणद्वयेन संसिद्धस्य ब्राह्मणभागस्य—'द्विबद्धं सुबद्धं भवति' इत्यनेन न्यायेन तृतीयं वेदस्वरूपलक्षणमपि ब्राह्मणभागस्य वेदत्वं सुदृढीकरोति। वेदस्य व्यावहारिकं स्वरूपमुरीकृत्य तस्य तृतीयं लक्षणं **मन्त्रब्राह्मणयोर्नाम वेद** इति कृतमस्ति। अनुष्ठानकाले [३]कर्माङ्गभूतयोर्द्रव्यदेवतयोरनुष्ठेयार्थस्य वा स्मारकाः[४] प्रयोगसमवेता[५] मन्त्राः। मन्त्रभागावशिष्टो वेदभागो ब्राह्मणम्[६]। अनयोर्मन्त्रब्राह्मणयोः स्वरूपं निरूपयति सर्वानुक्रमणीवृत्तिः—

"विनियोक्तव्यरूपो यः स मन्त्र इति कथ्यते।
विधिस्तुतिकरं शेषं ब्राह्मणं कथयन्ति हि"॥

बौधायनापस्तम्बकात्यायनकौशिकसत्याषाढपारस्करादिभिः सूत्रकारैर्ब्राह्मणभागस्य वेदत्वमेकस्वरेण समर्थितम्[७]। व्यास-मनु-जैमिनि-पाणिनि-शुक्र-कौटिल्यादयोऽपि

---

१. शां० भा० १।१।२।

२ लौकिकानां हि साधूनां वागर्थमनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति॥ (उ० रा० च० १।१०)

३. मन्त्रास्तु कर्माङ्गभूतद्रव्यदेवतास्मारकाः। (वाज० प्राति०, उ० भा० १।४)

४. अनुष्ठेयार्थस्मारकवाक्यत्वं मन्त्रत्वमिति पर्यवस्यति।
(अध्वर-मी० कु० वृत्तिः —२।१।३२)

५. प्रयोगसमवेतार्थस्मारका मन्त्राः। (अर्थसंग्रहः)

६. शेषे ब्राह्मणशब्दः। (मी० सूत्रम्—२।१।३३)

७. बौ० गृ० सू० २।६।३; बौ० ध० सू० २।९।७०; आ० श्रौ० सू० २४।१।३१; आ० य० प० सू० ३१; का० प० प्रति० सू० १।२; सत्या० श्रौ० सू० १।१।७१; कौ० सूत्रम्—१।३; पा० गृ० सू० २।६।५।

शास्त्रकारा ब्राह्मणभागस्य वेदत्वं स्वीकुर्वन्ति[१]। शबरस्वामिकुमारिलभट्टषड्गुरुशिष्य-मेधातिथि-कुल्लूकविज्ञानेश्वरशङ्करसायणप्रभृतिभिराचार्यैः[२]—'मन्त्रब्राह्मणात्मक एव वेदः' इति वेदलक्षणं स्वीकृतम्। ब्राह्मणभागस्य वेदत्वसाधने कोशाणामपि बहूनि प्रमाणानि समुपलभ्यन्ते, यथा अमरकोषे—'श्रुतिः स्त्री वेद आम्नायः' इति, मेदिनीकोषे—'ब्राह्मणो ब्रह्मजातौ स्याद्वेदभागे नपुंसकम्' इति, विश्वकोषे—'श्रुतिः क्षेत्रे तथाम्नाये वार्तायां श्रौतकर्मणि' इति। निरुक्तकारेण यास्काचार्येण ब्राह्मणभागस्य कृते ह्याम्नायनिगमादीनां शब्दानां प्रयोगं विधाय ब्राह्मणभागस्य वेदत्वं स्वीकृतम्[३]। निरुक्तकारस्य यास्काचार्यस्य—"पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे[४]" इत्यस्मिन् वाक्ये मन्त्रशब्दात् पृथग् वेदशब्दस्य ग्रहणं ब्राह्मणभागमेव द्योतयति। यतो हि कर्मसम्पादनमन्त्रा ब्राह्मणभाग एव समाम्नाताः। महर्षिणा पाणिनिमुनिनापि 'छन्दसि'पदेन मन्त्रब्राह्मणे गृहीते[५]। यत्र केवलं मन्त्रभाग एवेष्टस्तत्र 'मन्त्रे' इतीदं पदं तेन प्रयुक्तम्, न तु 'छन्दसि', 'वेदे' वा[६]। तथैव ब्राह्मणभाग इष्टे सति 'ब्राह्मणे' इदं पदं प्रयुक्तं स्वसूत्रेषु[७] महर्षिणा पाणिनिना।

एवमुपर्युक्तेन विवरणेनेदं स्पष्टं यन्मन्त्रभागवद् ब्राह्मणभागस्यापि वेदत्वं सर्वराचार्यैः स्वीकृतम्। यद्यङ्गभूतो मन्त्रभागो वेदस्तर्हि साक्षाद्विधायकत्वाद् ब्राह्मणं धर्ममूलमेव। लौकिकवाक्यविलक्षणं हि ब्राह्मणं प्रमाणान्तरेणानधिगतार्थमवबोधयति। अत इदमेव मन्त्रभागस्य विनियोजकम्। यो हि ब्राह्मणभागः शाब्दीभावनयार्थीभावनया च सर्वथा संयुतस्तस्य वेदत्वविषये का विचिकित्सा ? अपि तु क्रियाविधायकत्वाद्वेदानां मन्त्रभागापेक्षया ब्राह्मणभागस्यैव प्राधान्यं सुतरां प्रसिद्ध्यति। ब्राह्मणमेव पुरुषं श्रौतं धर्मं प्रति प्रवर्तयति। कर्मस्वरूपमवबोधयन्, तदपेक्षितक्रियाकलापविधिं सम्पादयन्, अर्थवादद्वारा कर्मसम्पादनं प्रत्यलसस्वभावान् पुरुषान् कर्मणि प्रवर्तयन् ब्राह्मणभागो मन्त्रभागापेक्षयातितरां प्राधान्यमुद्वहति। इदं तु सुस्थितमेव यद् ब्राह्मणभागस्य वेदत्वं न केनापि कदाप्यपोढुं शक्यत इति।



१. ब्र० सू० १।१।२; मनु० २।६; जै० सू० १।२७-३१; १।२।६, १८, २९, ५० ; पा० सू० ३।२।७३; ६।१।२०९; शुक्रनी० ४।२७१।

२. शाबरभाष्यम्—जै० सू० २।१।३३; कुमारिलभट्टस्तन्त्रवार्तिके; षड्गुरुशिष्यः सर्वानुक्र० वृ० भूमि०; मनु० २।६ कुल्लूकभट्टटी०।

३. निरु० ७।२४।४; २।३।१ ।

४. तत्रैव—१।२।७ ; ५. पा० अष्टा० २।३।६२, ३।२।७३, ६।१।२०९ ।

६. नित्यं मन्त्रे। (पा० अष्टा० ६।१।२१०)

७. द्वितीया ब्राह्मणे। (तत्रैव—२।३।६)

# वेदानामपौरुषेयत्वम्

**डॉ० वृजकिशोरत्रिपाठी**

शोधसहायकः, कोशानुभागे

केन्द्रीय-उच्च-तिब्बती-शिक्षा-संस्थानम्

सारनाथः, वाराणसी

❀ ❀ ❀

तत्र जैमिनीयाः "चोदनालक्षणो धर्मः" ( मी० सू० १।१।२ ) इति सूत्रानुसारेण चोदनैव धर्म इति व्याचक्षते। 'चोदना' इति च क्रियायाः प्रवर्त्तकं निवर्त्तकं च वाक्यमाहुः। तथा—"स्वर्गकामोऽग्निष्टोमेन यजेत्" इति प्रवर्त्तकम्। "न हिंस्यात् सर्वभूतानि" इति निवर्त्तकम्। तस्यां हि सर्वपुंदोषरहितो वेद एव प्रमाणम्, तस्यापौरुषेयत्वात्। यन्मिथ्यात्वहेतुरागादिदोषसंसर्गरहितं तदवितथज्ञानकारणम्, यथा तिमिरादिदोषानुपप्लुतं चक्षुः, मिथ्यात्वहेतुरागादिदोषरहितश्चापौरुषेयत्वाद्वेद इति। तथात्र प्रयोगः—वेदा मिथ्यात्वहेतुरागादिदोषसंसर्गरहिताः, अपौरुषेयत्वात्। यन्नैवं तन्नैवम्, यथोन्मत्तादिवाक्यम्। वेदा अवितथज्ञानकारणानि, मिथ्यात्वहेतुदोषसंसर्गरहितत्वात्। यथा—तिमिरादिदोषानुपप्लुतं चक्षुः। उक्तं हि—"चोदनैव धर्माधर्मादिव्यवस्थानिबन्धनमालोकभूता सर्वप्राणभृतां साधारणं चक्षुरिव व्यवस्थिता। अवश्यं सेव धर्मार्थिभिः प्रेक्षावद्भिः प्रमाणत्वेनाऽऽश्रयणीया, नान्यत्पुरुषप्रणीतवचनादिकम्। तथा हि—पुरुषस्य रागादिभिरविद्यया च परीतचेतसो वचनं नालमतीन्द्रियमर्थमविपरीतमवगमयितुम्। अतस्तद्वचनसमधिगम्यो न धर्मादिः। नाप्यर्वाग्दर्शिनः प्रत्यक्षसमधिगम्याः, तस्यातीन्द्रियत्वेनात्यन्तपरोक्षत्वात्। तथा हि—इष्टानिष्टार्थसाधनयोग्यतालक्षणो धर्माधर्मौ। यथोक्तं शाबरभाष्ये—"स एव श्रेयस्करः स एव धर्मशब्देनोच्यते। कथमवगम्यते ? यो हि यागमनुतिष्ठति तं जनाः 'धार्मिकः' इति समाचक्षते। यश्च यस्य कर्त्ता, स तेनाख्यायते, यथा—पाचकः, लावक इति। तेन यः पुरुषं निःश्रेयसेन संयुनक्ति, स एव धर्मशब्देनोच्यते" ( मी० द०, शा० भा० १।१।२ ) इति। तदनेन द्रव्यादीनामिष्टार्थसाधनयोग्यताधर्म इति प्रतिपादितं भवति। तथा हि—यागशब्देन द्रव्यगुणकर्माणि श्रेयसः साधनानि विशिष्टान्युच्यन्ते। तत्र च धर्मशब्दप्रवृत्तिर्दर्शिता। यद्यपि तानि द्रव्यादीनि प्रत्यक्षाणि स्वरूपतः, न च श्रेयःसाधनत्वेन, ताद्रूप्येण च तेषां धर्मत्वमिष्यते, न स्वरूपमात्रेण। यथोक्तम्—

"श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः ।
चोदनालक्षणैः साध्या तस्मादेष्वेव धर्मता" ॥
(श्लो० वा०, चो० सू० १९१)

"एषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ।
श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते ॥
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः" ॥ इति ।
(श्लो० वा०, चो० सू० १३-१४)

ताद्रूप्येण चेति श्रेयःसाधनरूपेण । तस्माद्योग्यता धर्म इति स्थितम् । न च योग्यतामर्वाग्दर्शनाः प्रत्यक्षीकर्त्तुमीशाः, तस्याः सदैव कार्यानुमेयत्वात् । यदाह—

"शक्तयः सर्वभावानां कार्यार्थापत्तिसाधनाः" । इति ।
(श्लो० वा०, चो० सू० २००)

अन्यथा ह्यर्वाग्दर्शनत्वमेव हीयेत । नाप्यनुमानं धर्माधर्माधिगमाय युक्तम्, प्रतीतसम्बन्धस्यैव वस्तुनस्तेन परिच्छेदात्, धर्मस्य चातथाभूतत्वात् । नाप्युपमानं समर्थं धर्मप्रत्यायने, तथा हि—उपमानं सादृश्यमसन्निकृष्टे बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्य । न च धर्मेण सदृशः कश्चित् प्रतीतः सम्भवति, यत्सादृश्यात् तस्यावकल्पना भवेत् ।

नाप्यर्थापत्तिः क्षमा धर्माधर्मावबोधने । तथा हि—दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यदृष्टार्थकल्पनाऽर्थापत्तिः । न धर्मेण विना कश्चिदर्थो नोपपद्यते, यतोऽस्य कल्पना भविष्यति । तस्मादभ्युपेयं चोदनायां प्रामाण्यं वेदानाम्, तेषामपौरुषेयत्वात् ।

**वेदानामपौरुषेयत्वसिद्धिः —**

ननु दोषाश्रयस्य कर्त्तुरभावो वेदानां कथं सिद्ध इति चेदत्रोच्यते—न वेदानां पौरुषेयत्वे प्रत्यक्षं मानम् । तथा हि—अयमसाविति न शक्यते शृङ्गग्राहिकया प्रतिपादयितुमिदानीमनुपलभ्यमानत्वात् । आसीत् कर्त्तेत्येवं तु कल्पनीयम्, स चादृष्टः सन् कदाप्यासीदितीष्यते, यत्तदप्रामाणिकम् । नाप्यनुमानं प्रमाणमिष्टम्, ज्ञापकप्रमाणाभावात् । अदृष्टपूर्वेण कर्त्रा सम्बन्धो जन्यजनकभावलक्षणो यः क्रियते सम्प्रति वेदस्य वेदनिन्दकैः सोऽज्ञानहेतुकः । न ह्यदृष्टपूर्वेण वह्निना सह कश्चिद्धूमस्य सम्बन्धं ग्रहीतुं प्रभुः । नाप्युपमानम्—वेदकारसदृक् कश्चिद्यदि सम्प्रति दृश्येत ततस्तदुपमानेनोपमानं सिद्ध्येत् । न हि वेदकारादृते कश्चिद्वेदकारोऽस्ति । नापि वेदस्य कर्तृकत्वे आगमः प्रमाणम् । तथा हि—स वेदानां पौरुषेयत्वप्रतिपादक आगमः कृतको वा, अकृतको वा । वेदस्य व्यतिरेकेणाकृतकस्याभावान्न तावदकृतकः । नापि कृतकः स्वयमेवाप्रमाणत्वात् । अथ च कृतको भवन्नागमो वेदसम्बद्धमनुप्रभृतिपुरुषकर्तृको

भवेत्, तदसम्बद्धपुरुषप्रणीतो वा। नाद्यः, मन्वादिवचनानां तत्कृताया एव सत्यतायाः सम्पादकत्वात्। न द्वितीयः, असम्बद्धानां विद्विषत्वात् सत्यवादित्वाभावात्। न चार्थापत्तिर्युक्ता—न हि कर्त्तुरभावेन किञ्चिद्वेदे नोपपद्यते। येन तस्य कल्पना क्रियेत; अपि तु कर्त्तरि सति वेदस्य बहुप्रामाण्यहानिः। एवं तावत्प्रमाणपञ्चकनिवृत्त्या वेदे कर्त्तुरभावसिद्ध्या यन्मिथ्यात्वहेतुदोषसंसर्गरहितमित्यस्य हेतोर्नासिद्धिः, नापि विरुद्धता सपक्षे भावात्, विपक्षे चाभावान्नाप्यनैकान्तिकतेति सिद्धं वेदस्य प्रामाण्यम्। ननु—

शब्दे प्रमाणता तावद्वक्त्रधीनैव निश्चिता।
तदभावोऽपि सर्वत्र गुणवद्वक्त्रभावतः॥

एवमेवाह धर्मकीर्तिः —

गिरां सत्यत्वहेतूनां गुणानां पुरुषाश्रयात्।
अपौरुषेयं मिथ्यार्थं किं नेत्थं वै प्रचक्षते॥ (प्र० वा० १।२२७)

जयराशिरपि—"अथ पुरुषव्यावृत्त्या तद्दोषव्यावृत्तिनिबन्धनं प्रामाण्यम्, तद्व्यावृत्त्या तद्दोषव्यावृत्तिनिबन्धनमप्रामाण्यं किन्नेष्यते" ? (तत्त्व० सि०, पृ० ११८)। ततश्च—

प्रामाण्यं विद्यते नेति पौरुषेयेषु युज्यते।
वेदे कर्त्तुरभावे वस्तद्वार्तापि हि दुर्लभा॥ इति।

अपि च, तत्र यदुक्तं यन्मिथ्यात्वहेतुदोषसंसर्गरहितं तदवितथज्ञानकारणम्। तदत्र यथा रागादियुक्तो मृषावादी दृष्ट इत्यन्वयव्यतिरेकाभ्यां गिरां मिथ्यात्वहेतवो रागादयो दोषा निश्चितास्तथा कृपादिगुणयुक्तः सत्यवाग् दृष्ट इति कृपादयो गुणाः सत्यत्वहेतव इति। ततश्च यथा शब्दे वक्तृवशान्मिथ्यार्थता, तथा सत्यार्थताऽपीति। ततश्च स निवर्तमानस्तामपि निवर्त्तयति। सत्यप्यपौरुषेयत्वे सत्यत्वं न सिद्ध्यति। अत्रायं निष्कर्षः—यदेव दोषाभावे कारणमपौरुषेयत्वरूपं भवताऽभ्यधायि तदेव सत्यत्वहेतुगुणाभावेऽपीति।

स्यादेतत्—यदि वेदे कृपादिगुणहेतुकं सत्यत्वमभ्युपगतं स्यात्तदा गुणानां पुरुषाश्रितत्वेन पुरुषनिवृत्त्या निवृत्तौ सत्यां मिथ्यात्ववत्सत्यत्वमपि निवर्तेत। यावता स्वतः प्रामाण्याद्वेदस्य प्रकृत्यैव सत्यार्थज्ञानहेतुत्वं न पुनर्गुणकृतमिति चेत्, न, प्रकृत्या च ज्ञानहेतुत्वे सर्वदा युगपच्च ज्ञानं तद्भाविप्राप्नोत्यविकलकारणत्वादिति। तथात्र प्रयोगः—यदा यदविकलकारणं तत्तदा भवत्येव, यथाऽभिमतक्षणावस्थायाम् अग्निहोत्रादिवाक्यसम्भूतं ज्ञानम्, अविकलकारणञ्च वेदवाक्यहेतुकं सर्वज्ञानं सर्वस्यामवस्थायामिति। दोषान्तरञ्च, युगपदेव ज्ञानान्युत्पाद्योत्तरकालं ततो ज्ञानोत्पादनशक्तिः

परिहीयते वेदस्य, न वा। यदि परिहीयते, तदा शक्तेरात्मभूतायाः परिक्षयात् क्षयो प्राप्नोति। अथ न परिहीयते, तदोत्तरकालं पुनरपि ज्ञानोत्पत्तिप्रसङ्गः।

न च स्वतःप्रामाण्याद्वेदस्य सत्यज्ञानहेतुत्वेऽपि सहकारिणां व्याख्यानसङ्केतादीनां सद्भाव एव विज्ञानजनकत्वमिति चेत्, नित्यस्य समर्थस्य वेदस्य स्वभावावैकल्यात् कीदृशी सहकार्यपेक्षा। अथ प्रागसमर्थः सहकारिकारणयोगात् समर्थो भवति पश्चादित्यभ्युपेयते, तदा जहतु वेदे सामर्थ्यम्, सहकारिणामेव तत्सामर्थ्यं ज्ञानजनकत्वस्य। न च नित्यो वेदः। किञ्च, न केवलं परापेक्षायामनित्यत्वप्रसङ्गः, अपौरुषेयत्वकल्पना च प्राप्नोति। तथा हि—यथार्थज्ञानार्थमस्यापौरुषेयता कल्प्यते। सा च कल्पनाऽपि न पुरुषनिरपेक्षा, तज्ज्ञानोत्पादने समर्थेति व्यर्था तत्कल्पना। पुरुषा एव प्रमाणभूताः प्रणेतारो यथार्थज्ञानकारणं सन्तु। किमिदानीमपौरुषेयतया सिद्धोपस्थायिन्या। अथ मा भूदनित्यत्वप्रसङ्गेऽपौरुषेयत्वकल्पनायाश्च व्यर्थतेति सर्वदैव शक्तो वेदोऽभ्युपेयत इति।

स्यादेतत्—पुरुषापेक्षायां नापौरुषेयता व्यर्थायते। यथावस्थित एवार्थः पुरुषैः प्रकाश्यते, नापूर्वः क्रियते। अपूर्वकरणे हि स्वातन्त्र्यमेषामनभ्युपगतं स्यात्। ततश्च रागादिभिरुपप्लुता विपरीतार्थां श्रुतिमारचयन्तः केन प्रतिबध्येरन्? अपि च न वेदार्थस्यातीन्द्रियार्थस्य कश्चित्स्वातन्त्र्येण परिज्ञाता नरोऽभ्युपगतो यो वेदार्थमाख्यास्यति। तथा हि वेदार्थपरिज्ञानद्वारेणातीन्द्रियार्थदर्शित्वमस्य न स्वातन्त्र्येण, वेदार्थपरिज्ञानं तु नातीन्द्रियार्थदर्शित्वमन्तरेणेति व्यक्तमवतरति नितरामितरेतराश्रयत्वम्।

अपि चातीन्द्रियेऽर्थे सदसन्निश्चयकारणभावादर्थसंवादस्योभयत्राप्यनुपलभ्यमानत्वात् सौगतानां विपर्यस्तमतिमतां यागात्प्राणिबन्धाश्रिताद् दुःखसम्भूतिरिति मतिः। तथा सति प्रेक्षावतामग्निहोत्रात्स्वर्गो न भवतीत्यतो विपरीतान्यवाक्यादिवाग्निहोत्रात्स्वर्गो भवतीत्यतोऽपि संशयसमान एव। ततश्च न किञ्चिदपि ते प्रमाणम्। यतो हि यः संशयविपर्यासरहितप्रत्ययः, स प्रेक्षावतां प्रमाणव्यवहारविषयो यथा, वह्नावभ्रान्तचेतसो दाहपाकाद्यर्थिनस्तन्निश्चयहेतुप्रत्ययः। न हि संशयविपर्यासरहितश्चाग्निहोत्रादिवाक्योद्भवः प्रत्ययः। अतो नाग्निहोत्रात्स्वर्गो भवतीति वाक्योत्थः प्रत्ययः प्रमाणविषयः।

अथ च न वेदा अपौरुषेयाः, तत्प्रतिपादकप्रमाणाभावात्। नन्वपौरुषेया वेदाः सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वादात्मवदित्यनुमानमस्तीति चेन्नैवम्, विशेषणासिद्धः। पौरुषेयवादिभिः प्रलये सम्प्रदायविच्छेदस्य कक्षीकरणात्। हेतुवाक्यघटितं यत्सम्प्रदायाविच्छेदे सतीत्येतद्विशेषणं तस्यासिद्धत्वेनायं स्वरूपासिद्धो हेतुरित्यर्थः। किञ्च किमिदमस्मर्यमाणकर्तृकत्वं नामाप्रमीयमाणकर्तृकत्वमस्मरणगोचरकर्तृकत्वं वा।

तत्र न प्रथमः कल्पः, "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः" (बृ० २।४।१०),"तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत" (तै० आ० २।१२), "इदं सर्वमसृजत ऋचो यजूंषि सामानि" (बृ० १।२।५) इत्यादिभिः श्रुतिभिः परमेश्वरस्य कर्त्तुः प्रमीयमाणत्वात्। न द्वितीयः, विकल्पासहत्वात्। तथा हि, किमेकेनास्मरणमभिप्रेयते, सर्वैर्वा। नाद्यः, 'यो धर्मशीलो जितमानरोषः' इत्यादिषु व्यभिचारात्। न द्वितीयः, सर्वास्मरणस्यासर्वज्ञविज्ञानाविषयत्वात्। नित्यत्वप्रतिपादकानाञ्च वेदवाक्यानामन्यार्थपरतया पौरुषेयत्वप्रतिपादकवाक्याबाधकत्वात् पौरुषेयत्वमेव वेदानाम्।

अनुमानतोऽपि वेदानां पौरुषेयत्वमध्यवस्यते। यथा, वेदवाक्यानि पौरुषेयाणि वाक्यत्वात्, कालिदासवाक्यवत्। वेदवाक्यान्याप्तप्रणीतानि प्रमाणत्वे सति वाक्यत्वान्मन्वादिवाक्यवत्। यथोक्तम्—

'वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनरूपत्वादधुनाऽध्ययनं यथा'॥

( श्लो० वा०, वा० ३३६ )

तथा ह्यत्र प्रयोगः —'वेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वाद्वर्तमानाध्ययनवदि'ति। वेदस्य पौरुषेयत्वाङ्गीकारे तु तादृशवेदकर्तृपुरुषकृतवेदाध्ययनस्य गुर्वध्ययनपूर्वकत्वं न सम्भवति। उक्तव्याप्तिबलात्तु तत्रापि तस्यावश्यकत्वमिति वेदस्यापौरुषेयत्वमेवाङ्गीकार्यं भवति। इत्थमुक्तमनुमानं प्रति साधनं प्रगल्भत इति चेत्, तदपि न प्रमाणकोटिं प्रवेष्टुमीष्टे। अत्र किं कृत्स्नं वेदाध्ययनं पक्षः? उतातीतकालिकम्? उत सर्गकालिकाध्ययनम्? नाद्यः, सर्ववेदाध्ययनपक्षीकारे दृष्टान्तासिद्धेः। न द्वितीयः, अतीतकालीनाध्ययनपक्षीकारे चांशतः सिद्धसाधनत्वात्। द्विविधं ह्यतीतकालिकाध्ययनं सृष्ट्यारम्भकालिकं तदुत्तरकालिकञ्च। तत्र प्रथमे गुर्वध्ययनेऽसत्यपि चरमे तथात्वादक्षतं सिद्धसाधनत्वम्। नान्त्यः, सर्गकालीनाध्ययनपक्षीकारे सर्गमनङ्गीकुर्वतो मीमांसकस्याश्रयासिद्धेः। अन्यच्च—

'भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
भारताध्ययनत्वेन साम्प्रताध्ययनं यथा'॥

इत्याभाससमानयोगक्षेमत्वात्। ननु तत्र व्यासः कर्त्तेति स्मर्यते—

'को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्'?॥

इत्यादाविति चेत्, तदसारम्। "ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत" (तै० आ० ३।१९) इति पुरुषसूक्ते वेदस्य सकर्तृकताप्रतिपादनात्। सकर्तृकताप्रतिपादकेऽनुमाने बाधकस्तर्कोऽपि। यथा—'पर्वतो वह्निमान् धूमात्" इत्यनुमाने व्याप्तिग्रहणाय तर्क उपादीयते यद् धूमो यदि वह्निव्यभिचारी

स्याद् वह्निजन्यो न स्यात्। अस्यायमर्थः—संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्न-प्रतियोगिताकाऽभावाधिकरणेऽपि यदि संयोगेन धूमोत्पत्तिः स्यात्तदा वह्निधूमयोः कार्य-कारणभावो न स्यात्। अतो वह्निधूमयोर्व्याप्तौ कार्यकारणभावरूपो बाधकस्तर्कः। तथैवात्र वेदवाक्यत्वं यद्याप्तप्रणीतत्वव्यभिचारि स्यात्, तदा बालोन्मत्तादिवाक्यवद-प्रमाणं स्यात्। प्रमाणरूपबाधकतर्केण आप्तप्रणीतत्ववाक्यत्वयोर्व्याप्तिर्गृह्यते। अभ्युपेयते वेदवाक्येषु प्रामाण्यमत आप्तप्रणीतानि तानि। अथ बालोन्मत्तादिवाक्यानामनाप्त-प्रणीतत्वेनाप्रामाण्यम्, इह तदभावादाप्तवाक्यवत्प्रामाण्यमुपपद्यत इति चेत्, मैवम्, अनाप्ताप्रणीतवाक्यस्य जगत्याप्तप्रणीतत्वनियमदृष्टेः, अन्यथा वक्तुरभावे वाक्यस्यो-त्पत्तिप्रतीत्योरसम्भवात्। ननु न वक्त्रा शब्दानां निष्पादनं क्रियते; किन्त्वभिव्यक्तिरेव, तेन वक्त्रभावो नानुत्पत्तिव्याप्त इति चेत्, न, पाषण्डाद्यागमानामपि नित्यत्वप्रसङ्गात्। ननु तार्किकमतानुसारं वेदस्येश्वरकर्तृकत्वस्वीकारेऽशरीरस्य तस्य ताल्वादिस्थाना-भावेन वर्णोच्चारणासम्भवात् कथं तत्प्रणीतत्वं वेदस्य स्यादिति चेत्; न, तद्भद्रम्। स्वभावतोऽशरीरस्यापि तस्य भक्तानुग्रहार्थं लीलाविग्रहग्रहणसम्भवात्। तस्माद्वेदस्या-पौरुषेयत्ववाचोयुक्तिर्न युक्तेति चेत्, तत्र समाधानमभिधीयते—

श्रुतीनामीश्वराज्जन्म केवलं श्रुतिषु श्रुतम्।
मतान्तरोपलब्धेऽर्थे रचना तु न मीयते॥

(तत्त्वप्रकाशिका (चित्सुखी) वेदापौरुषेयत्वनिरूपणम्, श्लो० २७)

किमिदं पौरुषेयत्वं सिसाधयिषितमायुष्मद्भिः, यत्र श्रुतयः स्मृतयश्च प्रमाणत्वे-नोदाहृताः। किं पुरुषादुत्पन्नमात्रं यथास्मदादिभिरहरहरुच्चार्यमाणस्य वेदस्य। प्रमाणान्तरेणार्थमुपलभ्य तत्प्रकाशनाय रचितत्वं वा यथाऽस्मदादिभिरेव निबध्यमा-नस्य प्रबन्धस्य। प्रथमे न विप्रतिपत्तिः, उक्तपौरुषेयत्वाङ्गीकारे, यथा बौद्धैरङ्गी-क्रियते, अस्मदभिमतपौरुषेयत्वस्वीकारे बाधकाभावात्। तथा हि, आकाशवन्नित्यत्वेन सर्वगतत्वेन कालतो देशतश्च क्रमशून्यानां वर्णानामनित्योच्चारणप्रतिपत्तिक्रमविशि-ष्टानां पूर्वपूर्वक्रमानुस्मृतिनिमित्ततत्सदृशोत्तरोत्तरक्रमवतां वेदशब्दवाच्यानां साम्प्रतमपि पुरुषाधीनोत्पत्तिमत्त्वम्।

अस्यायं भावः—क्रमविशेषवान् शब्दराशिर्हि वेदः, क्रमश्च कालतो देशतो वा नियतः, स चोभयविधोऽप्यत्र न सम्भवति, अचिरं वक्ष्यमाणनित्यत्वप्रमाणबलान्नित्यानां विभूनाञ्च शब्दानां कालतो देशतो वा क्रमासम्भवात्। प्रतीयते च, अतस्तेनाभिव्यञ्ज-कोच्चारणप्रतिपत्त्योरन्यतरक्रमोपरागात्क्रमवत्त्वं वक्तव्यम्, तत्रोच्चारणप्रतिपत्ती अनित्ये इति तत्क्रमविशिष्टः शब्दराशिरपि तदुपाधावनित्य एवेतोऽष्टमेवेदृशं पौरुषे-यत्वमित्यर्थः। न चैवं सर्वदाग्रहणप्रसङ्गः, तदुच्चारणस्य व्यञ्जकाभावाद् अन्धकारस्थ-घटानुपलम्भवत्।

प्रथमेन विकल्पेन बौद्धैरापादितं पौरुषेयत्वमुरीकृत्य चरमेन विकल्पेन नैयायिकादीन् प्रत्यवतिष्ठन्ते। तथा हि नैयायिकादयो हि वेदस्य पौरुषेयत्वं स्वीकुर्वन्ति। पौरुषेयत्वञ्च पुरुषविरचितानुपूर्वीविशेषविशिष्टत्वम्। पुरुष ईश्वरः। प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वरूपे चरमे विकल्पे विकल्प्यते; किमनुबलात्तत्साधनमागमबलाद्वा। नाद्यः, मालतीमाधवादिवाक्येषु सव्यभिचारात्। व्यभिचारश्च हेतोः साध्याभाववद्वृत्तित्वम्। प्रकृते उक्तानुमाने वाक्यत्वं हेतुः। साध्यं पौरुषेयत्वम्। तच्च प्रमाणत्वेनार्थमुपलभ्य विरचितत्वम्। मालतीमाधवे च संविधानकं कविना स्वकपोलकल्पितं न प्रमाणान्तरेण तस्योपलब्धत्वम्। तथा च साध्याभाववति मालतीमाधवे वाक्यत्वं वर्तत इत्ययं वाक्यत्वरूपो हेतुरसद्धेतुरिति भावः। तत्र न वाक्यत्वरूपः केवलो हेतुः; किन्तु प्रमाणत्वे सति वाक्यत्वम्। मालतोमाधवस्य च प्रमाणत्वाभावेन विशेषणाभावप्रयुक्तविशिष्टाभाव इति तत्र हेतारभावान्न सव्यभिचार इति चेत्, तदपि न विपश्चितो मनसि वैशद्यमापद्येत। प्रमाणान्तरागोचरार्थप्रतिपादकं हि वाक्यं वेदवाक्यम्। तत्प्रमाणान्तरगोचरार्थप्रतिपादकमिति साध्यमाने मम माता वन्ध्येतिवद्व्याघातापातात्।

न च बहुतरश्रुतिप्रतिपादितपुरुषाधीनोत्पत्तिमत्त्वश्रवणान्यथानुपपत्त्यैव प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वं सिद्ध्येदिति चेदत्रोच्यते—किं पुरुषाधीनोत्पत्त्यनुपपत्त्या कल्प्यते? आहोस्वित् प्रमाणभूतरचनान्यथानुपपत्त्या? तत्र नाद्यः, इदानीमस्मदादिभिरुच्चार्यमाणवेदवाक्येषु मालतीमाधवादिवाक्येषु च व्यभिचारात्। प्रागुक्तनीत्या वेदवाक्यानि काव्यवाक्यानि चोच्चारणसमये सृज्यन्ते, तत्र प्रमाणान्तरेणोपलभ्यविरचनव्यतिरेकेण पुरुषाधीनोत्पत्तिमत्त्वमुपपद्यमानं न वेदेष्वपि तत्कल्पयतीत्यर्थः। अनयेव दिशा प्रमाणभूतवाक्यस्य रचनान्यथानुपपत्त्या मानान्तरोपलब्धेऽर्थे विरचितत्वकल्पनापि प्रत्युक्ता, विरचनमकृत्वाऽपि प्रमाणभूतानां मन्वादिवाक्यानामस्मदादिभिरुच्चार्यमाणत्वात्। अपि च प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वानुमाने तु हेतोरन्यथासिद्धिः। हेतुर्हि प्रमाणत्वे सति वाक्यत्वमिति। तद्धेतुं प्रमाणान्तराधिगतिपूर्वकविरचितत्वं विहायान्यमेव साधयति। तथा हि, अस्मदादिभिरुच्चार्यमाणेदानीन्तनवेदवाक्यानामिव सर्गकालीनानामपि तेषामीश्वरेणोच्चार्यत्वमात्रेणापि प्रमाणवाक्यत्वोपपत्तेः। तथात्रानुमानम्, वेदवाक्यानीश्वरोच्चारितानि प्रमाणत्वे सति वाक्यत्वात्। इदानीन्तनाप्तोच्चरितवेदवाक्यवत्। प्रागुक्तरीत्योच्चारणत्वं पुरुषाधीनोत्पत्तिमत्त्वरूपमभ्युपगम्यते न तेनापौरुषेयत्वक्षतिः। न चापूर्वा एव वेदा उच्चारिता ईश्वरेणेति वाच्यम्, तस्य सर्वज्ञत्वादतीतकल्पान्तरगतवेदापरोक्ष्यसम्भवात्। अविग्रहस्यापि तस्य भक्तानुकम्पितया लीलाविग्रहग्रहणेन तदुच्चारणोपपत्तेरिति निगदव्याख्यातमधस्तात्।

न चेश्वरस्य सर्वशक्तिकत्वादतोन्द्रियार्थदर्शने सक्षमत्वाद् अपूर्वानेव वेदान् रचयतोति चेत्, न, देशकालस्वभावविप्रकृष्टार्थग्रहणोपायाभावात्। न च तच्चक्षुरादिकमेव तादृक्प्रतोतिजननक्षममिति मन्तव्यम्। दृष्टानुसारेणैव कल्पनाया आश्रयणीयत्वात्। तदुक्तं गुरुभिः सर्वज्ञनिराकरणवेलायाम्—

यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥ इति।

अत एव नागमबलात्तत्साधनम्। यथा "तेन प्रोक्तम्" (पा० सू० ४।३।१०१) इति पाणिन्यनुशासने जाग्रत्यपि[1], कठशब्दात्तेन प्रोक्तमित्यर्थे "वैशम्पायनान्तेवासिभ्यश्च" (पा० सू० ४।३।१०४) इति सूत्रेण णिनिप्रत्ययः। तस्य "कठचरकाल्लुक्" (पा० सू० ४।३।१०७) इति सूत्रेण लुक्। कलापिशब्दात्तेन प्रोक्तमित्यर्थे "कलापिनोऽण्" (पा० सू० ४।३।१०८) इति सूत्रेणाण्प्रत्ययः, तित्तिरिशब्दात्तेन प्रोक्तमित्यर्थे "तित्तिरिवरतन्तुखण्डिकोखाच्छण्" (पा० सू० ४।३।१०२) इति सूत्रेण छण्प्रत्ययः। कठकलापतैत्तिरीयशब्देभ्यश्च "तदधीते तद्वेद" (पा०सू० ४।२।५) इति सूत्रेणाण्प्रत्यये "प्रोक्ताल्लुक्" (पा० सू० ४।२।६४) इति सूत्रेण तस्य लुक्। केवलप्रोक्तप्रत्ययान्तानां तु न साधुत्वम्। "छन्दोब्राह्मणानि च तद्विषयाणि" (पा० सू० ४।२।६६) इत्युक्तत्वात्। कठेन प्रोक्तमधीयते कठाः। कलापिना प्रोक्तमधीयते कालापाः। तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः। अत्र यद्यपि कठादिभिस्तास्ताः शाखा न विरचितास्तथापि तेषामध्ययनसम्प्रदायप्रवर्त्तकत्वेन शाखासु तत्कृतत्वमुपचर्य कठादिसमाख्या भवति तद्वदेवेश्वरेऽपि सम्प्रदायप्रवर्त्तकविषयत्वेनाप्युपपद्यते।

यच्चानाप्ताप्रणीतत्वे सत्याप्तप्रणोतत्वमेवायाति गत्यन्तराभावादिति, तदपि न युक्तिक्षमम्, तत्र किमनाप्ताप्रणीतत्वमात्रेणाप्ताप्रणीतत्वमात्रमनुमीयते? शब्दत्वविशेषितेन वा? नाद्यः, आत्माकाशादौ व्यभिचारात्। द्वितीयेऽपि किमाप्तप्रणीतत्वमात्रमनुमीयते? उपलभ्यविरचनं वा? आद्ये आप्तप्रणोतत्वामात्रस्य पूर्वोक्तन्यायेन वेदेऽप्यङ्गीकारात्। द्वितीयेऽपि पूर्वोक्तमेव दूषणम्। न चैवं पाषण्डाद्यागमानामपौरुषेयत्वम्, मानान्तरेणार्थमुपलभ्य विरचितत्वस्य सौगतादिभिः स्वयमेवाङ्गीकारात् प्रसिद्धेश्च।

यदुक्तं वेदानामुच्चारणरूपसहकारिणामपेक्षणात् सहकारिणामेवास्तु सत्यत्वज्ञानहेतुत्वं तन्न, वेदानां स्वतःप्रामाण्यात्। तच्च ज्ञानजनकसामग्रीजन्यत्वम्। सहकारिणामपि सामग्र्यन्तर्भावात्। पुरुषोच्चारणरूपापौरुषेयता अनुमाननिराकरणा-

---

१. 'तेन प्रोक्तम्' (४।३।१०१) इत्यस्य प्रातिपदिकात्तन प्रोक्तमित्यर्थेऽणादय प्रत्ययाः भवन्तीत्यर्थः। प्रकर्षेणोक्तं प्रोक्तम्। कृतमिति यावत्। प्रकर्षश्च स्वयंविरचनपूर्वकत्वम्।

वसरेऽभ्यधायि। अपरञ्च यदुक्तं वेदार्थपरिज्ञानेनातीन्द्रियार्थदर्शित्वमतीन्द्रियार्थदर्शित्वेन वेदार्थपरिज्ञानमित्यन्योन्याश्रयः, अतीन्द्रियार्थदर्शिनः कस्यचित्पुरुषस्याभावादिति, तदपि न, न हि वेदार्थस्यातीन्द्रियार्थस्य परिज्ञानायातीन्द्रियार्थदर्शित्वमपेक्षते, स्वतः प्रामाण्यादेव। भवतु नाम, सौगतानां विद्विषत्वात् 'अग्निहोत्रात्स्वर्गो भवति' इत्यतः संशयः। परं वेदेषु श्रद्दधानानां पुरुषाणां नास्ति संशयलेशोऽपि। न च परस्परं विभिन्नार्थप्रतिपादकत्वाद्वेदमन्त्राणां न प्रामाण्यम्, तदत्राभिधेयं यत् स्वकीयः सिद्धान्तः साधकबाधकयुक्तिबलादेव दृढीक्रियते तीर्थिकैः।

परस्परासङ्गतार्थतया तावद्वेदा उन्मत्तप्रणीता इति न शक्यते वक्तुम्। उन्मत्तप्रणीतस्य चैयतो ग्रन्थराशेः प्रथममध्ययनं कथं प्रवर्त्तेत? के हि सचेतस उन्मत्तोक्तमेतावन्तं ग्रन्थराशिं महता क्लेशेनाधीयेरन्? धारयेयुरध्यापयेयुश्च? न च बुद्धादिग्रन्थवद्बुद्धिपूर्वकारिणा वक्त्रा प्रोत्साहिता महत्यप्यायासे प्रवर्त्तेरन्, अतो बुद्धिपूर्वकारिप्रणीता वेदा इति वाच्यम्? न हि बुद्धिपूर्वकारो वेदान् विरचयितुमलम्, तदर्थस्य बुद्धावारोपयितुमशक्यत्वात्। प्रमाणान्तराविषयो ह्यपूर्वात्मा वेदार्थः, स प्राग्वेदवचनेभ्यो बुद्धिस्थतामापादयितुमशक्यः।

ननु बुद्धादिवचनान्यप्येवमेव कथं नापौरुषेयाणि स्युरिति चेन्न, तेषां साध्यसाधनभावं कल्पयित्वाऽपि बुद्धावारोपयितुं शक्यत्वात्। ज्योतिष्टोमादिषु दृष्टं स्वर्गसाधनत्वं चैत्यवन्दनादावारोपयितुं शक्यते। अपूर्वं त्वपूर्वेणाप्यारोपेण नावतरति। अथ कथं तुल्येऽपि लिङादिप्रयोगे बुद्धादिवचनानि साध्यसाधनभावमात्रपराणि, न वेदवाक्यानि। उच्यते, बुद्धादिवचनानि तावत् साक्षाद् दृष्टपुरुषकर्तृकाणि, तेन यदेव पुरुषाः प्रमाणान्तरेण बुद्धिस्थीकर्त्तुमीशते, अतस्तद्विवक्षाप्रयुक्तान्येवेति निश्चीयते। पुरुषाश्च नापूर्वं बुद्धौ निवेशयितुमलम्, साध्यसाधनभावं त्वन्यत्र दृष्टं बुद्धिस्थीकृत्य वाक्यं विरचयितुं क्षमन्ते। वेदेषु तु साक्षात्कर्त्ता नोपलब्धः। तेन स्वमहिमानुसारेण तावदर्थो बोद्धव्यः। न चापूर्वात्मको वेदार्थः प्रमाणान्तरेण प्रतीयते। अप्रतीते च तस्मिन् न शक्तता तद्विषयवाक्यरचने बुद्धिपूर्वकारिणामिति, पौरुषेयत्वं नानुमीयते। य एव हि पदसङ्घाताः पुरुषैर्विरचयितुं शक्यन्ते, तत्रैव पौरुषेयत्वं दृष्टमित्यशक्यविरचनेषु पौरुषेयत्वानुमानं न क्रमते। न च पौरुषेयत्वं विना पदसंघातात्मकतैव नोपपद्यते। उच्चारणवशानि हि पदानि संहततामापाद्यन्ते। तच्चोच्चारणमुच्चारणान्तरपूर्वकं वा स्यात्, स्वबुद्धिप्रभवं वा। दृश्यन्ते ह्यन्येनापि प्रयुक्तमन्येनाधीयमानं भारतादिवत्, यथा आधुनिकाः पुरुषा भारतादिकमुच्चारणान्तरदर्शनपूर्वकमधीयते, तथा वेदानपि सर्वपुरुषा एवेति किमनुपपन्नम्। अतस्सिद्धमपौरुषेया वेदा इति। अपौरुषेयाश्चेन्नास्ति प्रमाणान्तरापेक्षा प्रत्यक्षवत्।

ततश्च वेदस्यापौरुषेयतया निरस्तसमस्तशङ्काकलङ्काङ्कुरत्वेन स्वतःसिद्धं वदानां धर्मे प्रामाण्यमिति सुस्थितम् ।

शब्दनित्यत्वसिद्धिः —

न केवलमपौरुषेयत्वादेवापि तु नित्यत्वादपि वेदानां स्वतःप्रामाण्यं साधयितुं शक्यते । यथोक्तमाचार्यैः —"औत्पत्तिकं हि शब्दस्यार्थेन सम्बन्धमाश्रित्य 'अनपेक्षत्वात्' इति वेदस्य प्रामाण्यं स्थापितम्" (शाङ्करभाष्यम्, सू० १।३।२८) तथात्र प्रयोगः — वेदाः स्वतःप्रमाणानि नित्यशब्दार्थसम्बन्धत्वात् । यन्नैवं तन्नैवम्, यथा कालिदासादि-वाक्यम् । उक्तमपि "शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्" ( ब्र० सू० १।३।२८ ) इति पारमर्षसूत्रे नित्यशब्दाज्जगदुत्पन्नमिति ।

ननु शब्दोऽनित्यः कृतको वा सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियप्रत्यक्षत्वात्, घटवदित्यनुमानेन शब्दानां कृतकत्वेन न वेदानां प्रामाण्यत्वसिद्धिः । न चोपान्त्यादि-शब्देषु भागासिद्धिः । तथा हि, अस्मदादिबाह्येन्द्रियग्राह्यत्वमुपान्त्यादिषु शब्देषु नास्ति । कथमिति चेदत्रोच्यते—भेरीदण्डसंयोगात् कण्ठताल्वादिसंयोगाद्वा निमित्त-कारणाद् भेर्याकाशकण्ठाकाशसंयोगादसमवायिकारणाद् महाकाशप्रदेशे समवायिकारणे प्रथममेकः शब्द उत्पद्यते, तस्य च शब्दस्य विभुगुणतया आश्रयद्वारा स्वतो वा गमनानु-पपत्तेः प्रदेशान्तरोत्पन्नत्वात् स्वभावभेदाद्वा न श्रोत्रग्राह्यत्वम्, ततश्च तस्माच्छब्दाद-समवायिकारणाद् अदृष्टादिनिमित्तकारणादाद्यशब्दाश्रयाकाशप्रदेशानन्तराकाशप्रदेशेषु समवायिकारणेषु सर्वतोदिशि शब्दा उत्पद्यन्ते, तेभ्यश्चान्ये तेभ्यश्चान्य इति वीची-सन्तानवद् यावच्छ्रोत्रसमवेतशब्दं शब्दसन्ताना उत्पद्यन्ते, तत्र यः कर्णशष्कुल्यवच्छिन्ना-काशप्रदेशे शब्द उत्पद्यते, स श्रोत्रसमवायाच्छ्रोत्रेण गृह्यते, नोपान्त्य इति वाच्यम्, श्रोत्रग्राह्यशब्दविशेषस्यैव पक्षीकरणात् ।

न चोक्तव्याख्यानरीत्या य एव शब्द एकेन गृह्यते न स श्रोत्रान्तरग्राह्यः, तत्रासमवेतत्वात्, स्वभावभेदाद्वेति विशिष्टधर्मिहेत्वोरसिद्धिः, एकस्य शब्दस्य बहूनां प्रत्यक्षत्वानुपपत्तेरिति वाच्यम्, शब्दनित्यत्वानुमानेऽप्यस्य दोषस्य तुल्यत्वात् स्वव्याघातकत्वेन जात्युत्तरत्वापत्तेः । तथा हि, भवदिन्द्रियग्राह्यः शब्दः पक्षः ? अस्मदिन्द्रियग्राह्यो वा ? नाद्यः, प्रतिवादिनं प्रत्यसिद्धेः । न द्वितीयः, वादिनं प्रत्यसिद्धेः । तस्माल्लोकप्रसिद्धशब्दत्वजात्याधार एव शब्दो नित्यत्वसाधने पक्ष इति वाच्यम्, एवमनित्यत्वसाधनेऽपीति न कश्चिद्दोषः । नन्विदमनुमानं स एवायं गकार इति प्रत्यभिज्ञाप्रमाणप्रतिहत इति चेत्. तदपि फल्गु, लूनपुनर्जातकेशदलित-कुन्दादाविव प्रत्यभिज्ञायाः सामान्यविषयत्वेन बाधकत्वाभावादिति चेत्, अत्रोच्यते— यत्सामान्यवत्त्वे सत्यस्मदादिबहिरिन्द्रियप्रत्यक्षतया भवद्भिः शब्दानां कृतकत्वमनुमानेन

साध्यते, तदस्मदादिबहिरिन्द्रियप्रत्यक्षस्य कालाकाशादेर्नित्यत्वेन भाट्टं प्रत्यनैकान्त्यम् । यथोक्तं पार्थसारथिना—"यद्यपि न स्वातन्त्र्येण दिशः श्रोत्रग्राह्यत्वम्, तथापि रावे गृह्यमाणे तद्विशेषणतया दिगपि श्रोत्रेण गृह्यत इति दृष्टत्वादङ्गीक्रियते कालवत्" (शा० दी० तर्क०, पृ० १३९) । यथोक्तं नारायणभट्टेनापि—

व्योमकालदिशामादौ प्रत्यक्षत्वं समर्थ्यते ।
अनिष्टं भट्टपादोक्तिमाधुर्यानभिलाषिणः ॥ (मानमेयोदयः)

तथात्र प्रयोगाः, आकाशमस्मदादिप्रत्यक्षं प्रदेशवृत्तिविशेषगुणवत्त्वात्, आत्मवत्, दिक्कालाकाशान्यस्मदादिप्रत्यक्षाणि विभुत्वादात्मवत्, श्रोत्रं विभुग्राहकमिन्द्रियत्वान्मनोवदिति तेषां प्रत्यक्षत्वसिद्धेः । श्रोत्रं नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वाद् मनोवदिति भाट्टमतेन प्रयोगसम्भवेन, सत्प्रतिपक्षाच्च ।

यच्चोक्तं प्रत्यभिज्ञायाः सामान्यविषयत्वमिति, तदपि न साम्प्रतम् । यतो हि सामान्यनिबन्धनत्वमस्या बलवद्बाधकोपनिपातादास्थीयते क्वचिद्व्यभिचारदर्शनाद्वा । तत्र क्वचिदैक्याभावेऽपि लूनपुनर्जातकेशादौ स एवायमिति प्रत्यभिज्ञा कथञ्चिज्जायमाना दृश्यते तद्व्यभिचारदर्शनात् सामान्यविषयत्वमिति चेदुच्येत, तदुत्प्रेक्षायामुक्तं स्वतःप्रामाण्यवादिभिः—

उत्प्रेक्षेत हि यो मोहादज्ञातमपि बाधनम् ।
स सर्वव्यवहारेषु संशयात्मा विनश्यति ॥ इति ।

बलवद्बाधकादिति चेत्, तदपि न युक्तिक्षमम् । गादिव्यक्तीनां प्रतिपुरुषं भेदोपलम्भान्नेदं प्रत्यभिज्ञानं गादिव्यक्तिविषयम्; किन्तु गत्वादिजातिविषयम् । अन्यथा सोमशर्माधीत इति विभागो न स्यादिति बलवद्बाधकत्वम् । तदत्र गादिव्यक्तिभेदे प्रमाणाभावेन गत्वादिजातिविषयकल्पनायां प्रमाणाभावात् । यथा गोत्वमजानत एकमेव भिन्नदेशपरिमाणसंस्थानव्यक्त्युपधानवशाद्भिन्नदेशमिवाल्पमिव महदिव दीर्घमिव वामनमिव प्रथते तथा गव्यक्तिमजानत एकापि व्यञ्जकभेदात्तत्तद्धर्मानुबन्धिनी प्रतिभासते । एतेन विरुद्धधर्माध्यासाद्भेदसिद्धिरिति प्रत्युक्तम् । तत्र किं स्वाभाविको विरुद्धधर्माध्यासो भेदसाधकत्वेनाभिमतः प्रातीतिको वा । प्रथमेऽसिद्धिः । गकारादिषु स्वाभाविकविरुद्धधर्माभावात् । अपरथा स्वाभाविकभेदाभ्युपगमे दश गकारानुदचारयच्चैत्र इति प्रतिपत्तिः स्यान्न तु दशकृत्वो गकार इति । द्वितीये प्रातीतिके विरुद्धधर्माध्यासेऽपि न स्वाभाविकस्य भेदसिद्धिः । न हि परोपाधिभेदेन स्वाभाविकमैक्यं विहन्यते । मा भून्नभसोऽपि कुम्भाद्युपाधिभेदात्स्वाभाविको भेदः । तत्र व्यावृत्तव्यवहारो नादनिदानः । तदुक्तमाचार्यैः—

प्रयोजनं तु यज्जातेस्तद्वर्णादेव लप्स्यते ।
व्यक्तिलभ्यं तु नादेभ्य इति गत्वादिधीर्वृथा ।। इति ।

तथा च—

प्रत्यभिज्ञा यदा शब्दे जागर्ति निरवग्रहा ।
अनित्यत्वानुमानानि सैव सर्वाणि बाधते ।।

एतेन शब्दोऽनित्यः, इन्द्रियग्राह्यविशेषगुणत्वाच्चक्षूरूपवदित्यनुमानमप्यसिद्धम् । शब्दद्रव्यत्ववादिनं मीमांसकं प्रत्यसिद्धेः । तथा च शब्दस्य गुणत्वमेव नास्ति कुत इन्द्रियग्राह्यविशेषगुणत्वमिति पक्षभूते शब्दे हेतोरवृत्त्या स्वरूपासिद्धो हेतुः शब्दो गुणश्चाक्षुषत्वादितिवत् । ध्वन्यंशे सिद्धसाधनत्वम् । तस्यास्मन्मतेऽपि सिद्धत्वेन साधनानपेक्षत्वात् । अपि चास्मिन्ननुमाने अश्रावणत्वोपाधिः । साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः । यत्रानित्यत्वं तत्राश्रावणत्वं यथा चक्षूरूपादाविति साध्यव्यापकत्वम् । यत्रेन्द्रियग्राह्यविशेषगुणत्वं तत्राश्रावणत्वमिति न नियमः । यथा शब्द एव । एवं साधनाव्यापकत्वं स्वस्थं संघटते ।

उदयनस्त्वाश्रयाप्रत्यक्षत्वेऽप्यभावस्य प्रत्यक्षतां महता प्रबन्धेन[1] प्रतिपादयन्निवृत्तः कोलाहल उत्पन्नः शब्द इति व्यवहाराचरणे कारणं प्रत्यक्षं शब्दानित्यत्वे प्रमाणयति स्म । सोऽपि विरुद्धधर्मसंसर्गस्यौपाधिकत्वोपपादनन्यायेन दत्तरक्तबलिवेतालसमः । यो हि नित्यत्वे सर्वदोपलब्ध्यनुपलब्धिप्रसङ्गो न्यायभूषणकारोक्तः सोऽपि ध्वनिसंस्कृतत्वोपलम्भाभ्युपगमात्प्रतिक्षिप्तः ।

यत्तु शब्दानां व्यापकत्वात्सर्वे शब्दा युगपदेव श्रोत्रेन्द्रियेण सम्बद्धा इति तेषां मध्येऽमुक एव व्यञ्जकध्वनिना संस्क्रियत इति नियमो न सम्भवति । तथा चानुमानम्—शब्दविशेषो न नियतसंस्कारकसंस्कार्यः, इतरैः सह सम्बन्धाविशेषात्, तदपि न, आत्मन्यनैकान्तिकत्वात् । सर्वेषां जीवात्मनां विभुत्वात्सर्वत्र सत्त्वेऽपि चाक्षुषादिज्ञानकाल एकस्यैवात्मविशेषस्य संस्कार्यत्वदर्शनात् ।

कीदृशं पुनः शब्दमभिप्रेत्य नित्यत्वं व्यवस्थाप्यते, स्फोटमित्याह । वर्णपक्षे हि तेषामुत्पन्नप्रध्वंसित्वमभ्युपगम्यते । मृष्यामहे न वर्णाः प्रत्यायका इति, न स्फोट इति न मृष्यामः, तदनुभवानन्तरं विदितसङ्गतेरर्थधीसमुत्पादात् । न च वर्णातिरिक्तस्य तस्यानुभवो नास्ति, गौरित्येकं पदं गामानय शुक्लामित्येकं वाक्यमिति नानावर्णपदातिरिक्तैकपदवाक्यावगतेः सर्वजनीनत्वात् । न चायमसति बाधके एकपदवाक्यानुभवः

---

१. वायोरचाक्षुषत्वेऽपि तद्गतरूपाभावस्य चाक्षुषत्वदर्शनेन नाभावप्रत्यक्षं प्रत्याश्रयप्रत्यक्षस्य कारणत्वम् ।

शक्यो मिथ्येति वक्तुम् । नाप्यौपाधिक: । उपाधि: खल्वेकधीग्राह्यता वा स्यात्, एकार्थधीहेतुता वा । न तावदेकधीगोचराणां धवखदिरपलाशानामेकनिर्भासः प्रत्ययः समस्ति । तथा सति धवखदिरपलाशा इति न जातु स्यात् । नाप्येकार्थधीहेतुता, तद्धेतुत्वस्य वर्णेषु व्यासेधात्, तद्धेतुत्वेन तु साहित्यकल्पनेऽन्योन्याश्रयप्रसङ्गः । साहित्यात्तद्धेतुत्वं तद्धेतुत्वाच्च साहित्यमिति । तस्मादयमबाधितोऽनुपाधिश्च पदवाक्यगोचर एकनिर्भासो वर्णातिरिक्तं वाचकमेकमवलम्बते स स्फोट इति । तं च ध्वनयः प्रत्येकं व्यञ्जयन्तोऽपि न द्रागित्येव विशदयन्ति, येन द्रागर्थधीः स्यात्; अपि तु रत्नतत्त्वज्ञानवद्यथास्वं द्वित्रिचतुष्पञ्चषड्दर्शनजनितसंस्कारपरिपाके सचिवचेतोलब्धजन्मनि चरमे चेतसि चकास्ति विशदं पदवाक्यतत्त्वमिति प्रागुत्पन्नायास्तदनन्तरमर्थधिय उदय इति नोत्तरेषामानर्थक्यं ध्वनीनाम् । नापि प्राचाम्, तदभावे तज्जनितसंस्कारतत्परिपाकाभावेनानुग्रहाभावात्, अन्त्यस्य चेतसः केवलस्याजनकत्वात् । न च पदप्रत्ययवत् प्रत्येकमव्यक्तामर्थधियमाधास्यन्ति प्राञ्चो वर्णाः, चरमस्तु तत्सचिवः स्फुटतरामिति युक्तम्, व्यक्ताव्यक्तावभासितायाः प्रत्यक्षज्ञाननियमात्, स्फोटज्ञानस्य च प्रत्यक्षत्वात् । अर्थधियस्त्वप्रत्यक्षाया मानान्तरजन्मनो व्यक्त एवोपजनो न वा स्यान्न पुनरस्फुट इति न समः समाधिः, तस्मान्नित्यः स्फोट एव ।

अत्र ब्रूमहे, अभ्युपेयते वर्णातिरिक्तः स्फोटः, यदि वर्णानां वाचकत्वम्, स चानुपद्धतिमध्यासीत् । द्विधा चानित्यत्वं वर्णानाम्, क्षणिकत्वेनाशक्यसङ्गतिग्रहत्वाद्वा व्यस्तसमस्तप्रकारद्वयाभावाद्वा । न तावत्प्रथमः कल्पः, उक्तप्रकारेण वर्णानां क्षणिकत्वे मानाभावात् । व्यस्तसमस्तप्रकारद्वयाभावेन यदासञ्जितं तन्निराक्रियते । निरूपयतु तावद्गौरित्येकं पदमिति धियमायुष्मान् । किमियं पूर्वानुभूतान् गकारादीनेव सामस्त्येनावगाहते, किं वा गकाराद्यतिरिक्तं गवयमिव वराहादिभ्यो विलक्षणम् । यदि गकारादिविलक्षणमवभासयेत्, गकारादिरूषितः प्रत्ययो न स्यात् । न हि वराहधीर्महिषरूषितं वराहमवगाहते । पदतत्त्वमेकं प्रत्येकमभिव्यञ्जयन्तो ध्वनयः प्रयत्नभेदभिन्नास्तुल्यस्थानकरणनिष्पाद्यतयान्योन्यविसदृशतत्तत्पदव्यञ्जकध्वनिसादृश्येन स्वव्यञ्जनस्यैकस्य पदतत्त्वस्य मिथो विसदृशानेकपदसादृश्यान्यापादयन्तः सादृश्योपधानभेदादेकमप्यभागमपि नानेव भागवदिव भासयन्ति, मुखमिवैकं नियतवर्णपरिमाणस्थानसंस्थानभेदमपि मणिकृपाणदर्पणादयोऽनेकमनेकवर्णपरिमाणसंस्थानभेदम् ।

एवञ्च कल्पिता एवास्य भागा वर्णा इति चेत्, तत्किमिदानीं वर्णभेदानसत्यपि बाधके मिथ्येति वक्तुमध्यवसितोऽसि ? एकधीरेव नानात्वस्य बाधिकेति चेत्, हन्तास्यां नानावर्णाः प्रथन्त इति नानात्वावभास एवैकत्वं कस्मान्न बाधते । अथवा वनसेनादिबुद्धिवदेकत्वनानात्वे न विरुद्धे । न खलु सेनावनबुद्धी गजपदातितुरगादीनां चम्पकाशोककिंशुकादीनां च भेदमपबाधमाने उदीयेते; अपि तु भिन्नानामेव सतां केनचिदेके-

नोपाधिनावच्छिन्नानामेकत्वमापादयतः। न च परोपाधिकेनैकत्वेन स्वभाविकं नानात्वं विरुद्धयते। न ह्यौपचारिकमग्नित्वं माणवकस्य स्वाभाविकनरत्वविरोधि। तस्मात्प्रत्येकवर्णानुभवजनितभावनानिचयलब्धजन्मनि निखिलवर्णावगाहिनि स्मृतिज्ञान एकस्मिन् भासमानानां वर्णानां तदेकविज्ञानविषयतया वैकार्थधीहेतुतया वैकत्वमौपचारिकमवगन्तव्यम्। न चैकार्थधीहेतुत्वेनैकत्वमेकत्वेन चैकार्थधीहेतुभाव इति परस्पराश्रयम्, न ह्यर्थप्रत्ययात्पूर्वमेतावन्तो वर्णा एकस्मृतिसमारोहिणो न प्रथन्ते। न च तत्प्रथानन्तर वृद्धस्यार्थधीर्नोन्नीयते, तदुन्नयनाच्च तेषामेकार्थधियं प्रति कारकत्वमेकमवगम्यैकपदत्वाध्यवसानमिति नान्योन्याश्रयम्। न चैकस्मृतिसमारोहिणां क्रमाक्रमविपरीतक्रमप्रयुक्तानामभेदो वर्णानामिति यथाकथञ्चित्प्रयुक्तेभ्य एतेभ्योऽर्थप्रत्ययप्रसङ्ग इति वाच्यम्, उक्तं हि—

> यावन्तो यादृशा ये च पदार्थप्रतिपादने।
> वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥ इति।
>
> (सं० आ०, परि० ६९)

ननु पङ्क्तिबुद्धावेकस्यामक्रमायामपि वास्तवी शालादीनामस्ति पङ्क्तिरिति तथैव प्रथा युक्ता, न च तथेह वर्णानां नित्यानां विभूनां चास्ति वास्तवः क्रमः, प्रत्ययोपाधिस्तु भवेत्, स चैक इति, कुतस्त्यः क्रम एषामिति चेत्, न, एकस्यामपि स्मृतौ वर्णरूपवत्क्रमवत्पूर्वानुभूततत्परामर्शात्। तथा हि, जारा-राजेति पदयोः प्रथयन्त्योः स्मृतिधियोस्तत्त्वेऽपि वर्णानां क्रमभेदात्पदभेदः स्फुटतरं चकास्ति। तथा च नाक्रमविपरीतक्रमयुक्तानामविशेषः स्मृतिबुद्धावेकस्यां वर्णानां क्रमप्रयुक्तानाम्। यथाहुः —

> पदावधारणोपायान्बहूनिच्छन्ति सूरयः।
> क्रमन्यूनातिरिक्तत्व-स्वरवाक्यश्रुतिस्मृती॥ इति।
>
> ( श्लो० वा० ७।१८० )

इत्थमेव वर्णरूपः शब्दो नित्य इत्यास्थीयते।

**वेदानां स्वतःप्रामाण्यसिद्धिः —**

स्यादेतत्,

> प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः।
> नैयायिकास्ते परतः सौगताश्चरमं स्वतः॥
> प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः।
> प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणताम्॥

इति वादिविवाददर्शनात्कथङ्कारं स्वतो धर्मे प्रामाण्यं वेदानामिति जिज्ञासायामभिधीयते—

किञ्च, किमिदं स्वतःप्रामाण्यं नाम। किं स्वत एव प्रामाण्यस्य जन्म। आहोस्वित्स्वाश्रयज्ञानजन्यत्वम्। किमुत स्वाश्रयज्ञानसामग्रीजन्यत्वम्। उताहो ज्ञानसामान्यसामग्रीजन्यज्ञानविशेषाश्रितत्वम्। किं वा ज्ञानसामान्यसामग्रीमात्रजन्यज्ञानविशेषाश्रितत्वम्। तत्राद्यः सावद्यः, कार्यकारणभावस्य भेदसमानाधिकरणत्वेनैकस्मिन्नसम्भवात्। नापि द्वितीयः, गुणस्य सतो ज्ञानस्य प्रामाण्यं प्रति समवायिकारणतया द्रव्यत्वापातात्। तदुक्तम्—"समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम्" (भा० प० २३) इति। नापि तृतीयः, प्रामाण्यस्योपाधित्वे जातित्वे वा जन्मायोगात्। तस्य प्रामाण्यस्य जातित्वे तस्य नित्यत्वान्न जन्मसम्भवः। यदि च प्रत्यक्षत्वादिभिः साङ्कर्यात्प्रामाण्यं न जातिरित्युच्यते तदा तस्योपाधिस्वरूपत्वम्। उपाधिश्च सखण्डाखण्डभेदेन द्विविधः। तत्र प्रामाण्यस्याखण्डोपाधिस्वरूपत्वे नित्यत्वमेव। सखण्डोपाधेस्तु यथायथं द्रव्याद्यन्यतमस्वरूपत्वात्क्वचिन्नित्यत्वं क्वचिदनित्यत्वम्। यथा पृथिवीत्वादिना साङ्कर्याच्छरीरत्वं न जातिः; किन्तूपाधिः। तथा च शरीरे यच्चेष्टाश्रयत्वं तदेव शरीरत्वं नान्यत्। चेष्टाश्रयस्य भावचेष्टाश्रयत्वात्। तच्च चेष्टास्वरूपमेव। प्रकृतिजन्यबोधे प्रकारो भाव इति वैयाकरणसिद्धान्तात्। चेष्टा च हिताहितपरिहारार्था क्रिया। एवं च शरीरत्वस्य क्रियारूपोपाधिस्वरूपत्वेनानित्यत्वम्। अत्र तु प्रामाण्यं यथार्थानुभवत्वम्। यथार्थानुभवत्वञ्चानुभवनिष्ठं याथार्थ्यम्। अनुभवश्च स्मृतिभिन्नं ज्ञानम्। तस्य याथार्थ्यं च बाधात्यन्ताभावः। बाधितं हि ज्ञानमयथार्थं भवति। तथा चानुभवात्मकज्ञानस्य यो बाधात्यन्ताभावः, स एवात्रोपाधिः। अतस्तादृशबाधात्यन्ताभावरूपमेव प्रामाण्यम्। अत्यन्ताभावश्च नित्य एवेति नोपाधिरूपत्वेऽपि प्रामाण्यस्योत्पत्तिः सम्भवतीति भावः।

एतदुत्तरं च प्रथमद्वितीयपक्षयोरपि बोध्यम्। नापि चतुर्थः, ज्ञानविशेषो ह्यप्रमा। ज्ञानविशेषसामग्र्याञ्च सामान्यसामग्र्यनुप्रविशति शिंशपासामग्र्यामिव वृक्षसामग्री। यथा वस्तुतः शुक्तौ सत्यां तत्र काचादिदोषदूषितेन्द्रियस्य जायमानमिदं रजतमित्याकारकमयथार्थं ज्ञानम्। एतच्च ज्ञानसामान्यसामग्रीजन्यं भवत्येव। ज्ञानस्य सामान्यसामग्री हीन्द्रियप्रकाशादिका। इदं च रजतमित्युक्तायथार्थज्ञाने चास्त्येव। यथा वृक्षस्य सामान्यकारणं मृज्जलादिसहकृतं बीजम्। शिंशपाया बीजविशेषोऽपि बीजमेव। यदि बीजं न भवेत्तर्हि वृक्षविशेषोत्पत्तिर्बीजं विनैवेत्याकस्मिकी स्वीकर्त्तव्या स्यात्। तस्मात्परतःसिद्धत्वेन स्वीकृताप्रामाण्यं विज्ञानसामान्यसामग्रीजन्याश्रितमित्यतिव्याप्तिरापद्येत।

पञ्चमविकल्पं विकल्पयामः। किं दोषाभावसहकृतज्ञानसामग्रीजन्यत्वमेव ज्ञानसामग्रीमात्रजन्यत्वं किं वा दोषाभावासहकृतज्ञानसामग्रीजन्यत्वम्। नाद्यः,

दोषाभावसहकृतज्ञानसामग्रीजन्यत्वमेव परतः प्रामाण्यमिति परतःप्रामाण्यवादिभिरुररीकरणात्। नापि द्वितीयः, यथार्थज्ञाने दोषाभावस्य न कारणत्वमिति यदुच्यते तत्किं ज्ञानं जनयतामिन्द्रियादीनां दोषाभावः केवलं साहाय्यं करोति न तु पार्थक्येन तस्य ज्ञानं प्रति कारणत्वमित्यभिप्रायेणाथवा निःस्वरूपस्याभावस्य न क्वापि कारणत्वमित्यभिप्रायेण। आद्ये दोषाभावसहकृतत्वेन सामग्र्यां सहकृतत्वे सिद्धेऽन्यथासिद्धान्वयव्यतिरेकसिद्धतया दोषाभावस्य कारणताया वज्रलेपायमानत्वात्। द्वितीये त्वभावः कारणमेव न भवतीति चेत्, तदा वक्तव्यमभावस्य कारणत्वमस्ति न वा। यदि नास्ति तदा घटप्रध्वंसाऽनुत्पत्त्या घटस्य अनन्तत्वापात। अथास्ति किमपराद्धं कारणत्वेनेति सेयमुभयस्पशा रज्जुः। तदुदितमुदयनेनापि—

'भावो यथा तथाभावः कारणं कार्यवन्मतम्'। (न्या० कुसु० १।१०) इति।

तथा च प्रयोगः—विमतं प्रामाण्यं ज्ञानहेत्वतिरिक्तहेत्वधीनकार्यत्वे सति तद्विशेषाश्रितत्वादप्रामाण्यवत्। प्रामाण्यं परतो ज्ञायते, अनभ्यासदशायां सांशयिकत्वादप्रामाण्यवत्। तस्मादुत्पत्तौ ज्ञप्तौ च परतः सिद्धत्वे प्रमाणसम्भवात्स्वतःसिद्धं प्रामाण्यमित्येतदुक्तिः कूष्माण्डायत इति चेत्, तदेतदाकाशमुष्टिहननायते। विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वं प्रमायाः स्वतःसिद्धत्वमिति निरुक्तिसम्भवात्। अस्ति चात्रानुमानम्। विमता प्रमाविज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तजन्या न भवति, अप्रमात्वानधिकरणत्वात्, घटादिप्रमावत्। न चौदयनमनुमानं परतःसिद्धत्वसाधकमिति शङ्कनीयम्, प्रमादोषव्यतिरिक्तज्ञानहेत्वतिरिक्तजन्या न भवति ज्ञानत्वादप्रमावदिति प्रतिसाधनग्रहग्रस्तत्वात्। ज्ञानसामग्रीमात्रादेव प्रमोत्पत्तिसम्भवे तदतिरिक्तस्य गुणस्य दोषाभावस्य वा कारणत्वकल्पनायां कल्पनागौरवप्रसङ्गाच्च। ननु दोषस्याप्रमाहेतुत्वेन तदभावस्य प्रमां प्रति हेतुत्वं दुर्निवारमिति चेत्, न, दोषाभावस्याप्रमाप्रतिबन्धकत्वेनान्यथासिद्धत्वात्।

तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः।
अप्रमाणद्वयासत्त्वं तेनोत्सर्गोऽनयोदितः॥ इति।

तथा प्रमाज्ञप्तिरपि ज्ञानज्ञापकसामग्रीत एव जायते। न च संशयानुदयप्रसङ्गो बाधक इति युक्तं वक्तुम्, सत्यपि प्रतिभासपुष्कलकारणे प्रतिबन्धकदोषसमवधानात्तदुपपत्तेः। किञ्च तावकमनुमानं स्वतःप्रामाण्यं न वा। आद्येऽनैकान्तिकता। द्वितीये तस्यापि परतःप्रामाण्यमेव तस्य तस्यापीत्यनवस्था दुरवस्था स्यात्।

यदत्र कुसुमाञ्जलावुदयनेन झटिति प्रचुरप्रवृत्तेः प्रामाण्यनिश्चयाधीनत्वाभावमापादयता प्रण्यगादि। प्रवृत्तिर्हीच्छामपेक्षते। तत्प्राचुर्यं नेच्छाप्राचुर्यम्। इच्छा चेष्टसाधनताज्ञानम्। तच्चेष्टजातीयत्वलिङ्गानुभवम्। सोऽपीन्द्रियार्थसन्निकर्षम्। प्रामाण्यग्रहणं तु न क्वचिदुपयुज्यत इति। तदपि तस्करस्य पुरस्तात्कक्षे सुवर्णमुपेत्य

सर्वाङ्गोद्घाटनमिव प्रतिभाति। यतः समीहितसाधनताज्ञानमेव प्रमाणतयावगम्यमानामिच्छां जनयतीत्यत्रैव स्फुट एव प्रामाण्यग्रहणस्योपयोगः। किञ्च, क्वचिदपि चेन्निर्विचिकित्सा प्रवृत्तिः संशयादुत्पद्येत तर्हि सर्वत्र तथाभावसम्भवात्प्रामाण्यनिश्चयो निरर्थकः स्यात्। तथोक्तम्—अनिश्चितस्य सत्त्वमेव दुर्लभमिति। यदि सत्त्वं सुलभं भवेत्, तदा प्रामाण्यं दत्तजलाञ्जलिकं भवेदित्यलमतिप्रपञ्चेन। यस्मादुक्तम्—

तस्मात्सद्बोधकत्वेन प्राप्ता बुद्धेः प्रमाणता।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥ इति।

तस्माद्धर्मे स्वतःसिद्धप्रमाणाभावे वेदानां 'अग्निष्टोमेन यजेत' इत्यादौ विधिर्निरस्तसमस्तदूषणत्वात् चक्षूरूपवदप्रामाण्यानास्कन्दिता।

यद्यपि सर्वतीर्थकानां विवादव्रातग्रस्तत्वाद् वेदानां स्वतःप्रामाण्यं (प्रामाण्यवादः) स्वतन्त्रव्याख्यानमपेक्षते, तथापि लेखस्यापूर्णताभयभिया ईषद्दिग्दर्शनं कारितम्, यतो हि "अल्पसङ्केतेन बहुबोधकरा बुधा भवन्तो"ति।



# शक्तिस्वरूपविमर्शः

श्रीशिवजी-उपाध्यायः

उपाचार्यः, साहित्यविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी

❀ ❀ ❀

श्रीशक्तिशक्तिमदभिन्नजगत्त्रयान्तः-
सत्त्वानुरूपसगुणत्रयमुल्लसन्ती ।
शब्दार्थसार्थपरमार्थपरा पराख्या
ख्यातिङ्गता जयति शक्तिरनन्तरूपा ॥

अथ केयं शक्तिः ? किञ्च तत्स्वरूपं लक्षणापरपर्यायं लक्ष्यतावच्छेदकम् ? को वा किं प्रकारकस्तद्विमर्शः ? वस्तुतस्तु एकार्थीभावनायामेकार्थतयोम्भितायामेतत् त्रयमपि तदापन्नं तदन्तर्गतं, शक्तिः स्वरूपं विमर्शश्चेति त्रिपुटीकृतं शक्त्यात्मकत्वेनैकवत् प्रतितिष्ठति, त्रितयस्य तदभिन्नत्वेन तद्रूपानतिरिक्तत्वात् । यतश्च सर्वव्यापकतया शक्यमानाकारा शक्यतावच्छेदकावच्छिन्नप्रकारप्रतिभासमाना शक्तिरित्युच्यते, तस्याः शक्तेस्तादृशलक्षणायाः स्वरूपं तत्स्वालक्षण्योपेतं लक्ष्यमाणाकारं लक्षणमेवेति तदभिन्नम्, विमृश्यमानस्तद्विषयको विमर्शश्चापि तदात्मतयाऽभ्युदेतीति त्रयमभिधानमात्रभेदोद्गतं शक्त्यात्मकत्वेनाद्वयमेव परिस्फुरति । किञ्चैष विषयो भूयसा लोकेऽपि शास्त्रेऽपि च शाक्ताद्वैतवाद इत्याख्यसिद्धान्तसन्दर्भितस्तद्विद्भिर्व्यवस्थितो विशदीकृतश्च प्रकाशते, तद्रीत्याऽत्रापि तदाख्यानं संक्षिप्य यथा प्रतिभानं निरूप्यते । स्वच्छन्दच्छन्दोमार्गसमाश्रयणेन कारिकावृत्तिविनिबद्धेऽस्मिन् बन्धे (लगुग्रन्थे) सति स्वाच्छन्द्ये सुधीजना निग्रहीतुं, तत्त्वोन्मीलने चानुग्रहीतुं मामर्हन्ति ।

अपि च यद्यदौचित्यनिचितं तत्त्वाञ्चितं युक्तियुक्तं सिद्धान्तसारनिष्ठं तत्र तत्र दृष्टिदानं सुधियामपेक्ष्यते, यच्च तद्विपरीतमन्यथोक्तं स्यात् तन्मे बालिश्यमित्यभिमत्य परिहातव्यमित्यनुरुणध्मीत्याशयेनोच्यते—

का शक्तिस्तत्स्वरूपं किं विमर्शश्चेति कीदृशः ।
एकार्थीभावनापन्नं त्रयमप्येतदेकवत् ॥ १ ॥
शक्यमानाकृतिः शक्तिः स्वरूपं तत्स्वलक्षणम् ।
विमर्शोऽपि तदात्मेति त्रयं शक्त्यात्मकाद्वयम् ॥ २ ॥
स एष विषयो भूयो लोकशास्त्रव्यवस्थितः ।
स्वाल्पबुद्ध्या तदाख्यानं यथाभानं विधीयते ॥ ३ ॥
काव्यसन्दर्भनिर्व्यूढं छन्दोमार्गं समाश्रये ।
स्वाच्छन्द्ये निग्रहे तत्त्वेऽनुग्रहे सुधियः क्षमाः ॥ ४ ॥
यदौचित्यगतं तत्र दृष्टिर्देया यथारुचि ।
यच्च तद्रहितं तन्मे बालिश्यमिति मन्यताम् ॥ ५ ॥

किञ्च शक्तिविषयकः प्रश्नोऽपि तदुपेतत्वात्तदभिन्न एव पर्यवस्यति तत्र तस्या विजृम्भणादिति तादात्म्यापन्नं तदभिन्नमेव निखिलं भुवनत्रयमाकलय्य तत्स्वरूप-विषयकः प्रश्नो जिज्ञास्यश्चेति कथमुपपद्यते स्वाभाव्यादित्यवसेयम् । लोके हि स्वविषयनिष्ठाया अपि जिज्ञासाया दर्शनात् तत्र स्वाभिन्नत्वेऽपि 'कोऽहं' 'कुतोऽहं'मित्या-कारकप्रश्नः स्वभावसम्भूतो यथा प्रवर्तते तथा तद्विषयकोऽपि सोऽवबोध्य इत्युच्यते—

शक्तिमच्छक्तिशक्येति त्रितयप्रतिबिम्बितम् ।
आ ब्रह्माण्डप्रपञ्चोद्यद्भुवनत्रयमुद्गतम् ॥ ६ ॥
शक्तिमानीश्वरः शक्तिः परा शक्यं जगत्त्रयम् ।
आश्रयाश्रयिभावेन तयोस्तत्रास्ति हेतुता ॥ ७ ॥

**शक्तिमदिति ।** शक्तिमच्छक्त्याश्रयस्तदाधारोऽनादिपुरुषः परमात्मसंज्ञकः, तस्यैव सहावस्थानात्तदाश्रयत्वेन सङ्गतत्वादिति भावः । शक्तिः शक्यमानस्वरूपाऽना-द्यनन्तकालावच्छिन्ना सृष्टिमूला परात्मपुरुषाश्रिता पर्यवस्थिता तामृते तस्याप्रवृत्तेः, 'एकोऽहं बहु स्याम' इतीच्छायास्तद्रूपत्वादिति भावः । शक्यं कार्यजातं प्रपञ्चात्मकं गत्यनुस्यूतं जगदिति बोध्यम् । इतीत्थं त्रितयं शक्तिमान् शक्तिः शक्यमित्यात्मक-मन्योन्यसम्पृक्तं पर्यवतिष्ठते, एतत्त्रितयेन प्रतिबिम्बितमाम्नातमुन्मीलितं दृश्यमाना-कारं वा आ समन्तात्सर्वतोभावेन ब्रह्माण्डं ब्रह्मबीजविलसितं तत्कृतः प्रपञ्चो विपुलविस्तरस्तेनोद्यदुदीयमानमाभासमानं भुवनत्रयं सृष्टिलक्षणं सततसृज्यमाना-

कारमुद्गतमुद्भूतं सर्गनिसर्गनिष्पन्नमवस्थितमिति बोध्यम्। तत्र शक्तिशक्तिमतोरभेदाच्छक्यस्य तत्कार्यत्वाच्चान्योन्याश्रयत्वं सुतरामुपपद्यत इत्यवसेयम्।

तत्र शक्तिमांस्तदाश्रयतयेश्वरः परात्मपुरुषो जगत्कर्ता तन्नियन्तेत्युच्यते, शक्तिश्च पराऽनादिभूताऽनन्ता त्रिकालाबाधा सर्वोत्कर्षेण राजमाना सर्वमूलेत्याख्यायते, शक्यं कार्यरूपं जगत्त्रयं प्रपञ्चपरिच्छिन्नं गत्यात्मना गोचरीक्रियमाणमुद्भासते। तत्र जगत्त्रये कार्ये तयोः शक्तिशक्तिमतोः परापरमात्मनोराश्रयाश्रयिभावेनाधाराधेयसम्बन्धेन हेतुता कारणतोपयुज्यते। तत्राश्रयताऽऽश्रयिता च तदुभयनित्यस्वरूपत्वान्नित्येति बोध्यम्।

तत्र तद्धेतुकत्वेन विश्वमुद्भवतीति प्रकारान्तरेणोच्यते—

कर्तृकर्मक्रियारूपात्प्रविभक्तप्रभेदतः।
तद्धेतुकमिदं विश्वं भासतेऽनादिकालतः॥ ८॥
क्रियावत्त्वाच्च कर्तृत्वं तदर्थत्वात्क्रियोदिता।
तद्द्वयाभिन्नहेतुत्वावच्छिन्नत्वेन कर्मता॥ ९॥

कर्तृकर्मेति। कर्ता स्वतन्त्रव्यापाराश्रय ईश्वराख्यः परात्मपुरुष आख्यातः, कर्म कर्मत्वावच्छिन्नं कृत्यपरपर्यायम्, क्रिया व्यापृतिः क्रियमाणाकारा, तद्रूपात् तत्त्रितयात्मकात् प्रविभक्तप्रभेदतः, सप्रकर्षं पृथग्भासमानविशेषतः, तत्तद्वैशिष्ट्येन प्रतीयमानाकृतेश्चेत्यर्थः। तद्धेतुकं कर्तृकर्मक्रियाकारणोद्भूतमिदं विश्वं दृश्यमानप्रपञ्चजातमनादिकालतो निरवच्छिन्नावधेः सदातनसमयाद् भासते भासमानस्वरूपमवतिष्ठते विश्वात्मिकायाः सृष्टेरनाद्यनन्तकालोद्भासमानत्वादिति भावः।

तत्र क्रियावत्त्वात् स्वत्वावच्छिन्नव्यापाराश्रयत्वात्तन्निष्पादकत्वाच्च कर्तृत्वं धर्मितयोपपद्यते, तदर्थत्वात् कर्त्रर्थत्वात्तादर्थ्यकल्पितत्वाच्च क्रिया व्यापारलक्षणोदिता प्रतिपादिता परिकल्पितेति भावः। अपि च तद्द्वयाभिन्नहेतुत्वावच्छिन्नत्वेन कर्तृक्रियोभयानतिरिक्तकारणत्वावच्छिन्नधर्मत्वेन तदुभयात्मकारणताजन्यत्वेन तदुभयकार्यत्वं तस्येति बोध्यम्। तादृशलक्षणा कर्मता निष्पन्नकृत्याकृतिरित्युच्यते। उक्तलक्षणकर्तृकर्मक्रियात्मकस्य विश्वस्य लक्ष्यमाणत्वादित्याशयो बोध्यः।

तदेतत्त्रयं परमार्थतः किं रूपमिति पुनराख्यातुमुपक्रमते —

कर्तैष पुरुषः प्रोक्तो जीवात्मा परमात्मदृक्।
क्रियेच्छा तद्गता शक्तिर्जगत्कर्म तदुम्भितम्॥१०॥
तत्प्राधान्येन तद्रूपप्रतीतिः परिलक्ष्यते।
स्थूलतोऽन्योन्यभिन्नत्वं मूलतस्त्वेकरूपता॥११॥

कर्तेति । तत्रैष निर्दिश्यमानः कर्ता धर्मी पुरुषः प्रमान् प्रोक्त आख्यातः, स च जीवात्मा ईश्वरानुगृहीतस्तदङ्गीकृतः सन् परमात्मदृक् परमेश्वरदर्शनस्तदैश्वर्यलक्षणस्तदभिन्नः प्रोक्तः प्रतिपादितः, जीवात्मपरमात्मनोस्तादात्म्यान्नैष जीवात्मा परमात्मानोऽतिरिच्यत इति भावः ।

किञ्च, तत्र या क्रिया सा तद्गता परमात्मदृग् जीवात्मनिष्ठेच्छा 'एकोऽहं बहु स्याम' इत्येतल्लक्षणा शक्तिः स्वयम्भूता, तदुम्भितं तदुभयशक्तिपुरुषकल्पितं जगज्जडचेतनात्मकं कर्म कार्यमित्युच्यते । तस्य कर्तृक्रियाकर्मात्मकस्य जगतस्तत्प्राधान्येन क्वचित्कर्तृत्वप्राधान्येन क्वचित्क्रियात्वप्राधान्येन क्वचिच्च कार्यत्वप्राधान्येन व्यपदेशात्तद्रूपप्रतीतिः पृथक् पृथक् कर्तृत्वादिप्रत्ययः परिलक्ष्यते प्रतिभासते, स्वस्वप्राधान्येन स्वत्वप्रतीतेर्जायमानत्वादित्यभिप्रायः । परञ्चैतत्त्रितयस्य कर्त्रादेः स्थूलत आपाततः स्थूलदृशाऽन्योन्यं परस्परमेकतोऽन्यस्य भिन्नत्वं भेदः परिलक्ष्यते स्वप्राधान्येन लक्ष्यमाणत्वात् स्वत्वेनाख्यातत्वाच्च; किन्तु मूलतस्तु परामार्थतो वस्तुगत्यैकरूपता भेदाभावादभिन्नाकारता भवतीति शेषः । शक्तिशक्तिमच्छक्यत्रितयस्य तादात्म्यापन्नत्वादिति भावः ।

वस्तुतस्त्वीश्वरस्यैव कर्तृत्वं तद्रूपायाः परात्मशक्तेश्च क्रियात्वमित्युच्यते —

ऐश्वर्योद्दीपनाल्लोककर्तृत्वादीश्वरो मतः ।
तद्गतत्वेन तद्रूपा क्रियाशक्तिरितीश्वरी ॥ १२ ॥
भेदाभेदतयोद्भूतं पञ्चभूतात्मकं जगत् ।
तदैश्वर्यमयं भाति सूर्यदीप्तिप्रकाशवत् ॥ १३ ॥

ऐश्वर्येति । ऐश्वर्यमीश्वरभावः सार्वत्रिकमुद्भासमानतदीयप्रकटप्रभावश्चेति बोध्यम् । तेनोद्दीपनात्प्रकाशमानाद् विलसनाद् वा, किञ्च, लोककर्तृत्वाज्जगज्जनकत्वाद्धेतोरीश्वरः परमात्मा सर्वात्मको मतोऽभिसम्मतः सुधियामित्यनुमानप्रमाणवेद्यत्वमीश्वरस्येत्यवबोध्यम् । अपि च तद्गतत्वेनेश्वरान्तः सन्निहितत्वेन नित्यविद्यमानत्वेन च तद्रूपा तदात्मिका ईश्वराभिन्ना क्रियाशक्तिस्तदिच्छालक्षणा व्यापृतिरीश्वरी पराख्या मायेति ख्यातिमधिगतेति भावः ।

परञ्च भेदाभेदतया प्रतीयमानभेदादभेदाद्वा भेदाभेदात्मतादात्म्याद् वोद्भूतमुद्गतं प्रतिभासमानं पञ्चभूतात्मकं पृथिव्यादिपाञ्चभौतिकमिदं जगद् विश्वं तदैश्वर्यमयमीश्वरशक्तिसद्भावप्रभावस्वरूपं तद्विलासविलसितं सत् सूर्यदीप्तिप्रकाशवद् भाति, प्रतीतिपथमवतरतीति । यथा सूर्यो दीप्तिः प्रकाशश्च पृथक्त्वेन सम्भासमानो वस्तुतः सूर्याद् भिन्नस्थितिं नाभ्युपैति, तथैव तत्त्रितयमित्यवबोध्यम् ।

सत्यपि तादृशभेदेऽद्वैतादिप्रतिभानं नापैतीति प्रतिपाद्यते—

तत्र वस्तुकृतो भेदो लौकिकः प्रातिभासिकः ।
तत्तत्प्राधान्यमुद्दिश्य व्यवहारोपकल्पितः ॥ १४ ॥

अथाद्वैतं त्रयाभेदाद् द्वैतं प्राधान्यतो द्वयोः ।
त्रैतं वा तत्त्रये तत्त्वे विशेषाच्च विशिष्टकृत् ॥ १५ ॥

तत्रेति । तत्र प्रातिभासिकप्रपञ्चात्मके विश्वे वस्तुकृतस्तत्तद्घटादिस्थूलवस्तुनिरूपितो भेदो यः प्रतीयते, स हि लौकिको लोकोद्भूतः प्रातिभासिकः प्रतिभासमानोऽतात्त्विक एवेति भावः । अथ च तत्तत्प्राधान्यमुद्दिश्य प्रतिवस्तुनिष्ठवैशिष्ट्यमालक्ष्य जात्यादिकृतं कर्तृत्वादिविहितं वा तद्वैशिष्ट्यमाश्रित्येति भावः । अपि च व्यवहारोपकल्पितस्तत्तद्व्यवहृतिप्रतिभासितः स भेदः पर्यवस्थितो भवति, न च स पारमार्थिकस्तत्त्वेन तस्यानभ्युपगमादित्याशयः ।

अथानन्तरं सत्यपि तादृशवस्तुकृते स्थूलभेदे त्रयाभेदाच्छक्तिशक्तिमच्छक्यात्मकभेदापगमाज्जात्यादिवैशिष्ट्यतिरोधानाच्चाद्वैतं द्वैतापेतब्रह्माद्वयदर्शनं भवति । द्वयोः शक्तिशक्तिमतोः प्राधान्यतः प्रधानतत्त्वाद्धेतोर्द्वैतं भिन्नमताङ्गीकृतं तद्दर्शनमुद्भवति । एवञ्च तत्त्रये कर्तृकर्मक्रियात्मके त्रितयेऽपि तत्त्वे प्रधाने सति त्रैतं तद्वादिदर्शनं सम्भवति । पुनश्च विशेषात्तत्तद्वस्तुनिष्ठविशेषोद्भूतप्राधान्याङ्गीकाराच्च विशिष्टकृद् विशिष्टाद्वैतदर्शनं प्रभवतीति तत्तन्मतभेदेन नानाविधानि दर्शनानि सन्दृब्धानि तिष्ठन्तीति तात्पर्यमवसेयम् ।

अयं भावः —'सर्वं खल्विदं ब्रह्म' इति सिद्धान्तादद्वैतं तदध्यारोपाच्च जगतो मिथ्यात्वं, जीवब्रह्मणोर्द्वयोः सत्त्वे द्वैतं, सजगत्तयोस्तत्त्वे त्रैतं जीवविशिष्टब्रह्मणस्तथात्वे च विशिष्टाद्वैतमित्यभिप्रायो बोध्यः। विशेषस्तु तत्तद्दर्शनसिद्धान्तग्रन्थादनुसन्धेयः ।

सत्स्वपि नानादर्शनेषु तत्रान्तरमैक्यमिति दर्शयितुं पुनरुच्यते —

कर्तृत्वानुमितं चान्यत्कर्मत्वविधिनेतरत् ।
क्रियामूलकहेतुत्वात्संख्यातमपरं परम् ॥ १६ ॥
दृष्टिभेदेन सृष्टानि दर्शनानि परस्परम् ।
द्रष्टृदृश्यापृथक्त्वेन दर्शयन्त्यैक्यमान्तरम् ॥ १७ ॥

कर्तृत्वेति । कर्तृत्वेन तत्सत्त्वेन चान्यत्कार्यजातमनुमितमनुमानप्रमाणविषयीकृतं भवतीति शेषः। तत्प्रकारश्च—दृश्यमानमिदं कार्यजातं जगदात्मकं प्रातिभासिकं सत्,

कर्तृजन्यत्वात्, यद्यत्कार्यं तत्तत्कर्तृजन्यं यथा घटादिकमित्यनुमानप्रकारो बोध्यः। एवञ्च कर्मत्वविधिना कार्यत्वहेतुना व्यतिरेकेणेतरत्कर्तृत्वमनुमितं भवतीति तत्प्रकारोऽपि तथोक्तो बोध्यः। किञ्च, क्रियामूलकहेतुत्वात्तादृशक्रियात्मकविश्वप्रपञ्चप्रधानकारणत्वादपरं तद्व्यापकं पृथग्भूतं परं परमात्मतत्त्वमनुमितं भवति। श्रुतिप्रमाणसिद्धमपि परमात्मतत्त्वमनुमानप्रमाणेनाप्याकलयितुं शक्यमित्याशयेनोक्तमित्यवसेयम्।

यच्चाद्वैतादीनि नानाविधानि दर्शनानि परस्परमन्योन्यसिद्धान्तानुरोधेन दृष्टिभेदेन तत्तद्दर्शननिष्ठमतभेदप्रदर्शनेन सृष्टानि सन्दृब्धानि सन्तीति शेषः। परन्तु तत्र द्रष्टृदृश्यापृथक्त्वेन द्रष्टुर्दृश्यस्य चान्योन्याश्रयतया भेदाभावेन निखिलान्यपि दर्शनान्यान्तरं स्वान्तर्निष्ठमैक्यं सामञ्जस्यं समन्वयेन दर्शयन्ति, दर्शनानामान्तरिकसाम्यत्वमाविष्कुर्वन्तीति।

अयं भावः—सत्स्वपि सिद्धान्तभेदभिन्नेषु दर्शनेष्वद्वैताद्यनेकाभिधानेषु दृश्यमानकरणत्वसामान्यात्परस्परसापेक्षत्वादन्योन्यपूरकत्वाच्चान्तर्गतसमन्वितैकत्वं तानि समत्वमूलकमभिव्यञ्जयन्तीति निगूढाभिप्रायो वेद्यः।

सम्प्रति शाक्ततन्त्रागमादिदृष्ट्याऽपि भेदापहारेण शक्तितत्त्वस्योपास्यत्वं निरूप्यते—

उपास्योपासकोपास्तिप्रभेदात्साधनाध्वनाम्।
विधानान्युपदिष्टानि शाक्ततन्त्रागमादिषु ॥ १८ ॥

तत्रापि त्रिपुटोभेदप्रलये पारमार्थिको।
पराशक्तिरुपास्यैका शाक्तमार्गानुगामिनाम् ॥ १९ ॥

**उपास्येति**। उपास्योपासकोपास्तिप्रभेदादुपास्यत्वेनाराध्यत्वेनोपासकत्वेनाराधकत्वेनोपास्तित्वेनाराधनत्वेन च प्रभेदात्प्रविभक्तप्रकारात्साधनाध्वनामुपासनाश्रितसिद्धान्तपथानां विधानानि विध्यर्थकानि शाक्ततन्त्रागमादिषु शक्तिगतसिद्धान्तदर्शनग्रन्थेषूपदिष्टानि गुरुसम्प्रदायपरम्परात उपदेशविधिनोपात्तानि सन्तीति शेषः। तत्राप्युपास्यत्वप्राधान्यजन्य उपासकत्ववैशिष्ट्यगम्य उपास्तित्वप्राशस्त्यप्रत्ययश्च प्रातिभासिको भेदः पर्यवसीयते, न तु पारमार्थिक इत्याशयः।

अतश्च तत्रापि शाक्ततन्त्रेषु तदागमेषु चापि, अपिशब्दः पूर्वोक्तदर्शनपक्षान्तरबोधकः। त्रिपुटोभेदप्रलये उपास्यत्वादिलक्षणत्रिकविशेषप्रणाशे पारमार्थिकी परात्मिका तुरीयाऽद्वयाकारा पराशक्तिरेवैका सर्वव्यापिका शाक्तमार्गानुगामिनां तद्दर्शनाध्वनिध्यायिनामुपास्या परमाराध्या प्रतितिष्ठति, तस्या एव सर्वत्रानुस्यूतत्वादिति भावः।

कर्तृत्वप्राधान्येन परमात्मनः क्रियात्वप्राधान्येन परात्मिकायाः शक्तेश्च दर्शनमुन्नीतं भवतीति शाक्तदर्शनागमादेरुपदेशविधिस्तत्पृथक् प्रतिनिर्दिष्ट इत्येष्टव्यम्।

अथ च सैव चैका शक्तिः पराख्या वामदक्षिणाध्वाराध्यत्वेन परिकल्पितेत्युच्यते—

**प्रकाशामर्शसम्भासा सा शिवाश्रयताङ्गता।**
**शक्त्यभिन्नं शिवाद्वैतं शैवानामभिसम्मतम् ॥ २० ॥**
**क्वचिद् वामाध्वनाऽऽराध्या तदाचारोपरूषिता।**
**दक्षिणाध्वनिषेव्या वा शक्तिरेका परात्मिका ॥ २१ ॥**

प्रकाशेति। प्रकाशामर्शसम्भासा प्रकाशः प्रकाशमानाकृतिः शक्त्याश्रितस्तेजोविशेषः, तदात्मलक्षण आमर्श आ समन्तात्परामृश्यमानो विमर्शापरपर्यायस्तदात्मा तयोः सम्भासा ज्योतिषा सा शक्तिः पराख्या शिवाश्रयताङ्गता परमेश्वरमाश्रित्योद्भासमाना वर्तत इति शेषः। ततश्च शक्त्यभिन्नं तादृशलक्षणया शक्त्या तादात्म्येन भेदशून्यं शैवाद्वैतं तदाख्याद्वयदर्शनं शैवानां शिवानुगाम्युपासकानामभिसम्मतमभितो मतानुमतं सिद्धान्तितमस्तीति शेषः। शक्तिशक्तिमतोः सामरस्येनाभेदाच्छिवाद्वैतोपपत्तिरिति भावः।

सेयं शक्तिः क्वचिदेकदेशेन वामाध्वना वामपथेन तदाचारोपरूषिता वाममार्गोपदिष्टविधिपर्यवसिता तदुपासकैराराध्या विविधोपचारैः सम्पूज्या भवतीति शेषः। अथवा क्वचिच्च दक्षिणाध्वनिषेव्या दक्षिणमार्गोपदिष्टविधिना पर्युपास्या परात्मिका परमात्मप्रकाशा चैकाऽद्वितीया शक्तिरुभयत्र तुरीयैव नेतरेति तात्पर्यमवसेयम्। वामदक्षिणमार्गभेदस्तु असदशिवस्य सत्त्वापादनात् सच्छिवस्य तत्त्वाकलनाच्च पर्यवसेयः।

पुनः पराशक्तेः प्रकाशनं प्रकारान्तरेणापि निरूप्यते —

**यद्रूपा यद्विधानोक्ता यन्मार्गाचारगोचरा।**
**यदुपास्तिपराराध्या तादृशी शक्तिरिष्यते ॥ २२ ॥**
**भाव्यभावकभावान्तर्भावनाद्भावनादसौ ।**
**तत्तदाकारसम्भूता पराशक्तिः प्रकाशते ॥ २३ ॥**

यद्रूपेति। यद्रूपा यद्यदुपास्यत्वप्रकाशत्वादिरूपमधिकृत्य विद्यमाना, यद्विधानोक्ता येन केनचिद् वामदक्षिणादिमार्गेण विधिनोक्ताऽऽख्याता यन्मार्गाचारगोचरा येन केनचिद् वा मार्गोपदिष्टाराधनाविषयीकृता यदुपास्तिपरा यया कयाचिद् वोपासनया तत्परत्वेनाराध्या तत्प्रकारेण सम्पूज्या सेव्यमाना वा तादृश्युक्तलक्षणा शक्तिरिष्यते

सर्वैस्तैरिष्यमाणा सैवाभातीति भावः। एकैवासौ पराशक्तिराराध्यमाना नानारूप-विधानाचारोपासनोद्भासमाना तिष्ठतीत्याशयो बोध्यः।

इत्थञ्च भाव्यभावकभावेन साध्यसाधकसम्बन्धेन तदन्तर्भावनया तादृश-सम्बन्धनिबद्धसाधनादिविधिनोद्भासमानाद् गोचरीक्रियमाणस्वरूपादसौ शक्तिः पराख्या तत्तदाकारसम्भूता तादृशोक्तनानाविधस्वरूपसम्भवदाभासा सा प्रकाशते विद्योतते। भाव्यभावकभावनोद्भूतवैविध्येनाप्याराध्यत्वेन भाव्यत्वादिरूपेण वा तस्या एव प्रकाशः सर्वत्रेत्यभिप्रायः।

अपि च नामरूपक्रियादिभिर्नैकोपाधिभिस्तस्या आनन्त्यं प्रदर्श्य कुण्डलिनीशक्ति-स्वरूपमुच्यते —

नामरूपक्रियाजात्याद्यनन्तोपाधिसङ्गता ।
शक्तिरेकाऽपि साऽऽनन्त्यं समाश्रित्याधितिष्ठति ॥ २४ ॥
सर्पदुच्चैः श्वसत्सर्पकुण्डलाकारकुञ्चिता ।
भाति कुण्डलिनी शक्तिरामूलान्नाभिहृन्मुखम् ॥ २५ ॥

नामेति। नामाभिधानमनेकविधं तत्र तत्रोक्तम्, रूपं लक्ष्यमाणाकृतिर्विविधा, क्रिया कृतिः कर्मलक्षणा जातिर्जन्म जन्यमानोपलक्षितं तदेभिरनन्तोपाधिभिर्गुणैर्धर्मैश्च तत्तद्धेतूद्गतैः सङ्गता सङ्गतिमाप्ता सङ्गम्यमानस्वरूपा सैकाऽपि परात्मिकाऽद्वैतभाना शक्तिरानन्त्यमनन्तभावं समाश्रित्योपगत्याधितिष्ठत्यधिष्ठानमासाद्य प्रद्योतते, नाम-जात्याद्यनन्तोपाधिसम्बन्धायास्तस्याः शक्तेरानन्त्यमुद्भवतीति भावः।

किञ्च, शरीरेऽपि प्रतिव्यक्त्यभिव्यज्यमाना सर्पन्ती सर्पणशीलोच्चैरूर्ध्वंमुखेन श्वसन्त्युच्छ्वासमातन्वती सर्पवत्फणिनिभा कुण्डलाकारेण मण्डलीकृताकृतिः कुञ्चि-ताऽऽकुञ्चनीकृताऽऽमूलान्नाभिमूलस्थानमभिव्याप्य कुण्डलिनीत्येतदभिधाना शक्तिः सुषुप्तिजाग्रदवस्थाना भाति सर्वासु तत्तदवस्थासु प्रसरद्भानमुल्लसतीति भावः।

अयं भावः —सकलशक्तिप्रकाशनक्षमतया परात्मतादात्म्यापादनहेतुभूता सतत-साधनोन्मीलनपरोक्तलक्षणा कुण्डलिनीशक्तिर्योगिनां जाग्रदवस्थयोल्लसन्ती प्रकट-प्रभावा प्रविभातीति साधनाध्वानुयायिनां साधकानां महात्मनामनुभवसिद्धसिद्धान्तः।

सेयमन्तर्निष्ठा शक्तिस्तादात्म्यापत्तये साधकैरनिशमर्थ्यत इत्युच्यते —

स्वपज्जाग्रदवस्थान्तःसुप्तोत्थानस्थितिश्रिता ।
पराशक्तिरिति ख्याता योगिनां यौगिकाध्वनि ॥ २६ ॥
धारणाध्यानसम्बद्धसमाधिप्रणिधानतः ।
तादात्म्यापत्तिमाधातुं साधकैः शक्तिरर्थ्यते ॥ २७ ॥

स्वपदिति । स्वपज्जाग्रदवस्थाऽस्फुरत्स्फुरदाकाराऽनुन्मीलितोन्मीलितस्वभावेनाख्याता, तदन्तस्तन्मध्यगता सुप्तोत्थानस्थितिश्रिता स्वपनजागरणदशामाश्रित्य विद्यमाना, साधनाविमुखानां सुप्तिमनुश्रिता तदुन्मुखानां समाहितचेतसां साधकानां जागर्तिमधिगतेति भावः। तादृशोयं पूर्वोक्तलक्षणा कुण्डलिनीत्याख्या पराशक्तिरित्येषा परमात्मनः शक्त्याकारेण प्रतिव्यक्त्यन्तरभिव्यक्ता योगिनां साधकानां युक्तयुञ्जानोभयविधानां महात्मनां यौगिकाध्वन्याख्याता योगानुबन्धिमार्गख्यातिङ्गताऽस्तीति शेषः। तस्या जागर्त्यैव तेषां परात्मतादात्म्यानुभवस्य सम्प्रतिपन्नत्वादिति भावः।

किञ्च, तत्र यौगिकाध्वनि धारणाध्यानाभ्यां धार्यमाणधीयमानलक्षणाभ्यां सततमनुष्ठीयमानाभ्यां समाधिभेदाभ्यां सम्बद्धस्य विधीयमानस्य सविधिनिबध्यमानस्य वा समाधेः परात्मसाक्षात्कृतिरूपसाधनाविशेषस्य प्रणिधानतः परिशीलनान्निरन्तराभ्यासाद् वा तादात्म्यापत्तिं परमात्मनाऽभेदेन सम्बन्धाश्रितिमाधातुमधिगन्तुं साधकैर्योगिभिः शक्तिरर्थ्यते कुण्डलिनीशक्तिरुन्नीयते तदुन्मीलनाय प्रयत्यते प्रतिक्षणमित्याशयः। तादृशस्वान्तर्निष्ठशक्त्युद्भावनादेव परात्मशक्तेः प्रकाशनादित्यवबोध्यम्।

अथ च लोकेऽपि नानाकारतयोद्भासमाना शक्तिरुज्जृम्भत इत्युच्यते—

लोकेऽपि लौकिकी शक्तिर्नानाकारा नराश्रया।
नारीत्यभिधयोद्भूता लोकयात्रानुवर्तिनी ॥ २८ ॥
पुम्भावात् स्त्रीस्वभावाद् वा तत्त्वाभावादपीङ्गिता।
शक्तिरुज्जृम्भते सैका स्थूलसूक्ष्मार्थलक्षणा ॥ २९ ॥

लोक इति। लोकेऽपि लोक्यमानलक्षणे भुवने लौकिकी तदनुबन्धिनी नानाकारा विविधरूपाऽनेकजातिदेशाद्युद्गतस्वभावा नराश्रया तदाश्रयतासम्बन्धेनानुगता लोकयात्रानुवर्तिनी सकललोकव्यवहारानुवृत्तिमूला शक्तिरित्याम्नाता नारीत्यभिधया स्त्रीत्यभिधानोपस्कृतोद्भूताऽऽविष्कृताऽस्तीति शेषः।

अयं भावः—यथा लोकोत्तरा परमात्मपरा पराख्या शक्तिस्तत्तद्दर्शनभेदभिन्नाऽऽख्याता, तथा तदभिव्यञ्जनेन स्थूलाकारेण लोकस्थित्यनुबन्धनिबन्धना नानाविधा नराश्रयाश्रयिभावेन तदनुगता नारीत्यभिधाना शक्तिरेव प्रकटप्राण्याकृतिस्तत्प्रतिकृतिरेव स्थूलप्रकृतिमापन्नेति बोध्यम्।

अपि च सेयं नारीत्यभिधाना शक्तिः पुम्भावात्तद्भावानुबन्धात् स्त्रीस्वभावात् स्त्रीत्वस्वभावयोगाद् वेति तदुभयभावविकल्पार्थकम्। तत्त्वाभावात् पूर्वोक्तभावद्वयनैरपेक्ष्येणापि तद् बन्ध्यत्वेनेत्यर्थः। पुंस्त्रीनरलक्षणेनेङ्गितोद्गतव्यञ्जना सैका मूलतः पराख्या स्थूलसूक्ष्मार्थलक्षणा प्रकटाप्रकटपदार्थनिष्ठाकारा शक्तिरुज्जृम्भते परिस्फुरति।

एकैव शक्तिः परमात्मिका तत्र तत्र स्थावरजङ्गमात्मकजगत्यभिव्यज्यमानाऽनन्ताकृतिः स्वस्वभावपरिकल्पिता प्राकट्यमभ्युपगच्छतीत्यभिप्रायो बोध्यः।

सम्प्रति शब्दात्मिका शक्तिः शब्दात्मजगदशेषप्रत्ययमूलकत्वेनोदितेत्युपस्थाप्यते—

भूयोभेदोद्भवा शास्त्रलोकलोकान्तराश्रया।
स्तूयते स्तुतिवाक्यैः सा शक्तिः शब्दात्मिका परा ॥ ३० ॥
वस्तुतो नोक्तभेदोऽयं परमार्थप्रतिष्ठितः।
भेदाभेदात्मसम्बन्धाच्छाब्दिकं जगदुम्भितम् ॥ ३१ ॥

भूय इति। भूयोभेदोद्भवा तत्तदसंख्यवस्तुगतभेदसम्बन्धेनोन्मीलिता शास्त्राणि श्रौतानि तद्भिन्नानि वा दर्शनागमादीनि नानाविषयाणि लोकास्तत्र तत्र नैकविधव्यवहारप्रधाना देशा लोकान्तराणि मर्त्यलोकेतराणि भूर्भुवःस्वरादीत्याख्यानि भुवनानि, तदाश्रया स्वप्राधान्येन तदाश्रयतया विद्यमाना शब्दात्मिका शब्दलक्षणा ध्वन्याकारा स्फोटाख्येत्यर्थः, परा तुरीया परमात्मानुभावा सोक्तव्यापिका सुख्याता शक्तिः स्तुतिवाक्यैः सर्वत्र स्तूयमानपदसन्दर्भैस्तन्महिमव्यञ्जकैः स्तूयते स्तुतिविषयीक्रियते निरतिशयेन कीर्त्यते सम्भूय सर्वैर्लोकैरिति शेषः। असंख्यस्तुतिवाक्यैर्देवादिभिर्मनुजादिभिश्च तस्याः शब्दात्मिकायाः शक्तेरेव स्तूयमानत्वादिति भावः।

वस्तुतस्तु परमार्थगत्या तत्त्वान्तः परिशीलनेन नायं नैकभेदात्मको निर्दिश्यमानो भूयोलक्षणलक्ष्यमाणो बहुविधोक्तभेदः परमार्थप्रतिष्ठितः पारमार्थिकदृष्ट्या परमतत्त्वाकलने प्रतिष्ठामाप्नोति, कल्पितानां तेषां परिफलनौचित्यात् परमार्थतस्तद्धानादिति भावः। तत्किमर्थं तदावश्यकत्वमित्याकाङ्क्षायामाह - भेदाभेदात्मसम्बन्धात्तादात्म्यसंसर्गाच्छाब्दिकं शब्दानुविद्धं शब्दमयं जगज्जडाजडात्मकमुम्भितं कल्पितं भवतीति शेषः। सत्यपि परमार्थतोऽभेदे जगदुम्भने क्वचिदुद्गतभेदेन क्वचिदपगतभेदेन तादात्म्यलक्षणेन तस्यावश्यकत्वादिति भावो बोध्यः।

इदानीं ब्रह्माद्वैतमेव शाब्दाद्वैततया रसाद्वैततया च प्रकाशमानं प्रतिभातीति तदभेदः प्रदर्श्यते —

ब्रह्माद्वैताविसंवादिशाब्दाद्वैतोदितं मतम्।
रसाद्वैतोपकार्येतत्सिद्धान्तस्यापने भिदा ॥ ३२ ॥

ब्रह्माभिन्नं जगत्पूर्वं शब्दाभिन्नं परे च तत्।
रसाभिन्नं च तत्काव्यात्मकं केऽपि प्रचक्षिरे ॥ ३३ ॥

ब्रह्मेति। ब्रह्म सदसद्भिन्नं वेदान्तप्रतिपाद्यमनिर्वचनीयस्वरूपं परमात्मतत्त्वम्,

तदद्वैतं तदभिन्नदर्शनं 'सर्वं खल्विदं ब्रह्म', 'नेह नानास्ति किञ्चन' इति श्रुतिवाक्यैर्निर्दिश्यमानम्, ततोऽविसंवादि तत्त्वतो न पृथग्भूतं साम्येन संवाद्यमानस्वरूपं शाब्दाद्वैतोदितं शाब्दब्रह्माद्वयोद्गतं मतं प्रकारमात्रभेदप्रकल्पितं तद्दर्शनमस्तीति शेषः। इत्थञ्चैतद् द्वयं ब्रह्माद्वैतं तत्संवादिशाब्दाद्वैतमित्युभयमित्यर्थः। रसाद्वैतोपकारि 'रसो वै सः', 'रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इति श्रुतिवाक्योक्ते रसाद्वैतं परिकल्पयितुं शक्यमित्यतः काव्यदर्शनाध्वनोन्नीतो योऽयं रसाद्वैतराद्धान्तस्तत्रोपकारिता तदद्वयद्वयस्येत्याशयो वेद्यः। केवलं हि सिद्धान्तस्थापने स्वस्वदर्शनमतवादपरिकल्पने तत्र भिदा भेद उद्भवति, एकत्र ब्रह्मत्वावच्छिन्नप्रकारतानिरूपितमन्यत्र शब्दत्वावच्छिन्नवैशिष्ट्यपरिकल्पितमपरत्र च रसत्वावच्छिन्नविशेषतोद्भासितं तत्तदद्वैतसिद्धान्तस्थापनं प्रविभक्तदर्शनोत्थापनपरमित्यवगन्तव्यम्।

तत्र पूर्वे ब्रह्माद्वैतवादिनो ब्रह्माभिन्नं जगत्तदध्यस्तं तन्मयं मन्वते, परे शाब्दिकाश्च शब्दाभिन्नं तज्जगदङ्गीकुर्वते, केऽपि रसज्ञाः काव्यदर्शनतत्त्वविदश्च रसाभिन्नं रसमयं काव्यात्मकं काव्यस्वरूपं तज्जगदाचक्षिरे व्याचख्युः। "पश्य देवस्य काव्यं न ममार न जीर्यति" इत्यभियुक्तोक्तेर्विश्वस्य काव्यमयत्वेन परिकल्पितत्वादिति भावः। तदित्थं ब्रह्मशब्दरसमयस्यापि समुदितत्वेनाद्वैततत्त्वदर्शनमभिन्नमिति प्रत्येतव्यमिति गूढाशयो बोध्यः।

तत्र तत्र दर्शने किन्नामरूपात्मिका शक्तिराविष्कृतेत्यावेद्यते —

**शक्तिर्मायात्मिकैकत्रापरत्र स्फोटलक्षणा।**
**अन्यत्र व्यञ्जनेत्येवमभिधाद्याः प्रकल्पिताः॥ ३४॥**
**वस्तुतो वृत्तिभेदोऽयं शक्तिमद् ध्वनिलक्षणम्।**
**स्फोटाख्यं शब्दमुद्दिश्य व्यञ्जनान्नातिरिच्यते॥ ३५॥**

**शक्तिरिति।** एकत्र वेदान्तदर्शने मायात्मिका मायारूपा परमात्मोपाधिभूताऽऽवरणविक्षेपहेतुः शक्तिः पूर्वोक्तलक्षणा तिष्ठतीति शेषः। अपरत्र व्याकरणदर्शने स्फोटलक्षणा ध्वनिरूपा स्फुटदर्थप्रत्यायकत्वेन संहृतक्रमबोधजनकतावच्छिन्ना व्यङ्ग्यविशेषाकारा शब्दनिष्ठा सा शक्तिरास्थीयते। अन्यत्र तदुभयेतरकाव्यदर्शने च व्यञ्जना शब्दार्थयोर्गुणभावेन व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धना व्यङ्ग्यार्थमात्रबोधव्यापारविशेषः सा शक्तिरित्यभिमन्यते। एवमुक्तप्रकारेण शब्दगता सैका स्फोटाख्या शक्तिरभिधाद्याः शब्दार्थयोः सम्बन्धभेदात् त्रिधा क्वचिच्चतुर्धा तात्पर्याख्यां वाक्यगतां तामुद्दिश्य प्रकल्पिताः परिकल्प्य निरूपिताः सन्तीति शेषः। एकैव शक्तिर्नानाकारतया ब्रह्मोपाधित्वेन मायाख्या शब्दब्रह्मोद्भासकत्वेन स्फोटाख्या रसपरात्मप्रकाशकत्वेन व्यञ्जनेति त्रिधा विभज्यते, पुनश्च सम्बन्धान्तरं परिकल्प्य तद्विभागोऽभिधादिरूपेण कृतोऽपि मूलतस्तत्त्वात्मक एवेत्यभिप्रायः।

वस्तुतश्च तत्त्वाकलनादयं पूर्वोक्ताभिधालक्षणाव्यञ्जनेति। त्रिधात्मको भेदो वाच्यवाचकत्वादिसम्बन्धभेदाद् विहितो विभागः शक्तिमद्व्यञ्जकत्वसामर्थ्यशालिध्वनिलक्षणं ध्वननस्वरूपं स्फोटाख्यं स्फुटदर्थबोधकत्वात्तत्संज्ञकं शब्दमुद्दिश्य वर्णसमुदायात्मना श्रुतिगोचरीकृतमभिलक्ष्य व्यञ्जनाद्ध्वननात्स्फोटलक्षणान्नातिरिच्यते नातिरिक्तं विभक्तरूपं प्रतिपत्तुं शक्यते, अभिधालक्षणातात्पर्याख्यवृत्तित्रितयस्यापि पृथक्सम्बन्धभेदोपात्तस्य शाब्दव्यञ्जनत्वानतिरिक्तत्वादित्यवबोध्यम्।

अयं भावः—वस्तुतः शब्दस्य स्फोटात्मनो ध्वनिलक्षणः स्फोट एव व्यङ्ग्यविशेषः शक्तिस्तदात्मत्वेन तस्य व्यञ्जकत्वात्, पुनश्चाभिधा-लक्षणा-तात्पर्याख्या वा व्यञ्जकत्वान्तर्गतत्वेन वाच्यवाचकत्वादिसम्बन्धभेदात् कल्प्यमानाः, न ततो व्यतिरिक्ताः पर्यवस्यन्ति, शब्दमूलध्वननव्यापारस्यैव सर्वत्राभिव्याप्य प्रकाशनादित्यवसेयम्।

अथ च स्फोटात्मनः शब्दस्य मूलशक्तिर्व्यक्तिरेवेति प्रकारान्तरेणोच्यते—

**ईश्वरेच्छाविनाभावसम्बन्धाद् वृत्तिमत्तया।**
**स्फुटच्छब्दानुविद्धत्वाद् ध्वनिरित्यवगम्यते॥ ३६॥**

**स्फोटात्माऽयं ध्वनिः शब्दो व्यङ्ग्यत्वेनाभिसम्मतः।**
**व्यक्तिमुल्लासयत्येकां मूलशक्तिं तदात्मिकाम्॥ ३७॥**

ईश्वरेति। ईश्वरेच्छा परमात्मनिष्ठाकाङ्क्षा सृष्ट्युत्पत्तिबीजरूपा तदविनाभावसम्बन्धान्नान्तरीयकत्वेनान्योन्याश्रयत्वात् प्रकृते व्यङ्ग्यार्थनिष्ठप्रयोज्यतानिरूपिततन्निष्ठप्रयोजकत्वाद् वा वृत्तिमत्तया व्यञ्जनव्यापारवत्त्वेन हेतुना स्फुटदर्थानुविद्धत्वात्, श्रवणसमनन्तरमेव स्फुटीभवद्व्यङ्ग्यार्थानुगतत्वाद् व्यञ्जकत्वसम्बन्धाद् वा ध्वनिः स्फोटाख्यः शब्दोऽवगम्यते व्यज्यते, शब्दस्य स्फोटात्मनो ध्वनिरूपत्वेन तच्छ्रुतिगोचरीकरणसमकालमेव तदर्थस्यापि ध्वनित्वेन व्यज्यमानत्वादित्याशयः।

अतश्च स्फोटात्माऽयं स्फोटस्वरूपत्वेन निरूप्यमाणो ध्वनिर्व्यञ्जनलक्षणः शब्दो व्यङ्ग्यत्वेन सम्बन्धेन स्वनिष्ठव्यञ्जकत्वनिरूपितस्वार्थगतव्यङ्ग्यत्वसंसर्गेणाभिसम्मतोऽभियुक्तैर्भाष्यकृत्प्रभृतिभिः सिद्धान्तितस्तदात्मिकां स्फोटात्मशब्दाभिन्नां मूलशक्तिं प्रथमशब्दव्यापारलक्षणामेकामद्वयां व्यक्तिं व्यञ्जनामुल्लासयति प्रोद्भासयति प्रकाशयति प्रत्याययतीत्यर्थः। स्फोटाख्यस्य ध्वन्यात्मकस्य शब्दस्य प्रधानशक्तेर्व्यञ्जनाया एव सम्भवादित्यभिप्रायो बोध्यः।

पुनस्तदेव मतं सम्बन्धवैविध्येन दृढीकर्तुमभिधीयते—

**स्फोटनाद्ध्वननात् किं वा व्यञ्जनादपि तत्त्वतः।**
**शब्दात्मा शक्तिरेकैव व्यक्तिरित्यवसीयते॥ ३८॥**

शक्तिर्व्यक्तिरनुव्यक्तिर्लक्षणा बाधबोधनात् ।
अभिव्यक्तिरथ स्वार्थे भूयोऽभिव्यञ्जनादपि ॥ ३९ ॥

स्फोटनादिति । स्फोटनात्स्फोटात्मसम्बन्धाद् ध्वननात्प्रत्यायनात् किं वा क्रमान्तरेण व्यञ्जनादवगमनादिति पर्यायान्तरेण त्रिविधव्यापारयोगात्तत्त्वतो मूलभावाद् वस्तुतत्त्वाकलनादेकैव शब्दात्मा तदङ्गत्वेन तद्रूपा शक्तिस्तदर्थव्यञ्जकत्वलक्षणा व्यक्तिर्व्यञ्जनेत्यवसीयते प्रत्येतुं शक्यते नेतराभिधाद्या व्यञ्जकत्वातिरिक्तसम्बन्धान्तराभावादिति भावः ।

एवञ्च वाचकत्वस्य व्यञ्जकत्वान्तर्गतत्वाच्छक्तिरभिधाख्या व्यक्तिर्व्यञ्जना, नामान्तरेण सम्बन्धान्तरोद्भावनेन च तत्रान्यथात्वप्रतिभानादिति भावः। बाधबोधनात्प्रथमार्थव्यवधानाद्धेतोर्जायमाना लक्षणा शक्तिरूपव्यक्तिपश्चाद्भाविनीत्यनुव्यक्तिरनुव्यञ्जनेति वेद्यम्, अस्यानन्तरं भूयोऽभिव्यञ्जनाद् बहुशोऽभितो व्यञ्जनाद्धेतोरभिव्यक्तिरभिव्यञ्जनेति शक्तिरेवौपसर्गिकक्रमेण त्रिधा व्यक्त्यात्मना विभक्ता शब्दार्थप्रत्यायने प्रभवतीति भावः। अपिशब्दः क्रमार्थकः । स्वार्थे शब्दार्थ इति सर्वत्र योज्यम् ।

तत्र जन्यजनकत्वसम्बन्धेऽपि शब्दार्थयोरौपसर्गिको भेदः सङ्गत इत्याख्यायते—

व्यक्त्यनुव्यक्त्यभिव्यक्तिक्रमादत्रौपसर्गिकः ।
शाब्दबोधानुरोधेन शक्तिबोधो विभाव्यते ॥ ४० ॥
बोधजन्यत्वहेतुत्वाच्छब्दस्तज्जनको मतः ।
तादृक्सम्बन्धसन्दर्भे शक्तिः सा व्यक्तिलक्षणा ॥ ४१ ॥

व्यक्तीति । व्यक्तिर्व्यञ्जनाऽभिधाख्या शक्त्यपरपर्यायाऽनुव्यक्तिर्लक्षणाऽभिव्यक्तिरभिव्यञ्जनाऽऽलङ्कारिकैरङ्गीकृतेति क्रमात्सम्बन्धानुबन्धादौपसर्गिक उपसर्गकृतो न तु तात्त्विक इत्यर्थः। वस्तुतश्चैक एव व्यङ्ग्य-व्यञ्जकभावसम्बन्धस्तत्र तत्र सम्बन्धान्तरेण प्रतीयमान औपसर्गिकभेदेनैकामेव व्यक्तिलक्षणां शक्तिमुद्भासयतीति भावः। तादृशोऽयं शक्तिबोधो व्यक्तिमात्रप्रत्ययपर्यवसन्नः शाब्दबोधानुरोधेन तद्बुद्धित्वावच्छिन्नज्ञानानुकूलव्यापारेण विभाव्यते परिकल्प्यते शक्त्यद्वैतसिद्धान्तानुगतत्वादित्याशयः।

तत्र बोधजन्यत्वहेतुत्वाद् बोधनिष्ठजन्यतानिरूपितजनकत्वाच्छब्दस्तज्जनकस्तादृशवैयञ्जनिकबोधस्य प्रत्यायकत्वादुद्भावको मतोऽङ्गीकृतः सर्वैरैकमत्येनेति शेषः। तादृक्सम्बन्धसन्दर्भे तथोक्तलक्षणव्यङ्ग्यव्यञ्जकभावसंसर्गविषये व्यक्तिलक्षणा ध्वननगमनप्रत्यायनाद्यपराभिधाना स्फोटस्वरूपा साऽऽद्येश्वरेच्छोन्मीलिता शक्तिस्तद्व्यापारविशेषाकारतयोद्भासमाना तिष्ठतीति शेषः।

स्फोटात्मनः शब्दस्य व्यङ्ग्य-व्यञ्जकत्वरूपात्सम्बन्धात्तदितरयोगाभावाच्च तज्जन्यत्वावच्छिन्नजनकत्वप्रकारको बोधोऽपि वैयञ्जनिक एवेति भावो बोध्यः ।

अथायं वृत्तिसिद्धान्तः शाब्दाद्वैतमतानुकूलत्वादभ्युपगम्य इत्यनुरुध्यते—

**नाम्नाऽपि लाघवादुक्तक्रमेणैकत्वदर्शनात् ।**
**ध्वन्यात्मशब्दवृत्तित्वानुकूलत्वाद् विशेषतः ॥ ४२ ॥**

**शाब्दाद्वैताप्तसिद्धान्तसम्मतत्वाच्च सर्वथा ।**
**व्यक्तिशक्त्यद्वयोपात्तवृत्तिवादो विशिष्यते ॥ ४३ ॥**

**नाम्नेति ।** नाम्नाऽभिधानेन व्यञ्जनेत्याख्येन विशेषितेन, अपीत्यानन्तर्यार्थकम्, लाघवाल्लघुत्वदर्शनात्, अर्धमात्रालाघवस्यापि वैशिष्टयेनाभिमतत्वादिति भावः। उक्तक्रमेण व्यक्त्यनुव्यक्त्यभिव्यक्तिव्यापारक्रमानुसारेण एकत्वदर्शनात् शक्त्येकत्वप्रकाशनात्, शाब्दाद्वैते शक्त्यद्वैतस्य युक्तत्वादिति भावः। ध्वन्यात्मनो व्यञ्जनस्वरूपस्य स्फोटलक्षणस्य शब्दस्य वृत्तित्वानुकूलत्वात्तज्जन्यतानिरूपितजनकत्वात्, ध्वन्यात्मनस्तस्य तादृशवृत्तिमत्त्वेनैव प्रत्ययौचित्यादिति भावः । विशेषतो व्यक्तिव्यापारविशिष्टभावतश्च सर्वथा सर्वतोभावेन सर्वत्र सङ्गतिप्रतीतेरित्यर्थः। चेति हेतुक्रमभेदार्थकम् । शाब्दाद्वैताप्तसिद्धान्तसम्मतत्वात्, शाब्दाद्वैतवादिनामाप्तानामभियुक्तानां भाष्यकृत्पतञ्जलिप्रभृतिवैयाकरणबुधानां मतानुमतत्वाद् व्यक्तिशक्त्यद्वयेन व्यञ्जकत्वशक्त्यद्वैतसिद्धान्तेनोपात्तो गृहीतः प्रतिपादितो वा वृत्तिवादो व्यक्तिशक्त्यद्वैतप्रख्यो विशिष्यते, वैशिष्टयेन प्रतीयते, वैशिष्टयं च व्यञ्जकत्वरूपव्यापाराद्वयत्वेन शब्दनिष्ठमित्यवबोध्यम् ।

किञ्चौपसर्गिकभेदेन शब्दशक्तेर्व्यक्तित्वेन प्रकाशने ध्वनिसिद्धान्तस्थापने ह्यविरोध इत्युपसंह्रियते—

**उपसर्गोद्भवद्भेदान्मूलप्रकृतिरक्षता ।**
**अर्थमात्रगत्वेन तत्र तस्याविकारिता ॥ ४४ ॥**

**तेनोपसर्गमात्रेण पृथग्वैशिष्टयदर्शनात् ।**
**शक्तिर्व्यक्तिसमाख्याता शब्दब्रह्मात्मिका परा ॥ ४५ ॥**

**शाब्दे ब्रह्मणि निष्णाता बुधाः प्रामाण्यदर्शिनः ।**
**ध्वनिस्थापनसिद्धान्ते व्यक्तिशक्त्यविरोधिनः ॥ ४६ ॥**

**उपसर्गेति ।** उपसर्गाः प्रादयस्तदुद्भवद्भेदादुद्गतप्रकाराद् विशेषाद्वा मूलप्रकृतिः प्रधानस्वभावो धातोरिति शेषः, अक्षता क्षत्यभावाद् रक्षिता भवतीति शेषः ।

"उपसर्गेण धात्वर्थो बलादन्यत्र नीयते" इत्युक्तेरर्थस्यैवान्यत्र नीयमानत्वेन धातोर्मूलप्रकृतेरक्षतत्वादिति भावः। यतश्च तस्य तादृशभेदस्यार्थमात्रगतत्वेन केवलं शक्यतावच्छेदकान्तर्निष्ठत्वेन तत्र मूलप्रकृतौ धातावविकारित्वाऽविकृतिर्भेदाभावो भवतीति भावः।

तेनोक्तहेतुनोक्तलक्षणेन वोपसर्गमात्रेण धात्वभेदेन च पृथग्भिन्नमर्थमात्रगतं यद् वैशिष्ट्यं प्रकारतावच्छिन्नं तद्दर्शनात्प्रकाशनाद्धेतोर्व्यक्तिसमाख्याता व्यञ्जनेत्याख्यानेन प्रसिद्धा शक्तिः शब्दवृत्तिः शब्दब्रह्मात्मिका स्फोटाख्यशब्दब्रह्मस्वरूपा परा तुर्या सूक्ष्मतमाऽनुन्मीलितस्वभावा योगिसंवेद्याऽस्तीति शेष । तस्या एव पराख्यायाः शब्दशक्तेः पश्यन्त्यादिभेदेन व्यञ्जितत्वादिति भावः।

अपि च शाब्दे ब्रह्मणि शब्दाकारपरमात्मनि निष्णाता निपुणधिषणास्तन्मर्मविदो बुधा विपश्चितो वैयाकरणा भाष्यकृदादयः प्रामाण्यदर्शिनः शब्दप्रामाण्यवेदिनस्तत्त्वसाक्षात्कारिणश्च ध्वनिस्थापनसिद्धान्ते व्यङ्ग्यविशेषलक्षणव्यञ्जनप्रतिष्ठापनप्रमिते मते ध्वनिवादाध्वनि वा व्यक्तिशक्त्यविरोधिनो व्यक्तिलक्षणायाः शक्तेरनुकूलवादिनः सन्तीति शेषः। स्फोटात्मशब्दब्रह्मवादिनां विदुषां ध्वनिसिद्धान्तमूलकत्वेन व्यञ्जकत्वरूपशब्दशक्तिस्वीकारे लेशतोऽपि विरोधस्यानवकाशादित्याशयो बोध्यः।

अन्ते च स्थानादिभेदाद् भूयोभेदाः शक्तयो भासमाना अप्येकत्वमश्नुवत इत्येतत्प्रदश्यंते—

**स्वाश्रयस्थानसंयोगात्तद्रूपास्तद्गुणान्विताः ।**
**तदाख्यानास्तदाभासाः शक्तयो भान्ति भूरिशः ॥ ४७ ॥**
**देशकालस्थितिव्यक्तिकृता भूयोभिदाः परम् ।**
**परात्माभिन्नसम्भूतिः पराख्या शक्तिरद्वया ॥ ४८ ॥**

**स्वाश्रयेति ।** स्वाश्रयस्थानसंयोगाच्छक्त्याधारस्थलसम्बन्धाद् यत्र यत्र स्थलविशेषमाश्रित्य सा (शक्तिः) तिष्ठति तत्संसर्गादित्यर्थः, तद्रूपास्तादृशस्थानलक्षणास्तद्गुणान्वितास्तत्रत्यगुणधर्मसंयुक्तास्तदाख्यानास्तत्कृताभिधानख्यातास्तदाभासास्तत्त्वेनोद्भासमाना भूरिशो बहुशो नानाकारनामगुणप्रकाशनाः शक्तयो भान्ति प्रकाशन्ते। नामरूपगुणस्थानादिभेदात्तासां शक्तीनामानन्त्यमाकलनीयमित्यभिप्रायो बोध्यः।

परमन्यच्च देशास्तत्र तत्र स्थिता बहुविधा लोकाः काला भूतभविष्यद्वर्तमानलक्षणाः स्थितयोऽवस्थाविशेषा व्यक्तयश्च नानाजातयस्तत्कृतास्तद्भेदोद्भूता भूयोभिदा भूयांसो भेदा विशेषा भवन्तीति शेषः। यथाऽऽश्रयनामरूपगुणादिकृतास्ता भिन्नाकारास्तथा देशकालस्थितिव्यक्तिकृता अप्यसंख्यभेदास्तद्गताः प्रतिभान्तीति भावः। एवं सत्स्वपि तत्तद्धेतुकृतेषु भूयोभेदेषु परात्माभिन्नसम्भूतिः परमात्मरूप-

प्रकाशा तदभेदेन भासमाना, अद्वयाद्वैतरूपा पराख्या परात्मिका शक्तिरस्तीति शेषः। भूयोभानतयाऽनन्ताकारतया च प्रतीयमानायास्तस्याः परात्मशक्तेर्वस्तुतो भेदाभावादद्वयत्वेनावस्थानादित्याशयो बोध्यः।

तादृशोक्तरूपायाः शक्तेर्विलाससम्भूतं विश्वमिदं तत्रैव लयं गच्छतीत्युपसंहर्तुमुच्यते —

तद्विलासोल्लसद्विश्वमिदं तत्रैव लीयते।
सृष्टिस्थितिलयैकान्तकारणं शक्तिरेव सा ॥ ४९ ॥
इत्थमेतद् यथाशक्ति शक्तिरूपं निरूपितम्।
सुधीभिरुचितं ग्राह्यं तदन्यत्परिहीयताम् ॥ ५० ॥

तदिति। तद्विलासेन तस्याः शक्तेर्लीलोद्भूतेन विधानेनोल्लसदुद्भासमानं विश्वं स्थावरजङ्गमात्मकमिदं दृश्यमानप्रपञ्चप्रथितं तत्रैव शक्त्यन्तरे न त्वन्यत्र तदितरकारणाभावाल्लीयते लयं गच्छति, कार्यमात्रस्य स्वसमवायिकारणान्तर्लीयमानत्वादिति भावः। किञ्च, सोक्तलक्षणाशक्तिरेव स्वातन्त्र्येण स्वेतरनैरपेक्ष्येण सृष्टिर्जगन्निर्मितिः स्थितिस्तद्रक्षणं यावदायुष्यकालं लयो नाशश्च तदेतस्य त्रितयस्याप्येकान्तकारणं परमहेतुः सकलकारणत्वेनास्तीति शेषः। तन्मात्रलीलोल्लासादशेषभुवनोल्लासः सम्भवतीति भावो बोध्यः।

इत्थमुक्तप्रकारेण यथाशक्ति स्वाल्पमत्यनुरूपं शक्तिरूपमनन्तलक्षणं निरूपितं सवृत्तिकारिकाबद्धलघुग्रन्थेनाख्यातं सुधीभिः सन्मतिशीलैर्विपश्चिद्भिः सहृदयैरुचितं यथारुचि ग्राह्यं स्वानुकूलत्वात्तदन्यच्च तदितरदग्राह्यमननुकूलमनुचितं वा परिहीयतां दूरमुत्सृज्यतामित्ययमनुरोधवचनोपन्यासो लेखकस्य सुहृत्सुधीजनं प्रतीत्यवधेयम्।

शक्तिस्वरूपप्रमितप्रबोधादद्वैततत्त्वोचितसद्विमर्शः।
शब्दैकवृत्तिध्वनिदर्शनेन प्रकाशितो मर्मविदां मुदेऽस्तु ॥५१॥



# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५ प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. **"वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी–२२१ ००२ (उ० प्र०)"** इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल-आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः **"सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी–२२१ ००२ (उ० प्र०)"** इति सङ्केतेन विधेयः।



रजिस्टर्ड न्यूजपेपर्स एक्ट के अन्तर्गत

## विज्ञप्ति

| | | |
|---|---|---|
| १. | प्रकाशन का नाम | सारस्वती सुषमा |
| २. | प्रकाशन की तिथि | त्रैमासिक |
| ३. | प्रकाशक का नाम | डॉ० हरिश्चन्द्रमणि त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ४. | सम्पादक का नाम | डॉ० भागीरथ प्रसाद त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ५. | मुद्रक का नाम | श्रीगिरीश चन्द्र |
| | राष्ट्रियता | भारतीय |
| | पता | विजय-प्रेस, सरसौली वाराणसी |
| ६. | स्वामित्व | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |

मैं भागीरथ प्रसाद त्रिपाठी घोषित करता हूँ कि उल्लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर
भागीरथ प्रसाद त्रिपाठी
अनुसन्धानसंस्थाननिदेशक,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय
वाराणसी–२२१ ००२.

लघु-ग्रन्थमाला

[ ५३ ]

श्रीरघुदेवन्यायालङ्कारभट्टाचार्यविरचितः

# पक्षतावादः

सम्पादकः

डॉ० राजारामशुक्लः

प्राध्यापकः,

न्याय-वैशेषिकदर्शनविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वि० सं० २०५२

# नैवेद्यम्

व्याप्तिज्ञानजन्याया अनुमितेः किमन्यत्कारणमिति जिज्ञासया प्रवर्तते पक्षतानिरूपणम्। किमर्थमेतज्जिज्ञासावतार इति चेत् ? अनुमितिकारणे परामर्शादौ सत्स्वपि साध्यनिश्चयसत्त्वे विनाऽनुमित्सामनुमित्यनुदयात्तदतिरिक्तं किमपि कारणमनुमितेरवश्यं वाच्यं यत्सत्त्वेऽनुमित्युदयात्। स एव हि हेतुः पक्षतेत्युच्यते। पक्षता च पक्षवृत्तिः पक्षत्वरूपो धर्मविशेषः। पक्षे धर्मत्वं यस्या इति व्यधिकरणबहुव्रीहिणा व्यधिकरणबहुव्रीहेरसाधुत्वे च देवतादिशब्दवत् तलः स्वार्थिकत्वमभ्युपगम्य पक्षस्य धर्मत्वं धर्मविशेष इति व्युत्पत्त्या निरुक्तार्थलाभात्[1]।

तत्र प्रकृतग्रन्थकारो रघुदेवो नवीनमतमनुसरन् सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षतेति पक्षतालक्षणं प्रस्तौति[2], तथापि 'उपपादनञ्च स्वपक्षसाधनपरपक्षनिराकरणाभ्यां सम्भवति' इत्युक्तमनुसरता गङ्गेशोपाध्यायेन तत्र न तावत्सन्दिग्धसाध्यधर्मत्वं पक्षत्वमिति[3] प्राचां मतं खण्डनाय प्रस्तुतम्।

सन्दिग्धसाध्यधर्मत्वमित्यस्य साध्यसन्देहरूपोऽर्थो दीधितिकृतोऽभिमतः। यथाश्रुतेन तु सन्देहविषयीभूतसाध्यवत्त्वमर्थो लभ्यते। तत्स्वीकारे ह्रदादौ विनष्टवह्न्यादेरनुमितिर्न स्यात्, तत्र साध्यस्य विनष्टतया तत्त्वत्वासम्भवात्। कीदृशसाध्यसन्देह इति चेत् साध्यनिर्णयनिवर्त्यः। तथा च यद्धर्मिकयत्सम्बन्धावच्छिन्नयत्प्रकारकत्वेन यत्संशयं प्रति निवर्तकत्वं स सन्देहस्तत्पक्षकतत्सम्बन्धावच्छिन्नतद्विधेयकानुमितौ हेतुभूता पक्षतेति फलितम्[4]। अत्र सन्देहपदानुपादाने बाधनिश्चयेऽतिव्याप्तिः, तस्यापि साध्यनिश्चयनिवर्तनीयत्वात्। बाधनिश्चयस्य पक्षतात्वाङ्गीकारस्तु न युक्तः। तथा हि—पर्वतो वह्न्यभाववानिति बाधनिश्चयधर्मिकतादृशज्ञानमप्रमा न वेत्यप्रामाण्यग्रहदशायां पर्वतो वह्निव्याप्यधूमवान् वह्निमांश्चेति सिद्ध्यात्मकपरामर्शसत्त्वेऽनुमित्यापत्तिस्तादृशबाधनिश्चयस्य साध्यनिर्णयनिवर्त्यत्वात्। बाधनिर्णयस्य विशिष्टबुद्धिमात्रं प्रति विरोधित्वेऽप्यप्रामाण्यज्ञानास्कन्दितस्य तस्यातथात्वात्। अतः सन्देहपदमावश्यकम्। संशयत्वमत्र साध्यनिश्चयाप्रतिबन्धकत्वरूपं ग्राह्यम्। अन्यथा सन्देहपदोपादानेऽपि वह्न्यभाववान् पर्वतो रूपवान्न वेति समूहालम्बनस्य सन्देहात्मकबाधनिश्चयरूपत्वेन साध्यनिर्णयनिवर्त्यत्वसंशयत्वयोः सत्त्वात् पर्वतो वह्निमानित्यनुमितिं प्रति पक्षतात्वापत्तिः स्यात्। तथा च सन्देहे साध्यनिर्णयनिवर्त्यत्वे सति साध्यनिर्णयानिवर्तकत्वं

१. द्र० पक्षताप्रकरणम् (जा०) पृ० सं० ५; २. पृ० सं० १।
३. पक्षताप्रकरणम् (चि०) पृ० सं० ५; ४. पक्षताप्रकरणम् (जा०) पृ० सं० ६।

विशेषणम् । अनिवर्तकत्वमित्यस्य निवर्तकतावच्छेदकविषयताशून्यत्वमर्थः, न तु निवर्तकत्वाभावः । अन्यथाऽप्रामाण्यज्ञानानास्कन्दितबाधनिश्चयस्य साध्यनिर्णयनिवर्तकत्वाभावात्पक्षतात्वापत्तिः स्यात् । विषयतापर्यन्तानुधावने तु समानाकारकज्ञानीयविषयतयोरैक्यात् साध्यनिर्णयप्रतिबन्धकतावच्छेदकाप्रामाण्यज्ञानानास्कन्दितबाधनिश्चयीयविषयतावत्त्वस्यैवाप्रामाण्यज्ञानास्कन्दितबाधनिश्चये वर्तमानत्वात् तच्छून्यत्वविरहेणादोषात् ।

इत्थं संशयस्य तदभाववति तत्प्रकारकत्वेनानिवेशे साध्यनिर्णयानिवर्तकत्वोक्तौ पर्वतो वह्निव्याप्यवान् इत्यत्र वह्न्यभाववान् पर्वत इति निश्चयस्य पक्षतात्वं स्यात् तादृशनिश्चयस्य तदभावव्याप्यवत्तामुद्रया साध्यवत्तानिश्चयप्रतिबध्यत्वादप्रतिबन्धकत्वाच्च । तादृशसाध्यनिश्चयाप्रतिबन्धकीभूत–तदभाववद्विशेष्यकतत्प्रकारकज्ञानत्वनिवेशे उक्तदोषवारणेऽपि तत्रैव पर्वतो वह्निमान्न वेति संशये वह्निव्याप्यसाध्यकानुमितिं प्रति पक्षतात्वापत्तिः स्यात् । एतादृशसंशयस्य साध्यनिर्णयप्रतिबध्यत्वेऽपि तदप्रतिबन्धकत्वेन तदुत्तरं वह्निव्याप्यवत्तानिश्चयसत्त्वे वह्निव्याप्यसाध्यकानुमितित्वापत्तिरितीष्टापत्तिरपि नैव वक्तुं शक्यते; किन्तु साध्यनिर्णयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतायां प्रकृतसाध्यविषयताघटितधर्मावच्छिन्नत्वं निवेश्यम् । उक्तसंशयनिष्ठा वह्निव्याप्यवत्तानिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यता तु वह्न्यभावनिष्ठप्रकारत्वावच्छेद्येति नोक्तदोषावकाशः । इदानीं साध्यनिर्णयाविरोधित्वं संशयत्वं वेति पृथक्तया न निवेशनीयं बाधादिनिश्चयनिष्ठप्रतिबध्यतायाः प्रकृतसाध्यविषयताघटितधर्मानवच्छिन्नत्वेनाप्त्यभावात् ।

न चैवमपि वह्निव्याप्यवत्सधर्मा पर्वतो वह्निव्याप्यवानित्यत्रैव वह्निव्याप्यवत्सधर्मा पर्वतो वह्निमान्न वेति संशयस्य पक्षतात्वापत्तिः, तत्र साध्यविषयतायाः पक्षान्तर्गतत्वेन संशयनिष्ठप्रतिबध्यतावच्छेदकत्वादिति वाच्यम्, प्रकृतसाध्यविषयतायां पक्षविषयताबहिर्भूतत्वनिवेशेन तद्वारणसम्भवाद् वह्निव्याप्यविषयतायास्तादृशप्रतिबध्यतावच्छेदकत्वेऽपि पक्षविषयतान्तर्गतत्वेन क्षतिविरहात् । एवञ्च प्रकृतपक्षविषयताबहिर्भूतप्रकृतसाध्यविषयताघटितधर्मावच्छिन्ना या प्रकृतसाध्यवत्ताग्रहनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यता तादृशप्रतिबध्यतावत्त्वं पक्षतात्वमिति फलितोऽर्थः । अत एव ह्रदो वह्न्यभाववानित्यत्र ह्रदो वह्न्यभाववान्न वेति संशयस्येव ह्रदो वह्निमान्न वेति संशयस्यापि पक्षतात्वं सङ्गच्छत इत्युक्तम्, तन्निष्ठप्रतिबध्यतायाः साध्यविषयताघटितधर्मानवच्छिन्नत्वाद् वह्निमत्ताविषयकत्वेनैवावच्छिन्नत्वात् ।

प्रकृतपक्षविषयताबहिर्भूतप्रकृतसाध्यविषयताघटितधर्मावच्छिन्नत्वं प्रतिबध्यतायां व्याप्यवत्तासाध्यकस्थलीयपक्षतालक्षणे निवेशनीयं नेतरत्र पक्षसाध्यभेदेन पक्षतालक्षणभेदादिति विभावनीयम् ।

पर्वतो वह्निमानित्यनुमितिं प्रति वह्निः पर्वतवृत्ती न वा, वह्निः पर्वतनिष्ठा नं वा, प्रतियोगो न वेत्यादिसंशयानामपि पक्षतात्वं स्वीक्रियते। अत एव पक्षसाध्यविशेष्यकसंशयानुगमोऽपि न[1]।

इत्थमिदं लक्षणं पूर्वपक्षत्वेनोपस्थाप्य तत्खण्डनाय गङ्गेशोपाध्यायेन संशययोग्यताया एव निरासः कृतः—सन्देहो विशेषणविषयाऽनुमितिं प्रति हेतुः, उपलक्षणविषया वा ? इति विकल्पोत्थापनेन। तत्र तावद् विशेषणविषया कारणत्वे संशयस्य क्षणद्वयावस्थायित्वेन लिङ्गदर्शनव्याप्तिस्मरणादिना परामर्शपूर्वमेव नाशात् फलोपहितत्वं न स्यात्। उपलक्षणत्वे स्वरूपयोग्यस्याव्यावर्तकतया सिद्धिकालेऽनुमितिवारणं न स्यात्।

साधकबाधकप्रमाण-(सिद्धिबाध-) अभावः पक्षता इत्यपि न। तथा हि—साधकप्रमाणबाधकप्रमाणोभयाभावश्चेत् साधकबाधकप्रमाणाभावस्यार्थस्तदा केवलसिद्धिसत्त्वेऽनुमित्यापत्तिः स्यात्। सिद्धिसत्त्वेऽपि बाधकप्रमाणाभावसत्त्वेन तादृशोभयाभावस्य सत्त्वात्। साधकप्रमाणाभावो बाधकप्रमाणाभाव इत्यभावद्वयं पक्षता। तथा चोक्तस्थले प्रमथाभावस्याभावान्नानुमित्युत्पाद इत्यपि नावश्यक्लृप्तकारणेषु प्रतिबन्धकाभावमुद्रया बाधज्ञानाभावस्य हेतुतास्वीकारस्यावश्यकतया तेनैवोपपत्तौ तस्य पक्षतात्वेन पृथक् कारणतास्वीकारस्यानुमितत्वादिति तादृशोभयाभावान्तर्गतबाधाभावस्य प्रवेशो व्यर्थः।

अस्तु वा बाधकप्रमाणाभाववैयर्थ्यं साधकप्रमाणाभावमात्रस्यैव पक्षतात्वं चेत्याशङ्क्य चिन्तामणिकारैनैकप्रकारैरियं शङ्का निरस्ता। १. आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यश्चेत्यादिश्रुत्या आत्मविषयकशाब्दबोधात्मकसिद्ध्यनन्तरम् आत्मविषयकानुमितिबोधनात् सिद्ध्यभावरूपकारणासत्त्वेऽप्यनुमितिर्दृश्यते। २. यदि प्रत्यक्षात्मकसिद्ध्यभावस्य कारणता स्वीक्रियते तदापि अनुमित्सासत्त्वे प्रत्यक्षतो निश्चितेऽर्थेऽपि अनुमितिर्भवत्येव। ३. एवमेव 'मन्तव्यश्चोपपत्तिभिः' इत्यादिवचनाद् आत्मा बहुभिर्हेतुभिर्मन्तव्य इत्यस्य बोधितत्वेन एकलिङ्गेन सिद्धस्य अनुमित्सासत्त्वे लिङ्गान्तरेणानुमितिर्भवत्येव। तस्मात् सिद्ध्यभावो न पक्षता।

यद्यपि सिषाधयिषायाः पक्षतात्वे नोक्तदोषाः, एवं सिषाधयिषासत्त्वे 'प्रत्यक्षपरिकल्पितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः' इति सिषाधयिषाऽभावे 'न हि करिणि दृष्टे चीत्कारेणानुमितेऽनुमातारः' इति च वाचस्पतिवचनेनाविरुद्धे तथापि सिषाधयिषाया अनुमितिकारणत्वे तद्विना घनगर्जितेन मेघानुमानं न स्यात्।

---

१. प० प्र० (दी०) पृ० सं० ४९।

इत्येवं रीत्या पक्षतायाः कानिचित्स्वरूपाणि पूर्वपक्षत्वेनोपस्थाप्य मणिकृता खण्डितानि। सोऽयं विषयः प्रकृतग्रन्थेऽवर्णित इत्यत्रास्माभिः संक्षेपेण प्रस्तुतः। सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षतेति सिद्धान्तपक्षमाश्रित्य प्रकृतग्रन्थे चर्चा क्रियते। स च विषयो ग्रन्थकृता श्रीरघुदेवतर्कालङ्कारेण अत्यन्तं स्पष्टतया विवेचितः, क्वचिदस्पष्टोऽप्यस्माभिष्टिप्पण्यादिप्रदानेन स्पष्टतरः कृत इति तन्निर्वचनमत्रानावश्यकं मन्यामहे।

प्रकृतग्रन्थकारः श्रीरघुदेवन्यायालङ्कारभट्टाचार्यो नैकेषां ग्रन्थानां रचयितुर्हरिरामतर्कालङ्कारस्य शिष्येष्वन्यतमो गदाधरभट्टाचार्यस्य सतीर्थ्यः स्वयमपि नैकेषां ग्रन्थानां रचयितेति नाविदितं न्यायवासनावासितस्य कस्यापि। तन्नाम्ना निम्नोट्टङ्किता ग्रन्था उपलभ्यन्ते —

१. कणादसूत्रव्याख्यानम्, २. तत्त्वचिन्तामणिव्याख्या गूढार्थदीपिका—रघुदेवी (अनुमानपरिच्छेदः), ३. द्रव्यसारसङ्ग्रहः, ४ पदार्थखण्डनविवरणम् ( रघुनाथशिरोमणिकृतपदार्थखण्डनस्य व्याख्यानम् ), ५. अनुमितिपरामर्शविचारः, ६. अवयवग्रन्थः, ७. आकांक्षावादः, ८. आख्यातवादटिप्पणी ( रघुनाथकृताख्यातवादोपरि ), ९. इच्छावादः, १०. उपसर्गद्योतकताविचारः, ११. कारणतावादार्थः, १२. कार्यकारणभावविचारः, १३. चित्ररूपवादः, १४. ज्ञानद्वयवादः, १५. ज्ञानलक्षणविचारः, १६. तर्कविचारः, १७. दण्डकारणताविचारः, १८. धर्मितावच्छेदकप्रत्यासत्तिनिरूपणम्, १९. नञर्थवादटिप्पणी / नञ्वादटिप्पणी, २०. नवीननिर्माणम्, २१. निरुक्तिप्रकाशः, २२. निश्चयत्वनिरुक्तिः, २३. निश्चयवादः, २४. पक्षता, २५. प्रतियोगिज्ञानकारणताविचारः, २६. प्रतियोगिज्ञानस्य हेतुत्वखण्डनम्, २७. मनोवादः, २८. लक्षणावादः, २९. लौकिकविषयतावादः, ३०. विशिष्टवैशिष्ट्यबोधविचारः, ३१. विशिष्टवैशिष्ट्यवादः, ३२. विशिष्टवैशिष्ट्यावगाहिवादार्थः, ३३. विषयतावादार्थः, ३४. सामग्रीवादः, ३५. स्मृतिसंस्कारवादः, ३६. न्यायकुसुमाञ्जलिकारिकाव्याख्या, ३७ धर्मितावादः, ३८. गूढार्थतत्त्वप्रतिपत्तिः।

प्रकृतग्रन्थस्य सम्पादनं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयसरस्वतीभवनपुस्तकालयतः प्राप्तां पाण्डुलिपिमाश्रित्य कृतमस्ति। ग्रन्थस्यास्य अन्याऽपि काचन प्रतिस्तत्रैव वर्तमानाऽपि पाठसंशोधनार्थं प्रयत्नपूर्वकमपेक्षिताऽपि दुर्भाग्यवशात् प्राप्तुं नाशक्यतेति कामपि न्यूनतामनुभवन्नपि गुरुप्रसादजनितेन मदीयेन अल्पल्पीयसा विवेकेन यत्र तत्र पाठसंशोधनादिकमपि चिह्नविशेषैः सम्पादितमस्ति। एतस्य दुष्टादुष्टत्वविवेकस्तु विद्वद्भिरेव विधेयः।

अत्रास्मत्पक्षतः प्रयुक्तानि कानिचिच्चिह्नानीत्थं वेदितव्यानि—१. नील[त्वं] पृ० सं० १, अर्थात् मूलप्रतौ 'त्व' इति नास्ति किन्त्वावश्यकः। २. द्वात्वा (त्वा ?) पृ० सं० २, अर्थात् मूलप्रतौ 'त्वा' इत्यस्ति किन्त्वनावश्यकः। ३. त्वा (त्ता), पृ० सं० ३, अर्थात् 'त्वा' इत्यस्य स्थाने 'त्ता' इति पठनीयम्। ४. ले० टि० = लेखकटिप्पणी।

ग्रन्थस्यास्य सम्पादने सस्नेहमस्मानुपकृतवती भगवती शारदाम्बा ग्रन्थस्य यशस्वितायै समभ्यर्थ्यते।

ये खलु विदितनिखिलस्वारस्या अपि प्रयासेनानेन सदुत्साहं विवर्धयिषयैव किञ्चिद् विविदिषन्ति तद्व्याजेनैव चाकिञ्चनामपि कृतिमालोचयन्ति ते विरला अप्यविरलयशस्का नमस्यन्ते। ये तु परेषां पाण्डित्यमकिञ्चिदिव मन्यमानाः पण्डितम्मन्याः सप्रश्रयं समर्पितमपि ग्रन्थरत्नं मनागपि न पिस्पृक्षन्ति, ते कस्य नमस्याः स्युरिति न जानीमहे।

सादरभरम्
राजारामशुक्लः

# विषयानुक्रमणिका

श्रीरघुदेवन्यायालङ्कारभट्टाचार्यविरचितः

# पक्षतावादः

सत्यपि परामर्शादौ पक्षे साध्यनिश्चयदशायां विनानुमित्सामनुमितेरनुदयादनुमितिं प्रति पक्षताया हेतुत्वं कल्प्यते, पक्षता च सिषाधयिषाविरहविशिष्टसि[द्]ध्यभावः। सिषाधयिषा च प्रकृतपक्षे प्रकृतसाध्यानुमित्सा। सिद्धिः प्रकृतपक्षे प्रकृतसाध्यनिर्णयः। एवञ्च पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयकानुमितित्वावच्छिन्नं प्रति तादृशानुमितिगोचरेच्छाऽभावविशिष्टपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिर्णयत्वावच्छिन्नाभावत्वादिना कारणत्वं वाच्यम्। [1]द्रव्यं वह्निमत्पर्वतो द्रव्यवान् इत्याकारकसाध्यनिर्णयदशायां पर्वतो वह्निमानित्याद्यनुमित्युपपत्तये विशिष्य पक्षतावच्छेदकसाध्यतावच्छेदकयोर्निवेशः।

अथैवमपि पर्वतो वह्निमानित्येतादृशसिद्धिकालेऽधिकविषयिताश्रयि[ण्या]नीलपर्वतो वह्निमान् पर्वतः सुन्दरवह्निमान् इत्याकारानुमितेरनुदयापत्तिः[2]। न च पर्वतत्वादिपर्याप्तोद्देश्यतावच्छेदकताकत्वस्य वह्नित्वादिपर्याप्तविधेयतावच्छेदकताकत्वस्य [च] निवेशान्नानुपपत्तिरिति वाच्यम्[3], उभयत्वादेः[4] प्रत्येकानतिरिक्ततया नील[त्व]पर्वतत्वोभयादिपर्याप्तस्यावच्छेदकत्वस्य पर्वतत्वादिपर्याप्ततया तादृशानुमितेनामपि पर्वतत्वादिपर्याप्तोद्देश्यतावच्छेदकताकत्वात्[5]। पर्वतत्वान्यधर्मानवच्छिन्नविशेष्य-

---

१. पर्वतनिष्ठविशेष्यतानिरूपितवह्निनिष्ठप्रकारताशालिनिर्णयत्वावच्छिन्नाभावत्वादिना निरुक्तानुमितित्वावच्छिन्नं प्रति कारणत्वोक्तौ दोषमवतारयति—द्रव्येति।

२. तादृशानुमितावपि पर्वतत्वावच्छिन्नोद्देश्यतावह्नित्वावच्छिन्नविधेयतयोः सत्त्वात्।

३. पर्वतत्वपर्याप्तोद्देश्यतावच्छेदकताया नीलत्वपर्वतत्वोभयापर्याप्ततया वह्नित्वपर्याप्तविधेयतावच्छेदकतायाः सुन्दरत्ववह्नित्वोभयापर्याप्ततया नानुपपत्तिरित्याशयः।

४. अत्र 'उभयादेः' इति पाठो युक्तः प्रतिभाति। यथाश्रुते तु प्रत्येकानतिरिक्ततयेत्यस्य प्रत्येकानवृत्तितयेत्यर्थः करणीयः।

५ प्रत्येकमपर्याप्तस्य समुदायेऽपर्याप्तिरिति नियमेनैतत्· इदन्तु चिन्त्यम्—प्रत्येकमपर्याप्तस्येति नियमो नीलत्वपर्वतत्वोभयपर्याप्तावच्छेदकतायाः पर्वतत्वपर्याप्तत्वं समर्थयति; किन्तु पर्वतत्वपर्याप्तावच्छेदकतायास्तादृशोभयपर्याप्तिर्नैतेन समर्थ्यते। वस्तुत उभयत्र पर्याप्तस्यैकत्र पर्याप्तिरस्ति न वेत्यत्र विवादः। किन्त्वेकत्र पर्याप्तस्योभयत्र पर्याप्तिः कथं स्यात्कस्याप्यभिमता।

ताकत्ववह्नित्वान्यधर्मानवच्छिन्नविधेयताकत्वादिनिवेशनेऽपि[1] जातिमान् वह्निमान् पर्वतो जातिमद्वा (त्वा ?)नित्याद्यनुमितौ व्यभिचारो दुरपह्नवः[2]। स्वरूपतः पर्वतत्वाद्यवच्छिन्नत्ववह्नित्वाद्यवच्छिन्नत्वयोरधिकयोरुद्देश्यत्वविधेयत्वाद्यंशे निवेशनेऽपि[3] जातित्वादिना स्वरूपतश्च पर्वतत्वादिकमवगाहमानायां जातिमान् पर्वतो वह्निमान् पर्वतो जातिमद्वह्निमानित्याद्यनुमितौ व्यभिचारोऽशक्यवारण इति[4] चेन्मैवम्, पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वस्योद्देश्यतायां, वह्नित्ववृत्तिनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वस्य च विधेयतायां

---

यदि नीलत्वपर्वतत्वोभयपर्याप्तावच्छेदकता पर्वतत्वपर्याप्तावच्छेदकतासमनियता, तदैव पर्वतत्वपर्याप्तावच्छेदकतायास्तादृशोभयपर्याप्तत्वं वक्तुं शक्यम्। किन्तु तथा नास्त्येव। पर्वतत्वपर्याप्तावच्छेदकता पर्वतत्वमात्रनिष्ठाऽपि। तादृशोभयपर्याप्ता चावच्छेदकता न कदाचिदपि पर्वतत्वमात्रनिष्ठेति न तयोः सामनैयत्यम्। नाप्यभेदः। भेदस्तु पर्वतत्वमात्रवृत्तित्वावृत्तित्वाभ्याम्।

अथवेतरवारकपर्याप्तिमनिवेश्यैवैतत्। पर्वतत्वपर्याप्ता या तादृशोभयपर्याप्तावच्छेदकता तत्कानुमितौ तादृशोभयपर्याप्तावच्छेदकताकत्वस्येव पर्वतत्वपर्याप्तावच्छेदकताकत्वस्यापि सत्त्वात्। अत एव पर्वतत्वान्येत्यग्रिमग्रन्थेनेतरवारकतानिवेशप्रयासोऽपि ग्रन्थकृतः सङ्गच्छते।

१. अत्र पर्वतत्वावच्छिन्नत्ववह्नित्वावच्छिन्नत्वयोः निविष्टपूर्वयोरप्यावश्यकता वर्तते। तेन निर्धर्मितावच्छेदके वह्निमानित्यादिज्ञाने उद्देश्यताया निरवच्छिन्नतया पर्वतत्वान्यधर्मावच्छिन्नत्वसत्त्वेऽपि न क्षतिरिति चेन्न, कार्यतावच्छेदककोटावनुमितित्वस्य प्रवेशात् निर्धर्मितावच्छेदककज्ञानस्य चानुमितित्वानङ्गीकारात् तत एव तादृशज्ञानवारणसम्भवे पर्वतत्वाद्यवच्छिन्नत्वादिनिवेशो नावश्यकः। अत एव स्वरूपत इत्याद्यग्रिमन्थे 'अधिकयोः' इति द्विवचनान्तविशेषणं सङ्गच्छते।

२. पर्वतत्वान्यधर्मावच्छिन्नविशेष्यताकत्वांशे जातिमान् वह्निमानित्यनुमितौ, वह्नित्वान्यधर्मावच्छिन्नविधेयताकत्वांशे च पर्वतो जातिमद्वान् इत्यनुमितौ व्यभिचारः। उभयत्रोद्देश्यत्वविधेयत्वयोः जात्यवच्छिन्नतया पर्वतत्ववह्नित्वान्यधर्मानवच्छिन्नत्वात्। प्रथमे जातित्वेन पर्वतत्वावगाहनं द्वितीये च जातित्वेन वह्नित्वावगाहनमिति बोध्यम्।

३. एतन्निवेशे जातिनिष्ठे विधेयतावच्छेदकत्वोद्देश्यतावच्छेदकत्वे जातित्वावच्छिन्ने इति नोक्तदोष इत्याशयः।

४. अत्र द्वे उद्देश्यतावच्छेदकते। एका पर्वतत्वनिष्ठा निरवच्छिन्ना। अपरा जातित्वावच्छिन्ना। आद्यामादायोद्देश्यतायां स्वरूपतः पर्वतत्वावच्छिन्नत्वमानीय जातिमान् पर्वतो वह्निमान् इत्यत्र दोष ऊहनीयः। एवमेव विधेयतावच्छेदकतांशेऽपि बोध्यम्।

निवेशनेनानुपपत्त्यभावात्[१]। जातित्वाद्यवच्छिन्नपर्वतत्वादिनिष्ठावच्छेदकत्वस्यापि निरवच्छिन्नपर्वतत्वादिवृत्त्यवच्छेदकताभिन्नत्वेनोपदर्शितानुमिति[नि]रूपितोद्देश्यत्व-विधेयत्वयोस्तथाविधावच्छेदकत्वानिरूपकत्वविरहात्। जातिमान् वह्निमानित्याद्यनुमितौ च तथाविधसिद्धीनां पृथगेव प्रतिबन्धकत्वान्न तादृशसिद्धिकाले तथाविधानुमितेरापत्तिः।

इदं तु बोध्यम्—पर्वतत्वाद्यवच्छेदेन वह्निमत्वा(त्ता)निश्चये नीलपर्वतो वह्निमानित्याद्यनुमितेरनुत्पादस्य सर्वानुभवसिद्धत्वात्तत्प्रतिबध्यतावच्छेदककोटौ पर्वतत्वमात्रा-द्देश्यतावच्छेदकत्वपर्याप्तिर्न नि(नि)वेश्या; किन्तु पर्वतत्वसामानाधिकरण्यमात्रेण वह्निमत्तानिश्चयप्रतिबध्यतावच्छेदककोटावेवेति केचित्, तन्न, उक्तानुमितिफलस्येतादृशशब्दप्रयोगादेरुक्तनिर्णयानिष्पाद्यतयोक्तनिर्णयेऽप्युक्तानुमितेरधिकविषयोत्पादस्यैवानुभवसिद्धत्वात्।

एकसम्बन्धेन साध्यनिर्णयदशायामपरसम्बन्धेनानुमित्युत्पत्त्या सम्बन्धविशेषो निवेशनीयः[२]। एवं शुद्धसंयोगादिना साध्यनिर्णयदशायां संयुक्तसंयोगादिनाऽनुमित्युत्पत्तये संयोगादिसंसर्गकसिद्धिप्रतिबध्यतावच्छेदककोटौ संयोगादिपर्याप्त-सांसर्गिकविषयताकत्वं निवेशनीयम्। तदर्थश्च किञ्चित्सांसर्गिकविषयत्वानिरूपित-संयोगादिवृत्तिसांसर्गिकविषयताकत्वम्। अन्यथा विशिष्टस्यानतिरेकेण[३] संयुक्त-संयोगादिपर्याप्तविषयताया अपि संयोगादिपर्याप्ततया व्यभिचारवारणासम्भवात्[४]। एवञ्च सामानाधिकरण्यमात्रावगाहिसिद्धिदशायामवच्छेदकावच्छेदेनानुमितिरप्युपपन्ना, अवच्छेदकावच्छेदेनानुमितेः पक्षतावच्छेदकावच्छिन्नत्वविशिष्टसंयोगादि-संसर्गकतया शुद्धसंयोगादिपर्य्याप्तसांसर्गिकविषयताकत्वाभावेन शुद्धसंयोगादिसंसर्गक-निर्णयात्मिकायाः सामानाधिकरण्यमात्रावगाहिसिद्धेरप्रतिबध्यत्वात्[५]। अवच्छिन्नसंयो-

१. पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकतापदेनात्र जातित्वावच्छिन्नावच्छेदकता लभ्यते पर्वतत्वनिष्ठयोरप्युद्देश्यतावच्छेदकतयोः सावच्छिन्नत्वनिरवच्छिन्नत्वाभ्यां परस्परं भेदात्। तन्निरूपकत्वस्यैवोद्देश्यतायां सत्त्वात्। एवमेव विधेयतांशेऽपि बोध्यम्।

२. तुल०—यादृशसम्बन्धावगाहिनिर्णयनिवर्त्यो यः संशयः—पक्षतादीधितिः।

३. शुद्धानतिरेकेण।

४. उक्तार्थकरणे संयोगनिष्ठसांसर्गिकविषयतायाः संयोगनिष्ठसांसर्गिकविषयतानिरूपकत्वेन नोक्तानुमितिप्रतिबन्धः। अत्रापि पर्याप्तिसङ्गमनप्रकारः पूर्ववदेवोहनीयः।

५. अवच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकव्यापकत्वं विधेयप्रतियोगिकसंसर्गे भासते। तथा च तत्र पक्षतावच्छेदकव्यापकत्वविशिष्टसंयोगनिष्ठसांसर्गिकविषयता भासते। सा च न शुद्धसंयोगपर्याप्ता। ननु विशिष्टस्य शुद्धानतिरिक्ततया पक्षतावच्छेदकत्वविशिष्ट-संयोगनिष्ठसांसर्गिकविषयताया अपि शुद्धसंयोगपर्याप्ततया सामानाधिकरण्यमात्रावगाहिसिद्धि-

गादिसंसर्गकानुमितौ च तादृशसंसर्गकसिद्धेः पृथक्प्रतिबन्धकत्वादवच्छेदकावच्छेदेन-सिद्धौ सत्यामवच्छेदकावच्छेदेन नानुमित्यापत्तिः। पर्वतो वह्निमानित्येतादृशसिद्धि-कालेऽपि वह्निमान् पर्वतो घटवान् वह्निमत्पर्वतवान् देश इत्याद्यनुमित्युदयात् प्रकारत्वं परित्यज्य विधेयत्वं निवेशनीयम्[1]। अनुमित्साकाले सत्यामपि सिद्धा-वनुमित्युपपत्तयेऽनुमित्साभावस्य प्रतिबन्धकतावच्छेदककोटौ निवेशः। घटानुमित्सा-काले सिद्धिसत्त्वे पर्वतो वह्निमानित्येतादृशानुमितिवारणाय पर्वतत्वावच्छिन्नो-द्देश्यकवह्नित्वावच्छिन्नविधेयकानुमितिगोचरेच्छात्वेन तादृशेच्छाया उत्तेजकत्वं स्वीकरणीयम्।

---

दशायामवच्छेदकावच्छेदेनानुमितिरनुपपन्ना स्यादिति चेन्न, विशिष्टं शुद्धान्नातिरिच्यत इति नियममस्वीकृत्यैतदुक्तत्वात्। संयोगनिष्ठसांसर्गिकविषयतायाः पर्वतत्वव्यापकत्व-विषयतानिरूपकत्वेऽपि तस्याः सांसर्गिकविषयतातिरिक्ततया किञ्चित्सांसर्गिकविषयत्वा-निरूपितत्वात्।

अथवा किञ्चित्सांसर्गिकविषयतास्थाने किञ्चिद्विषयिता वक्तव्या। संयोगनिष्ठसंसर्ग-तायाः पर्वतत्वव्यापकत्वविषयितानिरूपकतया नोक्तापत्तिः। तथा च किञ्चिद्धर्मावच्छिन्न-विषयिताऽनिरूपितत्वं संयोगनिष्ठसांसर्गिकविषयितायां विशेषणीयम्। तेन संयोगनिष्ठ-संसर्गतायाः संयोगत्वनिष्ठावच्छेदकतानिरूपितत्वेऽपि न क्षतिस्तादृशावच्छेदकतायाः निर-वच्छिन्नत्वेन किञ्चिद्धर्मानवच्छिन्नत्वात्।

ननु यत्र संयोगत्वस्य संयोगत्वत्वेनैव भानं तत्र का गतिः ? न चावच्छेदताभिन्नविषयि-त्वानिरूपितत्वं निवेश्यतामिति वाच्यम्, संसर्गविशेषणानां संसर्गतावच्छेदकत्वनियमेन पर्वतत्वव्यापकत्वनिष्ठविषयिताया अवच्छेदकत्वानतिरिक्तत्वात्। संयोगत्वनिष्ठावच्छेदकता-भिन्नविषयित्वानिरूपितत्वमपि न युक्तं सामानाधिकरण्यमात्रावगाहिसिद्धिस्थले प्रमेय-विशिष्टसंयोगत्वविशिष्टसंयोगेन वह्निमान् पर्वत इत्याद्यनुमित्यनुदयप्रसङ्गात्, प्रमेयत्व-विशिष्टसंयोगत्वस्य संयोगत्वानतिरिक्ततया संयोगत्वपर्याप्तावच्छेदकताभिन्नविषयित्वा-निरूपितत्वनिवेशेऽपि न तद्दोषपरिहार इति चेन्मैवम्, संयोगत्वत्वनिष्ठावच्छेदकताभिन्ना-वच्छेदकतानिरूपितविषयित्वानिरूपितत्वनिवेशेन तद्वारणादिति संक्षेपः।

१. विशेष्यत्वप्रकारत्वे परित्यज्योद्देश्यत्वविधेयत्वयोर्निवेश इत्याशयः। प्रकारतानिवेशे-प्रयोजनमाह—वह्निमान् पर्वतो घटवानित्यत्र। अत्र प्रकारताया घटत्वेनेव वह्नित्वे-नाप्यवच्छिन्नत्वेऽपि विधेयतायाः घटत्वमात्रावच्छिन्नत्वान्नानुपपत्तिः। अयमेव प्रकारता-विधेयतयोर्भेदो यद् विधेयताऽज्ञातविषयनिष्ठैव। प्रकारता तु पुनः प्रकारमात्रनिष्ठा। पर्वतो वह्निमान् पर्वते वह्निः इति ज्ञानद्वयेऽपि विधेयता वह्निनिष्ठैव। प्रकारता तु प्रथमे वह्निनिष्ठा द्वितीये पर्वतनिष्ठा। उद्देश्यताया निवेशे प्रयोजनमाह—वह्निमत्पर्वतवान् देश इत्यत्र। अत्र पर्वते यद्यपि वह्निनिष्ठप्रकारतानिरूपितविशेष्यता वर्तते, तथाप्युद्देश्यताया देशनिष्ठत्वान्नानुपपत्तिः।

अथानुमितिर्जायताम् इत्येतादृशेच्छाकाले पर्वतो वह्निमानित्येतादृशसिद्धिसत्त्वे घटानुमितिसामग्र्यां सत्यां वह्न्यनुमितिसामग्रीसत्त्वे पर्वतो वह्निमानित्येतादृशानुमित्यापत्तिः। न चेष्टापत्तिः, तदानीं तादृशसि[द्]ध्यप्रतिबध्यीभूतानुमित्युत्पत्तावपि तथाविधेच्छाविषयसि[द्]ध्या यत्किञ्चिज्ज्ञानं जायतामित्येतादृशेच्छायामिव तादृशेच्छायामपि तथानुमित्यनुत्पादात्। एवं वह्निविधेयकानुमितिर्जायतामित्येतादृशेच्छाकाले सि[द्]ध्यविषयीभूतपक्षे वह्न्यनुमितिसामग्रीसत्त्वे सिद्धिविषयीभूतपक्षेऽपि वह्न्यनुमित्यापत्तिः। तुल्ययुक्त्या तत्राप्यनुमित्यनुत्पादेनेष्टापत्त्यसम्भवात्। न च [1]स्ववृत्तिप्रतियोगिकत्वसम्बन्धेन कृतिविशिष्टस्य पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताभिन्नविधेयताशाल्यनुमितिप्रागभावस्यानुमित्सायामुत्तेजकत्वोपगमान्नोक्तस्थलेऽनुमित्यापत्तिः, तदानीं तथाविधानुमितिप्रागभावस्य सत्त्वादिति वाच्यम्, एवं सति पर्वते वह्निमनुमिनुयामितीच्छाकालेऽपि घटाद्यनुमितिसामग्रीसत्त्वे पर्वतो वह्निमानित्येतादृशानुमित्यनुदयापत्तेः। न च तादृशप्रागभावस्य स्वप्रतियोगिविषयकत्वस्वसामानाधिकरण्योभयसम्बन्धेनैवानुमित्सायामुत्तेजकत्वोपगमात्। तादृशानुमित्सायाश्च तादृशप्रागभावप्रतियोग्यविषयकतया स्वप्रतियोगिविषयकत्वघटितोभयसम्बन्धावच्छिन्नप्रतियोगिताकतादृशप्रागभावाभावविशिष्टत्वमप्यस्ये(स्त्ये)वेति वाच्यं, पर्वते वह्न्यनुमितिर्जायतामित्येतादृशेच्छायां पर्वतो वह्निमान् घटवांश्चेति समूहालम्बनानुमितेरपि विषयतया तस्यास्तादृशप्रागभावप्रतियोगिविषयकत्वस्याक्षतत्वात्।

न च पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितत्वावच्छिन्नवह्निविधेयकत्वप्रकारताकानुमितिगोचरेच्छात्वेनानुमितोच्छाया उत्तेजकत्वोपगमान्नोक्तापत्तिरिति वाच्यम्, तथा सत्यन्यानुमितिसामग्र्यसमवधानकालीनानामनुमितिर्जायतामित्येतादृशेच्छानामसङ्ग्रहप्रसङ्गात्। न च पर्वते वह्निमनुमिनुयामित्याकारिकेच्छानां पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितत्वावच्छिन्नवह्निविधेयताकत्वप्रकारताकानुमित्सात्वेना[2]नुमितित्सात्वेनानुमितिर्जायतामित्येतादृशेच्छानाञ्च निरुक्तप्रागभावाभावविशिष्टपर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितिगोचरेच्छात्वेन निरुक्तप्रागभावाभावविशिष्टपर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयतान्यविधेयताशून्यानुमितिगोचरेच्छात्वेन वेति न कश्चिद्दोष इति वाच्यम्, वह्निमनुमिनुयामित्येतादृशेच्छाकाले घटाद्यनुमितिसामग्रीसत्त्वे सि[द्]ध्यविषयीभूत-पक्षे वह्न्यनुमितिसामग्र्यामसत्यां पर्वतो वह्निमानित्येतादृशानुमित्यनुदयापत्तेः। यदि न वह्निमनुमिनुयामित्येतादृशेच्छानां स्ववृत्तिप्रतियोगिकत्वं सम्बन्धेन कृतिविशिष्टवह्निविधेयतानिरूपितपर्वतत्वान्यधर्मावच्छिन्नविशेष्यताकानुमितिप्रागभावमुत्तेजकीकृत्य वह्निविधेयकत्वप्रकारकानुमित्सात्वेन पृथगुत्तेजकत्वमभ्युपगम्ये(म्यै) तादृशदोषो वार्यते, तथाऽप्यनुमितिर्जायतामित्येतादृशेच्छा-

---

१. ले० टि० प्रतियोगिनि स्ववृत्तित्वं कालिकतया ।

२. लि० पुस्तके अत्र 'न, ऽनु' इत्यंशः स्पष्टतार्थं लेखकेन दत्तः ।

काले पर्वते वह्निघटयोर्निश्चयसत्त्वे वह्निघटोभयव्याप्यपरामर्शसत्त्वे तुल्ययुक्त्या द्वयोरेवानुमित्युत्पत्त्या व्यभिचारो दुरुद्धार एव। तादृशेच्छाया अन्यविधेयकानुमितिप्रतियोगिककृतिविशिष्टप्रागभावविशिष्टत्वेनानुत्तेजकत्वाद् इति चेन्मैवम्, यादृशेच्छानामुपदर्शितानुगतरूपेणोत्तेजकत्वसम्भवस्तासां तेन रूपेणोत्तेजकत्वमित्युपेयते तादृशरूपानाक्रान्तानामुपदर्शितानाञ्च तत्तद्व्यक्तित्वेनेति न काप्यनुपपत्तिः। उत्तेजकाननुगमस्यादोषत्वात्। न च पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताशालिज्ञानं जायतामित्येतादृशेच्छाकाले पर्वतो वह्निमानित्येतादृशशाब्दबोधादिसामग्रीसत्त्वेऽपि सिद्धिकालेऽनुमित्यापत्तिः। तादृशेच्छानां पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितत्वावच्छिन्नवह्निविधेयकत्वप्रकारताकानुमित्सात्वरूपानुगतरूपेणोत्तेजकत्वात्। अनुमितित्वप्रकारकत्वं निवेश्यैतादृशेच्छावारणे त्वसत्यामपि तादृशशाब्दबोधादिसामग्र्यामनुमित्यनुदयप्रसङ्ग इति वाच्यम्, तादृशशाब्दसामग्रीदशायां तया प्रतिबन्धादेवानुमितिवारणसम्भवात् तादृशेच्छासाधारणरूपेणानुमित्सानां सिद्धावुत्तेजकत्वोपगमेऽपि क्षतिविरहात्। न च शाब्दादिसामग्र्यामप्यनुमित्साया उत्तेजकत्वादनुमित्सासत्त्वे शाब्दसामग्र्येव कथमनुमितिं प्रतिबध्नात्विति वाच्यम्, तत्रानुमितित्वप्रकारकत्वेनैवानुमित्साया उत्तेजकत्वोपगमात्।

अथ यत्र वह्निव्याप्यधूमवान्वह्निव्याप्यधूमव्याप्यवांश्च पर्वत इत्येतादृशसमूहालम्बनानन्तरमनुमित्सा, तदनन्तर ( रं ) पर्वतो वह्निमान्व्याप्यवांश्चेत्येतादृशसमूहालम्बनानुमितिस्तदनन्तरं पुनरनुमित्यापत्तिः, अनुमित्सायाः प्राक् सत्त्वादिति चेन्मैवम्, स्वविषयसि[द्]ध्यनुपहितत्वेनेच्छाया विशेषणीयतया विषयसिद्ध्यन्तरमनुमित्यापादनासम्भवात्।

न च स्वत्वाननुगमः, विषयितासम्बन्धावच्छिन्नप्रतियोगिकसि[ द् ]ध्यभावत्वस्यैव स्वविषयसि[ द् ]ध्यनुपहितत्वपदार्थत्वात्। न चानुमितिद्वयं जायतामितीच्छाकाल एकानुमित्यनन्तरमनुमित्यनुदयप्रसङ्ग इति वाच्यम्, तादृशेच्छायाः सि(द्)ध्यभाववैशिष्ट्यमनिवेश्य पृथगुत्तेजकत्वोपगमात्।

अथालोकेनानुमितिर्जायतामित्येतादृशेच्छासत्त्वे.. सिद्धिसत्त्वे धूमपरामर्शादनुमित्यापत्तिः। किञ्चिल्लिङ्गकत्वाप्रकार[क]त्वेन तादृशेच्छावारणे तु धूमलिङ्गकत्वप्रकारकेच्छाकालेऽपि धूमपरामर्शादनुमित्यनुदयापत्तिः।

मैवम्, तत्तल्लिङ्गकानुमितिं प्रति तत्तल्लिङ्गकत्वप्रकारकानुमित्साविरहविशिष्टसि(द्)ध्यभावत्वेन हेतुताऽतो नान्यलिङ्गकेच्छासत्त्वेऽन्यलिङ्गकपरामर्शादनुमित्यापत्तिः। न च धूमपरामर्शकाल आलोकलिङ्गकत्वाद्यवच्छिन्नविशेष्यकधूमलिङ्गकत्वप्रकारकत्वप्रकारकेच्छासत्त्व एकत्र द्वयमिति रीत्या वा तदुभयलिङ्गकत्वप्रकारकेच्छासत्त्वेऽनुमित्यापत्तिः। तादृशधूमपरामर्शेनानुमितिजननेऽपि तादृशेच्छाविषयसिद्धिविरहादिष्टापत्तेर-

योगात्। धूमान्यलिङ्गकत्वाप्रकारकत्वेनानुमित्साविशेषणे तु धूमेनानुमिनुयामालोकेन चानुमिनुयामित्येतादृशसमूहालम्बनेच्छाया असङ्ग्रह इति वाच्यम्, धूमान्यलिङ्गकत्वप्रकारकत्वानिरूपितानुमितिनिष्ठविशेष्यताशालित्वेनोत्तेजकत्वोपगमात्। समूहालम्बने च प्रकारताभेदेन विशेष्यताभेदाद्धूमलिङ्गकत्वप्रकारकतानिरूपितविशेष्यताया आलोकादिलिङ्गकत्वप्रकारत्वानिरूपितत्वेनानुपपत्त्यभावात्। अत एव च पर्वते वह्निमनुमिनुयामित्याकारिकाया लिङ्गमिश्रितेच्छाया[अ]पि सङ्ग्रहः, तादृशेच्छानिरूपितानुमितिनिष्ठविशेष्यताया[म]प्यन्यलिङ्गकत्वप्रकारत्वानिरूपितत्वात्।

अथ परामर्शजन्यतात्वादिरूपेणालोकादिपरामर्शजन्यत्वरूपान्यलिङ्गकत्वप्रकारिकायाः परामर्शजन्यज्ञानं जायतामित्येतादृशेच्छायाः सङ्ग्रहाय धूमान्यत्वविषयकपरामर्शजन्यतात्वावच्छिन्नप्रकारत्वानिरूपितत्वं निवेशनीयम्। एवञ्चालोकपरामर्शजन्यानुमितिर्जायतामित्येतादृशेच्छावारणमशक्यम्। तादृशेच्छाया धूमान्यत्वाविषयकतया तद्घटितपरामर्शजन्यतावच्छिन्नप्रकारताशून्यत्वादिति चेन्न, धूमावृत्तिधर्मावच्छिन्न[1]प्रकारतानिरूपितविषयित्वप्रकारतानिरूपितपरामर्शीयप्रकारतानिरूपितजन्यत्वप्रकारत्वानिरूपितत्वस्य निवेशेनानुप[प]त्त्यभावात्। द्रव्यविषयकपरामर्शजन्यानुमितिर्जायतामित्याकारकेच्छासङ्ग्रहाय धूमान्यत्वमपहाय धूमत्वविरुद्धत्वं निवेशितम्। द्रव्यत्वावच्छिन्नविषयताशालिपरामर्शजन्यानुमितिर्जायतामित्येतादृशेच्छावारणाय च धूमत्वान्यधर्मप्रकारतानिरूपितावच्छिन्नत्वप्रकारतानिरूपितविषयित्वप्रकारतानिरूपितपरामर्शत्वप्रकारतानिरूपितजन्यत्वप्रकारत्वानिरूपितत्वमपि तादृशविशेष्यतायां निवेशनीयमिति।

यत्तु सिद्धेः प्रतिबन्धकतायामन्यलिङ्गकेच्छासाधारणेन पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितत्वावच्छिन्नवह्निविधेयत्वप्रकारताकानुमित्सात्वेनैवेच्छानामुत्तेजकत्वं स्वीक्रियते। अन्यलिङ्गकानुमित्साकालेऽनुमितिवारणाय तत्तल्लिङ्गकानुमितिं प्रति तदन्यलिङ्गकेच्छायाः कामिनीजिज्ञासावत् पृथक् प्रतिबन्धकत्वं कल्प्यते[2]। धूमेनालोकेन च वह्निमनुमिनुयामित्येतादृशसमूहालम्बनेच्छाकालेऽनुमित्युपपत्तये तल्लिङ्गकेच्छाभिन्नत्वमपि प्रतिबन्धकतावच्छेदककोटौ निवेश्यम्[3]। इत्थञ्च धूमलिङ्गकानुमितिं

---

१ ले० टि० धूमत्वविरुद्धधर्मावच्छिन्नेति यावत्।

२. तत्तल्लिङ्गकत्वमिच्छाविषयानुमितौ न निवेश्यते तदन्यलिङ्गकेच्छायाः प्रतिबन्धकतयैवोपपत्तेः। अन्यलिङ्गकानुमित्साकालेऽन्यलिङ्गकेच्छाभावरूपप्रतिबन्धकाभावरूपकारणाभावादेवानुमितिरिति तत्तल्लिङ्गकत्वमिच्छाविशेषणतया नावश्यकमित्याशयः।

३. समूहालम्बनेच्छाया आलोकलिङ्गकत्वघटिततया तदन्यलिङ्गकात्मकत्वेन तत्सत्त्वेऽनुमित्यनापत्तिः। तत्तल्लिङ्गकेच्छाभिन्नत्वनिवेशे च समूहालम्बनानुमित्सायास्तत्तल्लिङ्गकेच्छाऽभिन्नतया नानुपपत्तिरित्याशयः।

प्रति धूमान्यलिङ्गकत्वप्रकारत्वानिरूपितपर्वतत्वावच्छिन्नोद्देश्यतानिरूपितत्वावच्छिन्न-वह्निविधेयत्वप्रकारतानिरूपितानुमितिनिष्ठविशेष्यताकान्यपर्वतत्वावच्छिन्नोद्देश्यतानि - रूपितवह्निविधेयत्वप्रकारकानुमितिगोचरेच्छात्वादिना प्रतिबन्धकता बोध्या। उभय-लिङ्गकानुमित्सायाञ्चानुमितिनिष्ठविशेष्यताभेदात्तदन्यलिङ्गकत्वप्रकारताऽनिरूपित - विशेष्यताया अपि सत्त्वान्न प्रतिबन्धकत्वापत्तिः। अन्यलिङ्गकत्व(त्वा)प्रकारकत्वञ्च न निवेश्यते प्रयोजनाभावात्।

न च यत्र क्रमेण धूमलिङ्गकेच्छाऽऽलोकलिङ्गकेच्छा च तत्रानुमित्यनुदयापत्ति-र्धूमलिङ्गकेच्छाभिन्नेच्छायाः प्रतिबन्धिकायाः सत्त्वादिति वाच्यम्, योग्यात्मविशेष-गुणानां युगपदनुत्पत्त्येच्छाद्वयपरामर्शानां(णां) त्रयाणां युगपदवस्थानासम्भवेन तत्रानु-मित्यनुत्पादस्य सर्वसम्मतत्वात्[१]। न चापेक्षाबु[द्]ध्यात्मकपरामर्शस्थले त्रयाणां युग-पदवस्थानं सम्भवतीति वाच्यम्, उपदर्शितस्थले द्वित्वनिर्विकल्पकानुत्पत्त्या द्वे द्रव्ये इत्येतादृशविशिष्ट(ष्ट)प्रत्यक्षानुत्पत्त्या तादृशपरामर्शस्य क्षणत्रयावस्थायित्वस्याप्रामा-णिकतया तादृशत्रयस्य[२]युगपदवस्थानस्याप्यप्रामाणिकत्वात्।

अस्तु वा तल्लिङ्गकेच्छाभावविशिष्टेच्छाया एव प्रतिबन्धकत्वमतो न काप्यनुप-पत्तिः।

अथैतन्मतेऽन्यलिङ्गकेच्छाया लिङ्गभेदेन प्रतिबन्धकत्वं कल्पनीयम्, एवं सिद्धे-रप्यपरमेकप्रतिबन्धकत्वमित्येतदपेक्षया लिङ्गभेदेन सिद्धेः प्रतिबन्धकत्वमेवोचित-

---

१. अत्रेदमवधेयम्—एकक्षणावच्छेदेनेच्छाद्वयात्मकं समूहालम्बनं सम्भवति; किन्तु स्वातन्त्र्येणे-च्छाद्वयं न सम्भवति योग्यविभुविशेषगुणानां युगपदवस्थानासम्भवात्। क्षणव्यत्यासस्वीकारे चालोकलिङ्गकेच्छया धूमलिङ्गकेच्छानाशादुत्तरक्षणे आलोकलिङ्गकानुमितिरेव, न पुनर्धूमलिङ्गकानुमितिः, धूमलिङ्गकेच्छाया आलोकलिङ्गकानुमित्यव्यवहितप्राक्क्षणेऽ-भावात् तया प्रतिबन्धासम्भवात्। तथा चानुमित्यनुत्पादस्य सर्वसम्मतत्वादित्यस्य धूमलिङ्ग-कानुमित्यनुत्पादः सर्वसम्मत इत्याशयः, तत्रालोकलिङ्गकानुमितेर्वारयितुमशक्यत्वात्। युगपदिच्छाद्वयोत्पत्त्यात्मकस्थलस्यैवाप्रसिद्धया तत्रानुमित्युत्पादानुत्पादादिचर्चाया एवा-शक्यत्वादिति।

अत्र 'इच्छाद्वयपरामर्शाणां त्रयाणाम्' इत्यत्र त्रिषु परामर्शप्रवेशः प्राचीनमतानुसारेण। नव्यैस्तु ज्ञानेच्छायौगपद्यं स्वीक्रियत एव। (द्र० पृ० १८)

केचित्तु ज्ञानयोरपि सजातीययोरेव यौगपद्यं निषिध्यते "ज्ञानयौगपद्यप्रवादस्तु प्रत्यक्षानुमित्यादिविरुद्धजातीयज्ञानद्वयस्य युगपदनुत्पत्तिपरः [ अनुमितिपरामर्शकार्यकारण-भावविचारः—महादेवः। सं० डॉ० राजारामशुक्लः, प्र० संस्करणम्, सं० सं० विश्व-विद्यालयः, वाराणसी वि० सं० २०५१ ]

२. इच्छाद्वयं परामर्शश्चेति त्रयाणाम्।

मिति वाच्यम्, लिङ्गभेदेनाप्रामाण्यग्रहाभावघटितगुरुधर्मावच्छिन्नप्रतिबन्धकत्वकल्पनापेक्षया[1]ऽन्यलिङ्गकेच्छाया लिङ्गभेदेन प्रतिबन्धकत्वस्य कल्पयितुमुचितत्वात्। न चान्यलिङ्गकेच्छायाः प्रतिबन्धकत्वे भिन्नविषयकप्रत्यक्षादिकं प्रत्यनुमितिसामग्रीप्रतिबन्धकतायामन्यलिङ्गकेच्छाभावसि[द्]ध्यभावयोरुभयोर्निवेशेन गौरवं मन्यते, तत्र सि[द्]ध्यभावमात्रस्य निवेशादिति वाच्यम्, अन्यलिङ्गकेच्छायाऽ(अ)प्रतिबन्धकत्वमतेऽन्यलिङ्गकेच्छाकाले विरोधिसामग्रीसत्त्वेऽनुमितिवारणाय तत्तल्लिङ्गकेच्छामुत्तेजकीकृत्य नानाविधविरोधसामग्र्या अपि लिङ्गभेदेन प्रतिबन्धकत्वस्य कल्पनापेक्षया महागौरवात्। मन्मते तत्रान्यलिङ्गकेच्छायाः प्रतिबन्धकत्वेनैवानुमितिवारणसम्भवात्। विरोधिसामग्र्यां साधारणरूपेणैवेच्छाया उत्तेजकत्वोपगमेन लिङ्गभेदेन सामग्रीप्रतिबन्धकतावच्छेदकभेदाभावादिति, तदसत्, धूमपरामर्शादिकालेऽसत्यां सिद्धौ घटाद्यनुमित्सासत्त्व इवालोकादिलिङ्गकेच्छादिसत्त्वेऽप्यनुमित्युत्पादस्यानुभवसिद्धतयान्यलिङ्गकेच्छाप्रतिबन्धकत्वकल्पनस्यासम्भवात्।

अथ तल्लिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टतदन्यलिङ्गकेच्छात्वेनैव प्रतिबन्धकत्वोपगमान्न सिद्धिशून्यकालेऽन्यलिङ्गकेच्छासत्त्वेऽनुमित्यनुपपत्तिरिति चेत् तर्हि गतमुपदर्शितलाघवेन, आपतितञ्च महागौरवं लिङ्गभेदेन भिन्नानन्तप्रतिबन्धकतायां निश्चयो(या)जनकान्यलिङ्गकेच्छारूपविशेष्यांशनिवेशस्याधिक्यात्, अनुमित्सासामान्यशून्यकाले सिद्धौ सत्यामनुमित्यापत्तिवारणाय सिषाधयिषाविरहविशिष्टसिद्धेः प्रतिबन्धकत्वान्तरकल्पनस्याधिक्याच्चेति। न चान्यलिङ्गकेच्छानिवेशेऽपि तादृशान्यलिङ्गकेच्छाशून्यकालीनसिद्धिकालीनाननुगतेच्छानामनुत्तेजकत्वेन लाघवमिति वाच्यम्, अन्यलिङ्गकेच्छानिवेशेऽपि तादृशेच्छानां सिद्धिप्रतिबन्धकतायामुत्तेजकत्वस्यावश्यकतया लाघवानवकाशात्।

अथ तल्लिङ्गकानुमितौ तत्तल्लिङ्गकेच्छाविरहविशिष्टसिद्धिप्रतिबन्धकतामतेऽन्यलिङ्गकेच्छाकालीनाननुगतसहस्रानुमित्साभावानामेकत्र निवेशनीयतया तेषां परस्परं विशेषणविशेष्यभावे विनिगमनाविरहात् प्रतिबन्धकताबाहुल्यप्रसङ्गः। अन्यलिङ्गकेच्छाप्रतिबन्धकत्वकल्पे त्वन्यलिङ्गकेच्छाकालीनानामनुमित्सानामन्यलिङ्गकेच्छाप्रतिबन्धकतायां तच्छून्यकालीनानाञ्च सिद्धिप्रतिबन्धकतायामेवोत्तेजकत्वमिति न तावतामभावानामेकत्रनिवेश इति लाघवमिति चेत्? एतादृशतर्कगवेषणायां सिद्धिप्रतिबन्धकतायां तत्साध्यकानुमिति-तदन्यसाध्यकानुमितिगोचरेच्छासाधारणरूपेणैवेच्छाया उत्तेजकत्वम्, अन्यसाध्यकानुमित्सा-प्रत्यक्षेच्छादिकाले सिद्धिसत्त्वेऽनुमितिवारणाय च तासामपि सिद्धिविशिष्टत्वेन प्रतिबन्धकत्वान्तरं किन्न स्वीक्रियते। तथा

---

१. अप्रामाण्याभावविशिष्टाया एव सिद्धेः प्रतिबन्धकत्वात्।

सत्यपि तादृशेच्छाकालीनतच्छून्यकालीनाननुगतानुमित्सानामेकत्रानुत्तेजकतया लाघवसम्भवात् ।

अत्रेदमवधेयम्—यत्र सि[द्]ध्यात्मकपरामर्शानन्तरमालोकेन पर्वते वह्निमनुमिनुयां धूमेन च किञ्चिदनुमिनुयामित्याकारिका समूहालम्बनेच्छा तदनन्तरं धूमलिङ्गकानुमितिस्तत्र तादृशानुमित्युपपत्तये तत्तल्लिङ्गकेच्छाविरहविशिष्टसिद्धिप्रतिबन्धकतामते तादृशेच्छायास्तद्व्यक्तित्वेन सामानाधिकरण्यसम्बन्धावच्छिन्नाभावः सिद्धौ निवेशनीयः, धूमलिङ्गकानुमितिस्थलीयप्रतिबन्धकतायां तादृशेच्छाया अनुगतरूपेणोत्तेजकत्वाभावात् । एवञ्च तत्कालीनसंयोगविभागव्यक्तीनामपि तत्तद्व्यक्तित्वावच्छिन्नाभावा विनिगमनाविरहेण निवेशनीया इति गौरवम् । अस्मन्मते त्वन्यलिङ्गकेच्छायां तादृशेच्छाव्यक्तेर्भेद एव निवेश्यते । तत्र च इदानीन्तनसंयोगविभागाभावानां निवेशमादाय न विनिगमनाविरहः । संयोगादिव्यक्तीनां सामानाधिकरण्यसम्बन्धावच्छिन्नाभावस्यैव निवेशनीयतया तदपेक्षया तदिच्छाव्यक्तिभेदनिवेशे लाघवात् ।

न च मन्मतेऽपि तत्र तादृशेच्छाया उत्तेजकत्वं नोपेयते; किन्तु तत्तत्सिद्धिभेद एव सिद्धौ निवेश्यत इति गौरवमिति वाच्यम्, तथा सति तादृशसि[द्]ध्युत्पत्तिद्वितीयक्षण एवानुमित्युत्पादप्रसङ्गात् । न चेच्छाजनकसामग्र्याः प्रतिबन्धकत्वादेव न तदाऽनुमितिरिति वाच्यम्, ज्ञानेच्छायौगपद्यस्य नवीनै(नैः)स्वीकृतत्वादिच्छासामग्र्या अनुमितिप्रतिबन्धकत्वस्यैवासिद्धत्वात् । न चैवमन्यसाध्यकानुमित्साप्रत्यक्षादिगोचरेच्छासाधारणसिद्धिविशिष्टेच्छात्वेनैव प्रतिबन्धकत्वमास्तां कृतं प्रकृतसाध्यविधेयत्वप्रकारकत्वादिनिवेशनेन । सिद्धावपि साधारणरूपेणैवोत्तेजकत्वमभ्युपगम्य व्यभिचारस्य वारयितुं शक्यत्वादिति वाच्यम्, तथा सति तादृशसमूहालम्बनेच्छानन्तरं तत्पूर्वमेव वा यत्र घटानुमितिगोचरेच्छा तत्र तादृशसमूहालम्बनेच्छाभिन्नायास्तादृशघटानुमित्यादिगोचरेच्छाया एव प्रतिबन्धिकायाः सत्त्वेनानुमित्यनुत्पादप्रसङ्गात् । तदुपपत्तये तादृशेच्छाया अपि भेदनिवेशने गौरवादिति दिक् ।

अथ धूमालोकोभयलिङ्गकपरामर्शकाले सिद्धिसत्त्व आलोकलिङ्गकेच्छामात्रसत्त्वेऽप्यनुमित्युत्पत्त्या तादृशानुमितेश्च धूमपरामर्शजन्यत्वरूपधूमलिङ्गकत्वाक्रान्ततया धूमलिङ्गकेच्छाविरहविशिष्टसि[द्]ध्यभावस्य चासत्त्वेन व्यभिचारः[१] । अन्यलिङ्गकेच्छायाः प्रतिबन्धकत्वकल्पेऽपि तत्र धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्ठा(ष्टा)न्यलिङ्गकेच्छाभावस्याप्यसत्त्वेन व्यभिचारः[२] ।

---

१. धूमलिङ्गकपरामर्शोत्तरजायमानानुमितिं प्रति धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावस्य कारणत्वेन निरुक्तस्थले जाताया आलोकलिङ्गकेच्छाया अपि धूमालोकोभयलिङ्गकपरामर्शजन्यत्वेन धूमलिङ्गकपरामर्शजन्यत्वात् तां प्रति धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावस्य कारणतया निरुक्तस्थले च तस्यासत्त्वाद् व्यभिचारः ।

२. तथा च प्रतिबन्धकाभावरूपकारणस्याभावेऽपि कार्योत्पत्त्या व्यभिचार इत्याशयः ।

अत्र केचित्— तल्लिङ्गकेच्छाविरहविशिष्टसि[द्]ध्यभावजन्यतावच्छेदकं तदन्यलिङ्गकपरामर्शाजन्यानुमितित्वम् । न चैवं धूमालोकोभयलिङ्गकानुमितेर्धूमान्यलिङ्गकपरामर्शजन्यतया चा(च ?)लोकलिङ्गकेच्छाविरहविशिष्टसि[द्]ध्यभावजन्यतावच्छेदकानाक्रान्तत्वात् । सिद्धिकाले विनैवेच्छामुभयलिङ्गकपरामर्शसत्त्वात्तादृशानुमित्यापत्तिरिति वाच्यम्, उभयादिलिङ्गकानुमितिं प्रत्युभयलिङ्गकत्वादिप्रकारकेच्छाविरहविशिष्टसि[द्]ध्यभावस्य हेतुत्वात्तादृशकारणविरहेणापत्त्यसम्भवात् । न चोभयलिङ्गकपरामर्शदशायां सिद्धिसत्त्वे धूमलिङ्गकत्वादिप्रकारकेच्छामात्रसत्त्वेऽप्यनुमित्युत्पत्त्योभयलिङ्गकत्वप्रकारकेच्छाविरहविशिष्टसिद्ध्यभावस्य तत्र व्यभिचार इति वाच्यम्, उभयादिलिङ्गकेच्छाविरहविशिष्टसिद्धिप्रतिबन्धकतायां धूमलिङ्गकानुमितिर्जायतामित्येतादृशेच्छानामप्युत्तेजकत्वोपगमात् । न चैवमेकैकलिङ्गक[त्व]द्वितयादिलिङ्गक[त्व]भेदेन प्रतिबन्धकताबाहुल्यान्नैवमिति वाच्यम्, एतादृशगौरवस्य प्रामाणिकत्वादित्याहुः, तच्चिन्त्यम्, धूमान्यलिङ्गकपरामर्शाजन्यानुमितित्वादेर्धूमादिलिङ्गकेच्छाविरहविशिष्टसि[द्]ध्यभावादिजन्यतावच्छेदकत्व उभयादिलिङ्गकपरामर्शकाले सि[द्]ध्यसत्त्वे तादृशसि[द्]ध्यभावरूपकारणबलाद्धूमान्यलिङ्गकपरामर्शाजन्यानुमितित्वावच्छिन्नापत्तेः । धूमान्यलिङ्गकपरामर्शाजन्यानुमितित्वावच्छिन्नं प्रति धूमान्यलिङ्गकपरामर्शत्वादिना प्रतिबन्धकत्वादिकल्व(त्व?)ल्पनेऽतिगौरवाद् आलोकादिलिङ्गकनिखिलपरामर्शसाधारणधूमान्यलिङ्गकपरामर्शत्वस्य दुर्वचत्वेन[1] तादृशप्रतिबध्यप्रतिबन्धकभावस्य कल्पयितुमशक्यत्वाच्च ।

अत्राहुः —धूमलिङ्गकेच्छाविरहविशिष्टसिद्धेः प्रतिबन्धकतायां धूमलिङ्गकेच्छाया इवालोकपरामर्शविशिष्टालोकलिङ्गकेच्छाया अप्युत्तेजकत्वं स्वीक्रियते । आलोकपरामर्शासत्त्व आलोकमात्रलिङ्गकेच्छायां सत्यां सिद्धिसत्त्वे धूमलिङ्गकानुमित्यापत्तिवारणायालोकलिङ्गकेच्छायामालोकपरामर्शवैशिष्ट्यनिवेशः । एवमालोकपरामर्शसत्त्वे सिद्धिस्थलेऽनुमित्यापत्तिवारणायालोकलिङ्गकेच्छानिवेशनम् । एवं धूमलिङ्गकपरामर्शकाले रूपमात्रलिङ्गकेच्छाविशिष्टरूपलिङ्गकपरामर्शसत्त्वे सिद्धिकालेऽनुमित्युपपत्तये रूपलिङ्गकपरामर्शविशिष्टरूपलिङ्गकेच्छाया अप्युत्तेजकत्वं स्वीकरणीयम् । एवं परामर्शविशिष्ट सकललिङ्गकेच्छानामेवोत्तेजकत्वं बोध्यम् । एवञ्चान्यलिङ्गकानुमितौ व्यभिचाराभावेन धूमलिङ्गकत्वादिकं कार्यतावच्छेदककोटौ न निवेशनीयम् । न च धूमलिङ्गकत्वस्य कार्यतानवच्छेदकत्वे धूमलिङ्गकपरामर्शशून्यकाले धूममात्रलिङ्गकेच्छासत्त्वे सिद्धिसत्त्वे सति चालोकादिपरामर्श(र्शे) तादृशपक्षताकार्यतावच्छेदकावच्छिन्नापत्तिः । धूमलिङ्गकेच्छाभाभा(भा ? )वासत्त्वेन धूमलिङ्गकेच्छाभावघटिताभावकूटविशिष्टसिद्धेरभावसत्त्वादिति वाच्यम्, एतादृशसिद्ध्यभावेन फलजनेन धूमलिङ्गकपरामर्शस्य सहकारित्वात्तदभावेनापत्तेरशक्य-

१. लै. टि. परामर्शवादोक्तरीत्येत्यर्थः ।

त्वात्। न चालोकलिङ्गकपरामर्शकालेऽपि तादृशसिद्ध्यभावेनानुमितिजननादालोकादिपरामर्शस्यापि तत्सहकारित्वकल्पनमावश्यकमिति तदानीमनुमित्यापत्तिर्दुर्वारैवेति वाच्यम्, आलोकलिङ्गकेच्छाविरहविशिष्टधूमादिपरामर्शविशिष्टधूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावसहकृतालोकलिङ्गकपरामर्शघटितसामग्रीत एवालोकलिङ्गकानुमितिनिर्वाहे तदनुरोधेन धूमलिङ्गकेच्छाभावादिविशिष्टसिद्ध्यभावालोकपरामर्शघटितसामग्र्याः पृथग्व्याप्यतानभ्युपगमेनापत्त्यनवकाशात्। स्फुटीभविष्यति चेदमुपरिष्टात्।

वस्तुतस्तु धूमान्यसकललिङ्गकेच्छानामेव तत्तल्लिङ्गकपरामर्शविशिष्टानामुत्तेजकत्वे धूमलिङ्गकेच्छाया अपि धूमपरामर्शविशिष्टाया एवोत्तेजकत्वमभ्युपेयते। इत्थञ्च धूममात्रलिङ्गकेच्छाऽऽलोकादिमात्रलिङ्गकपरामर्शकाले सिद्धिसत्त्व एतादृशसिद्ध्यभावासत्त्वेनानुमितेरापादयितुमशक्यत्वात्तादृशसिद्ध्यभावस्यैव सकलपरामर्शसहकारित्वसम्भवेनान्यादृशसिद्ध्यभावस्य हेतुत्वकल्पनं विनैवोपपत्तेः। एक एवानुमितिपक्षतयोः कार्यकारणभाव इति। एतन्मते धूमलिङ्गकेच्छाया धूमलिङ्गकपरामर्शविशिष्टाया उत्तेजकत्वे धूमलिङ्गकपरामर्शस्य धूमलिङ्गकेच्छाविशिष्टस्यैवोत्तेजकत्वे विनिगमकाभावेनैकप्रतिबध्यप्रतिबन्धकभावाधिक्याल्लिङ्गभेदेन तद्बाहुल्याभावेन लाघवस्यातिस्फुटत्वादिति।

न चेत्थं लिङ्गविशेषेणापि नियन्त्रितं पक्षत्व[1]मिति ग्रन्थासङ्गतिरिति वाच्यम्, यत्साध्यकानुमितिस्थले सिद्धिकाले तल्लिङ्गकेच्छायामसत्यामन्यलिङ्गकेच्छाविशिष्टतदन्यलिङ्गकपरामर्शसमवधानं कदापि नासीत्तत्र व्यभिचाराभावेन परामर्शविशिष्ठा(ष्टा)नुमित्साभावकूटस्यानिवेशात्तल्लिङ्गत्वस्यैव कार्यतावच्छेदककोटिप्रवेशात्तादृशस्थलाभिप्रायेणैव तत्सङ्गतेः।

परे तु धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावविशिष्टानुमितित्वं धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावजन्यतावच्छेदकम्। सिद्ध्यभाववैशिष्ट्यञ्च स्वसामानाधिकरण्य-स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन। इत्थञ्च न समूहालम्बनपरामर्शजन्यानुमितौ व्यभिचारस्तादृशानुमितेः कार्यतावच्छेदकानाक्रान्तत्वात्। एवञ्च लिङ्गविशेषेणापीति ग्रन्थः सुतरामेव सङ्गच्छते।

अथ धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टानुमितेः समूहालम्बनकाले प्रसिद्धायाः धूममात्रलिङ्गकपरामर्शकाले सिद्धिसत्त्वेऽसत्याञ्चानुमित्सायामापत्तिरिति चेत् कीदृशधर्मावच्छिन्नमापद्यते? न तावत्तादृशसिद्धिविशिष्टानुमितित्वावच्छिन्नं, तादृशधर्मस्य कस्यचिज्जन्यतानवच्छेदकत्वात्[2]। नापि तत्तद्व्यक्तित्वावच्छिन्नं, तदव-

१. पक्षतादीधितिः; २. ले० टि० किञ्चिन्निरूपितेत्यर्थः। (किञ्चिन्निरूपितजन्यतानवच्छेदकत्वादित्याशयः।)

छिन्नहेतुभूततदव्यवहितपूर्वक्षणवृत्तितत्परामर्शादिव्यक्तीनामभावात्। अथ धूमलिङ्गक-परामर्शजन्यतावच्छेदकीभूतधूमलिङ्गकानुमितित्वावच्छिन्नापत्तिरिति चेन्न, धूमलिङ्ग-केच्छाविरहविशिष्टसिद्ध्यभावरूपसहकारिविरहात्। न च तादृशसिद्ध्यभावरूप-सहकारिविरहदशायामपि समूहालम्बनपरामर्शकाले धूमलिङ्गकानुमितेरुत्पत्त्याऽत्राप्यु-त्पद्येतेति वाच्यम्, तद्धर्माश्रययत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकी-भूता यावन्तो धर्माः प्रत्येकं तदाश्रयसत्त्वे तदुत्तरक्षणे तद्धर्मावच्छिन्नसत्त्वमित्येव सामग्रीव्याप्तेरवधारणात्। निरुक्तस्थले च धूमलिङ्गकानुमितित्वावच्छिन्नधूममात्र-लिङ्गकानुमित्यात्मके यत्किञ्चिद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकयावदन्तः-पातिधूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावत्वरूपधर्मावच्छिन्नस्यासत्त्वेन तादृशधर्मा-वच्छिन्नालोकादिलिङ्गकानुमितिनिष्ठकार्यतानिरूपितकारणतावच्छेदकयावदतर्गता-लोकलिङ्गकपरामर्शत्वतल्लिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावत्वाद्यवच्छिन्नस्य चास-त्त्वेन तदानीं धूमलिङ्गकानुमितित्वावच्छिन्नस्यापादकाभावात्।

अथ साधारणोक्तेरकिञ्चित्करतया यत्तदादिपदार्थपर्यालोचने बाधाभावादि-सहकृतधूमलिङ्गकपरामर्शो यदा तदव्यवहितोत्तरक्षणे तत्र धूमलिङ्गकानुमितिरित्येव सामग्रीव्याप्तिः प्रकृते पर्यवस्येत्। तत्र च धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावस्य निवेशे समूहालम्बनपरामर्शकाल आलोकादिमात्रलिङ्गकेच्छासत्त्वे धूमलिङ्गकानुमितेर-नुत्पादप्रसङ्गः, सामग्रीविरहात्। तदनुरोधेनालोकादिलिङ्गकेच्छाविरहविशिष्ट-सिद्ध्यभावसहकृतालोकलिङ्गकपरामर्शादिसहकृतधूमलिङ्गकपरामर्शस्यापि धूमलिङ्गका-नुमितित्वावच्छिन्नप्रयोजकत्वाभ्युपगमेऽनन्तसामग्र्याव्याप्तिस्वीकारप्रसङ्ग इति धूमलिङ्ग-केच्छाविरहविशिष्टसिद्ध्यभावो न तत्र निवेशनीय इति। एवञ्चेतरकारणसमुदाय-स्योक्तस्थले सत्त्वाद्धूमलिङ्गकानुमितित्वावच्छिन्नापत्तिर्नैव वारयितुं शक्यते(क्ये)ति चेत्, मैवम्, धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावसहकृतबाधाभावादिसहकृतधूम-लिङ्गकपरामर्शत्वावच्छिन्नस्यैव धूमलिङ्गकानुमितित्वावच्छिन्नव्याप्यत्वमभ्युपेयते। न तु तदसहकृतस्य, समूहालम्बनकाले तादृशधूमपरामर्शघटितसामग्र्यसत्त्वेऽप्यालोक-लिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावालोकपरामर्शादिघटितसामग्रीत एवानुमितित्वाव-च्छिन्नोत्पत्तिनिर्वाहात्। तादृशानुमितेर्धूमपरामर्शविशिष्टत्वरूपधूमलिङ्गकत्वस्य घटज्ञानोत्तरत्वादेरिवार्थवशसम्पन्नत्वात् (अस्पष्टाक्षरम्)। न चैवं सति विपरीतज्ञानोत्तर-प्रत्यक्षं प्रति विशेषदर्शनस्य हेतुत्वे विपरीतज्ञानदशायां सर्ववादिसिद्धं विपरीतज्ञाना-नुत्तरप्रत्यक्षापत्त्यादिकमपि न स्यात्, तत्राप्युक्तरीत्या विशेषदर्शनघटितसामग्र्या एव फलव्याप्यत्वमित्यस्य वक्तुं शक्यत्वादिति वाच्यं तत्र विपरीतज्ञानाभावदशायां ग्राह्य-प्रत्यक्षनिर्वाहाय विशेषदर्शनाघटितसामग्र्या अपि तत्र (तत्र ?) फलव्याप्यत्वाभ्युपग-मस्यावश्यकत्वात्। विपरीतज्ञानानुत्तरप्रत्यक्षे तदभावस्याहेतुत्वे च तादृशसामग्र्या विपरीतज्ञानदशायां विशेषदर्शनासत्त्वेऽपि सत्त्वात्तादृशापत्तेर्दुर्वारत्वात्।

अथ यज्जन्यतावच्छेदकेन साधं यज्जन्यतावच्छेदकस्य व्याप्यव्यापकभावस्तयोरेव फलजनने परस्परसमवधानापेक्षा। यथा दण्डचक्रादोनाम् आत्ममनोयोगपरामर्शादीनाञ्च। अत्र धूमपरामर्शविशिष्टत्वरूपपरामर्शजन[क]तावच्छेदकतादृश[1]-सिद्ध्यभावविशिष्टत्वरूपपक्षताजन्यतावच्छेदकयोस्तथात्वासम्भवात्। [2]सिद्धिकालीनसमूहालम्बनजन्याया अनुमितेस्तादृशपरामर्शमात्रजन्यतावच्छेदकाक्रान्तत्वात्। सिद्ध्यभावकालीनालोकादिमात्र लिङ्गक परामर्शजन्याया धूमलिङ्गकपरामर्शजन्यभिन्नाया अनुमितेः पक्षताजन्यतावच्छेदकाक्रान्तत्वादिति कथं तादृशपरामर्शेण फलज[न]ने तादृशसिद्ध्यभावसमवधानापेक्षेति चेद् विलोनं तर्हि बाधाभावसन्निकर्षादीनां परस्परसहकारित्वं [3]बाधाभावजन्यतावच्छेदकस्यानुमित्यादिसाधारणतया सन्निकर्षादिजन्यतावच्छेदकस्य च निर्विकल्पकादिसाधारणतया तयोर्व्याप्यव्यापकभावासम्भवात्। तथा च कार्यतावच्छेदकयोः सामानाधिकरण्यमेव सहकारितायां तन्त्रम्। तच्च प्रकृतेऽप्यस्तोति नानुपपत्तिगन्धोऽपि।

अन्ये तु पक्षतां विना परामर्शात् परामर्शं विना पक्षतातोऽनुमित्यापत्तिवारणाय पक्षताजन्यतावच्छेदककोटौ परामर्शाव्यवहितोत्तरत्वं परामर्शजन्यतावच्छेदककोटौ च [4]सिद्ध्यभावाव्यवहितोत्तरत्वं निवेशयन्ति। [5]तदनुपादेयमेव विशेषदर्शनमिति संक्षेपः।

अथ सर्वस्यैव क्षणस्य सिद्ध्यभावाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणतया स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वघटितसिद्ध्यभावाव्यवहितोत्तरत्वस्याप्रसिद्ध्या तादृशसम्बन्धेन तथाविधसिद्ध्यभावविशिष्टत्वस्य कार्यतावच्छेदकत्वं न सम्भवति। स्वाधिकरणक्षणध्वंसोत्पत्त्यधिकरणक्षणोत्पत्तिकत्वस्वसामानाधिकरण्योभयसम्बन्धेन तद्वैशिष्ट्यनिवेशे च निखिलानुमितोनामेव तथाविधतया व्यभिचारो दुर्वार इति चेत् ?

स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वस्वसामानाधिकरण्योभयसम्बन्धेन तादृशसिद्धिमदन्यत्वं तादृशसिद्ध्यभावजन्यतावच्छेदकम्। तादृशाव्यवहितोत्तरत्वञ्च परामर्शाव्यवहितोत्तरत्ववन्निर्वचनोयमतो न काप्यनुपपत्तिरिति। अथैतन्मते[6] लिङ्गभेदेन प्रतिबध्यप्रतिबन्धकभावबाहुल्यात्पूर्व एव कल्पः साधीयानिति चेत् ? न, पूर्व-

१. ले० टि० धूमलिङ्गकेच्छाविरहविशिष्ट०।

२. ले० टि० आलोकलिङ्गकेच्छाकालीनेत्यपि बोध्यम्। ३. बाधज्ञानाभाव इत्यर्थः।

४. अत्र सिद्ध्यभावस्थाने 'पक्षता' इति पाठो लेखकाभिमतो भाति।

५. सामानाधिकरण्येन सहकारितयैवोपपत्तौ जन्यतावच्छेदकगौरवादित्यर्थः।

६. तत्तल्लिङ्गकेच्छारूपोत्तेजकभेदेन सिद्धेः प्रतिबन्धकत्वं भिन्नमित्यर्थः।

कल्पे[1] विशिष्टेच्छाभावसहस्राणां विशेष्यविशेषणाभावे विनिगमनाविरहेणानन्त्यादित्याहुः ।

अन्ये तु सिद्धिमदन्यत्वस्य कार्यतावच्छेदककोटिनिवेशनादेव सिसा(षा)धयिषाधीनानुमितौ व्यभिचारवारणसम्भवात् । सिसा(षा)धयिषाया उत्तेजकत्वे प्रयोजनविरहः । न चैवं सति सिसा(षा)धयिषाकालीनानुमितेः सिद्ध्यभावजन्यतावच्छेकानाक्रान्ततया तादृशानुमितिसामग्र्याः सिसा(षा)धयिषाविरहविशिष्टसिद्धिकालेऽपि भावात् तत्रानु[मि]तिर्दुर्वारैवेति वाच्यम्, सिसा(षा)धयिषाविशिष्टानुमितौ सिसा(षा)धयिषाया हेतुत्वान्तरस्य कल्पनोयतया सिसा(षा)धयिषाविशिष्टानुमितिसामग्र्याः सिसा(षा)धयिषाघटि[त]त्वेन सिसा(षा)धयिषाविरहविशिष्टसिद्धिकालेऽसत्त्वेनापादनासम्भवात् । एतत्कल्पेऽव्यवहितोत्तरत्वनिवेशाद् एतदपेक्षया विशिष्टाभावहेतुत्वकल्प एव साधीयानिति तु नोपपद्यते । विशिष्टाभावहेतु[त्व]कल्पेऽप्यव्यवहितोत्तरत्वनिवेशावश्यकताया दर्शितत्वात् । न च कार्यकारणभावद्वयकल्पनापेक्षया विशिष्टाभावस्यैव हेतुत्वकल्पनमेवोचितमिति वाच्यम्, विशिष्टाभावहेतुत्वकल्पेऽपि सिसा(षा)धयिषाविरहविशिष्टसिद्धेः सिद्धिविशिष्टसिसा(षा)धयिषाभावस्य वा हेतुत्वमित्यत्र विनिगमनाविरहात्कार्यकारणभावद्वयस्यावश्यकत्वादवच्छेदकगौरवाधिक्यात् ।

यत्तु सामानाधिकरण्यसम्बन्धेन सिसा(षा)धयिषाभावविशिष्टसिद्धित्वेन प्रतिबन्धकत्वं न कल्प्यते, येन विशेषणविशेष्यभावे विनिगमनाविरहः स्यात् । किन्तु सिसा(षा)धयिषाविरहसिद्ध्युभयत्वेनेति तदत्यन्तमसत्, तादृशोभयस्य प्रतिबन्धकतावच्छेदकसम्बन्धस्यैकस्य दुर्वचत्वात् । न च सिसा(षा)धयिषावदन्यत्वं सिद्धिमदन्यत्वं [वा] सिद्ध्यभावस्य जन्यतावच्छेदकमित्यत्र विनिगमकाभावादिच्छाहेतुत्वकल्पे कार्यकारणाभावाधिक्यमिति वाच्यम्, अनुगताननुगतनानाविधेच्छावच्छेदकूटस्य कार्यतावच्छेदककोटिनिवेशापेक्षयैकैकविधसिद्धिमदन्यत्वनिवेशे लाघवस्यैव विनिगमकत्वात् । सिसा(षा)धयिषावदन्यत्वस्य जन्यतावच्छेदकत्वे सिसा(षा)धयिषाकाले सिद्ध्यसत्त्वे सिसा(षा)धयिषावदन्यानुमितित्वावच्छिन्नापत्तेश्च ।

अथैवं बाधादिप्रतिबन्धकतायामप्रामाण्यग्रहादीनामुत्तेजकत्वं विलीयेत तत्राप्यप्रामाण्यग्रहादिहेतुतयैवोपपत्तिसम्भवाद्[2] इति चेदिष्टमेवैतत् ।

अथैवं बाधकाले सिसा(षा)धयिषासत्त्वे सिसा(षा)धयिषाघटितसामग्रीबलादनुमित्यापत्तिः । सिसा(षा)धयिषाघटितसामग्रीव्याप्तौ बाधाभावनिवेशेऽप्रामाण्यज्ञानास्कन्दितबाधकाले सिद्धिसिसा( षा )धयिषोभयसत्त्वेऽनुमित्यनुत्पादप्रसङ्गेन बाधाभावाघटिताया एव तादृशसामग्र्याः फलव्याप्यत्वस्यैवोपगन्तव्यत्वादिति चेन्न, भा(बा)-

१. ले० टि० यत्त्विति मते ।

२. ले० टि० अप्रामाण्यग्रहादिविशिष्टं प्रत्यप्रामाण्यधीत्वेन कारणता ।

धाभावं निवेश्य सिसा(षा)धयिषाघटितसामग्र्या एका व्याप्तिः, बाधविषयकाप्रामाण्यज्ञानं निवेश्यापरा व्याप्तिरभ्युपेयते। अप्रामाण्यज्ञानास्कन्दितबाधदशायां सिद्धिसिसा(षा)धयिषोभयसत्त्वे बाधाभावघटितसामग्र्या अभावेऽपि तदीयाप्रामाण्यज्ञानघटितसामग्रीसत्त्वादेवानुमित्युत्पत्तिः। अप्रामाण्यज्ञानानास्कन्दितबाधदशायां सिसा(षा)धयिषासत्त्वे च नाप्रामाण्यग्रहघटिता सामग्री न वा बाधाभावादिघटितेति नापत्तिरित्याहुः। प्रतिबन्धकतावच्छेदककोटौ पक्षतावच्छेदकविधेयतावच्छेदकादिनिवेशनप्रयोजनं तु व्यक्तमेव। साध्यसन्देहकालेऽनुमित्युपपत्तये निर्णयत्वस्य प्रतिबन्धकतावच्छेदककोटौ निवेशनम्।

अथ निर्णयत्वं यदि वह्निप्रतियोगिकाभावाप्रकारकत्वं वह्नित्वघटितधर्मावच्छिन्नाभावाप्रकारकत्वं वा, तदा महा[न]सीयवह्न्यभाववान् पर्वतः पर्वतो वह्निमानित्येतादृशांशिकनिर्णयस्य प्रतिबन्धकत्वापत्तिः। यदि च शुद्धवह्नित्वावच्छिन्नाभावाप्रकारकत्वं तदा पर्वतः सुन्दरवह्निमान्न वेत्येतादृशस्यापि प्रतिबन्धकत्वप्रसङ्गः।

यत्तु स्वावच्छेदकताव्यापकावच्छेदकताकत्व-स्वनिरूपकज्ञाननिरूपितत्वोभयसम्बन्धेन पर्वतत्वावच्छिन्नविषयतानिरूपिताभावविषयतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारताविशिष्टान्यवह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिज्ञानत्वेन प्रतिबन्धकत्वोपगमान्नानुपपत्तिः । महानसीयवह्निमान्न वा पर्वतः पर्वतो वह्निमानित्येतादृशनिर्णयनिरूपितशुद्धवह्नित्वावच्छिन्नप्रकारतायास्तादृशज्ञानीयतथाविधप्रतियोगितासंसर्गावच्छिन्नप्रकारतावच्छेदकताव्यापकावच्छेदकताकत्वविरहेण निरुक्तोभयसम्बन्धेन तादृशप्रकारताविशिष्टत्वाभावात्। पर्वतः सुन्दरवह्निमान्न वेत्येतादृशज्ञानीयवह्निप्रकारतायास्तादृशोभयसम्बन्धेन तज्ज्ञानीयप्रतियोगिप्रकारताविशिष्टत्वादिति तदप्यसत्। तथा सत्यपि तृणजन्यतावच्छेदकजातित्वादिना वह्नित्वाद्यवगाहितादृशजातिमद्वह्निमान्न वा पर्वतः पर्वतो वह्निमानिति निर्णयस्य प्रतिबन्धकत्वानुपपत्तेः। तादृशज्ञानीयप्रतियोगितासंसर्गावच्छिन्नवह्निप्रकारताया वह्नित्वमात्रावच्छेद्यतयोपदर्शितोभयसम्बन्धेन तादृशप्रकारतावैशिष्ट्यस्य पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निप्रकारतायां सत्त्वात्। एवं पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावप्रकारतानिरूपितप्रतियोगिप्रकारताविशिष्टान्यत्वनिवेशे नीलपर्वतो वह्निमान्न वा पर्वतो वह्निमानित्याकारकस्य पर्वतत्वसामानाधिकरण्येन वह्निमत्तानिर्णयस्याप्रतिबन्धकत्वप्रसङ्गः। पर्वतत्वान्यधर्मानवच्छिन्नत्वस्य विशेष्यतायां निवेशे च नीलपर्वतो वह्निमान्न वेति संशयस्यापि प्रतिबन्धकत्वप्रसङ्गः। मैवम्। शुद्धपर्वतत्वावच्छिन्नविशेष्यतानिरूपितशुद्धवह्नित्वावच्छिन्नाभावप्रकारताकान्यशुद्धपर्वतत्वावच्छिन्नविशेष्यतानिरूपितशुद्धवह्नित्वावच्छिन्नप्रकारताशालिज्ञानत्वेन प्रतिबन्धकताऽतो नानुपपत्तिः। नीलपर्वतो वह्निमान्न वा, पर्वतः सुन्दरवह्निमान्न वेत्यादिसंशयानां

शुद्धपर्वतत्वावच्छिन्नविशेष्यतानिरूपितशुद्धवह्नित्वावच्छिन्नप्रकारताकत्वाभावात्। नील-पर्वतो वह्निमान् पर्वतः सुन्दरवह्निमानित्यादिनिर्णयानाञ्च पृथगेव[1]प्रतिबन्धकत्वं कल्पनीयम्।

वस्तुतो नीलपर्वतो वह्निमान् पर्वतः सुन्दरवह्निमानित्याद्यनु(मि)तौ तादृश-सिद्धीनां प्रतिबन्धकत्वे कल्प्ये पर्वतो वह्निमानित्येतादृशानुमितिसाधारणस्य पर्वतत्व-भिन्नं सद्यन्नीलभिन्नं तदवच्छिन्नोद्देश्यतानिरूपितवह्नित्वान्यधर्मानवच्छिन्नविधेयता-कानुमितित्व-पर्वतत्वान्यधर्मानवच्छिन्नोद्देश्यतानिरूपितवह्नित्वान्यसौन्दर्यभिन्नधर्मान-वच्छिन्नविधेयताकानुमितित्वादेः प्रतिबध्यतावच्छेदकत्वोपगमात्तत एव पर्वतो वह्नि-मानित्येतादृशानुमितेरपि तादृशधर्मस्य सिद्धिदशायामापत्तिवारणसम्भवेन पर्वतो वह्निमानित्येतादृशानुमितौ तथाविधसिद्धीनां प्रतिबन्धकत्वान्तरं न कल्प्यते। न च प्रतिबध्यतावच्छेदकगौरवमित्याशङ्कनीयम्, नील-सुन्दर-पर्वतो वह्निमानित्याद्यनुमितौ व्यभिचारवारणाय तादृशधर्मस्य प्रतिबध्यतावच्छेदकताया आवश्यकत्वात्। न च नील-पर्वतो वह्निमानित्यनुमितिं प्रति प्रतिबन्धकतायां नीलपर्वतत्वावच्छिन्नोद्देश्यकानुमिति-र्जायतामित्याकारकेच्छाया उत्तेजकत्वात्तथाविधेच्छाकाले पर्वतो वह्निव्याप्यवानित्या-कारकपरामर्शादनुमित्यापत्तिवारणाय प्रतिबन्धकत्वान्तरमवश्यं कल्प्यमिति वाच्यम्, उपदर्शितरीत्येच्छाया हेतुत्वस्यैव कल्पनीयतयोत्तेजकत्वाभावात्। पक्षविशेष्यकानु-मितौ साध्यविशेष्यकसिद्धेः विरोधितायाः प्रामाणिकत्वे तादृशसिद्धेः पृथक् प्रतिबन्ध-कत्वं कल्पनीयम्, न तु साध्यपक्षवैशिष्ट्यावगाहिनिर्णयत्वेनोभयविधसिद्धेरेकप्रतिबन्ध-कत्वम्, व्याप्यपक्षविशेष्यकपरामर्शानुगमदर्शितानुपपत्तिग्रस्तत्वात्। साध्यविशेष्यकानु-मितौ पक्षविशेष्यिका साध्यविशेष्यिका च सिद्धिर्विरोधिनी। तत्र पक्षविशेष्यका-नुमितिस्थलीयपक्षविशेष्यकसिद्धिप्रतिबन्धकतायां साध्यपक्षतोभयविशेष्यकानुमिति-साधारणपक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नविधेयताका-नुमितित्वस्यैव प्रतिबध्यतावच्छेदकत्वात्तादृशप्रतिबध्यप्रतिबन्धकभावेनैवोपपत्तेः। साध्यविशेष्यकानुमितौ तादृशसिद्धेः पृथक् प्रतिबन्धकत्वं न कल्प्यत इति तु तदैवो पपद्यते यदि पक्षविशेष्यकानुमितिर्जायतां साध्यविशेष्यकानुमितिर्जायतामित्येतादृशेच्छायाः(नां) पृथक् पृथगुत्तेजकत्वानुरोधेन विशेषे न पर्यवस्येत्। साध्यविशेष्यकानुमितौ साध्य-ज्ञानमेव विरोधि। इतरव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्याद्याकारक-व्यतिरेकिपरामर्शदशायां यथा कथञ्चित्साध्यज्ञानसत्त्वेऽपि पृथिवीतरभेदवतीत्याद्या-कारकसाध्यविशेष्यकानुमितेरेवोपगमात्। एवञ्च भावसाध्यकस्थले न कुत्रापि साध्य-विशेष्यकानुमितिस्तादृशस्थलीयव्याप्तेः साध्यघटिततया परामर्शदशायां साध्योप-स्थितेर्नियमतः सत्त्वात्। अभावसाध्यकस्थलेऽप्यन्वयव्याप्तिविषयकपरामर्शकाले

---

१. ले० टि० तत्समानाकारानुमितौ।

साध्योपस्थितिनैयत्याद् व्यतिरेकिपरामर्शस्थले च कदाचित्साध्यविशेष्यिका कदाचिच्च पक्षविशेष्यिकेति ध्येयम् । भावसाध्यकस्थले च साध्यप्रसिद्धेः प्रतिबन्धकत्वं नास्ति तत्र सा[ध्य]विशेष्यकानुमितेरप्रसिध्याऽऽपादनासम्भवात् । किन्त्व-भावसाध्यकस्थल एव तत्र साध्यज्ञानशून्यकाले प्रसिद्धायाः साध्यविशेष्यकानु-मितेस्तज्ज्ञा(ज्ज्ञा)नदशायामापत्तिसम्भवात् । न च साध्यप्रसिद्धिकालेऽपि व्यतिरेकि-परामर्शात्साध्यविशेष्यकानुमित्युपगमे क्षतिविरहात् । साध्यप्रसिद्धेः प्रतिबन्धक[त्वक]-ल्पनमनुचितमिति वाच्यम्, अन्वयव्यतिरेकोभयव्याप्तिविषयकपरामर्शदशायामनुभव-विरुद्धाया उभयविशेष्यकानुमितेर्वारणाय तत्प्रतिबन्धकताया आवश्यकत्वात् ।

वस्तुतस्तु पृथिव्यामितरभेद इत्याद्याकारकसिद्धिकाले तादृशानुमितेर्वार-णाय तादृशसिद्धिप्रतिबन्धकत्वकल्पनापेक्षया पक्षादिविषयतां निवेश्य साध्यज्ञानत्वेन प्रतिबन्धकत्वकल्पने लाघवमेव तादृशप्रतिबन्धकतायां साधीयसी युक्तिः ।

अथेतरव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्याकारकपरामर्शकाले पृथिव्यामितर इत्याकारिका साध्यविशेष्यकानुमितिरेव कथमुत्पद्यते, इतरभेदत्वविशिष्टे पृथिवीप्रकारिकां तथाविधानुमितिं प्रति विशेष्यतावच्छेदकप्रकारकज्ञानस्य हेतुत्वा-त्प्रकृतस्थले च तादृशकारणविरहादिति चेत्, सत्यम्, तादृशस्थल इतरभेदत्वविशिष्टे पृथिवीवैशिष्ट्यविषयिण्यनुमितिर्नोत्पद्यते किन्तु भेदत्वविशिष्ट एकत्र द्वयमिति रीत्येतर-पृथिव्यौ विशेषणतयाऽवगाहमानानुमितिरेव, तत्र च विशेष्यतावच्छेदकप्रकारकज्ञान-विधया भेदत्वप्रकारकज्ञानमेवापेक्षितं तच्चोपदर्शितपरामर्शकाले[1] नियमत एव वर्तत इति न काप्यनुपपत्तिः । जलव्यापकीभूताभावप्रतियोगिमती पृथिवीत्याकारकात्यन्ता-भावघटितव्यापकत्वावगाहिपरामर्शकाले भेदत्वप्रकारकज्ञानस्य न नैयत्यमिति चेत् ? का क्षतिस्तत्र भेदत्वानवगाहिन्येव जलीयत्वादिना जलादिभेदानुमितिरुपगम्या, तत्र च भेदत्वधियः कथञ्चिदपि नापेक्षेति । साध्यप्रसिद्धेः प्रतिबन्धकतायाञ्च साध्यतावच्छेदक-प्रकारकत्वमेव निवेश्यते न तु तत्तत्साध्यविषयकत्वमपि प्रमेयत्वादिना साध्योपस्थिति-काले साध्यविशेष्यकानुमितिनिर्वाहाय साध्यतावच्छेदकनिवेशस्यावश्यकत्वात् । साध्य-विषयितानिवेशे प्रयोजनाभावात् । न च साध्यविषयिताया अनिवेश इतरभेदत्वादिना पदार्थान्तरविषयकज्ञानदशायां व्यतिरेकिपरामर्शादनुमित्यनुत्पादप्रसङ्गः । साध्यता-वच्छेदकप्रकारकज्ञानरूपप्रतिबन्धकसत्त्वेन पृथिव्यामितरभेद इत्याकारकानुमितेर्विशेषण-ज्ञानविरहेण पृथिवीतरभेदवतीत्याकारिकाया इतरभेदप्रकारकानुमितेरुत्पादासम्भवादिति वाच्यम्, तदंशे धर्मान्तरविशेषणकतद्विशिष्टबुद्धौ विशेषणज्ञानहेतुतायाः प्रमाणशून्यतया तादृशकाल इतरभेदज्ञानविरहेऽपि तत्प्रकारानुमित्युत्पादे बाधकाभावात् ।

अथैवमितरभेदत्वप्रकारकज्ञानशून्यकालेऽपि विशेष्ये विशेषणमिति रीत्या पृथिवी-

---

१. इतरव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्याकारकपरामर्शकाले ।

तरभेदवतीत्याकारकानुमितेरुत्पत्तिसम्भवेन साध्यविशेष्यकानुमितिविलयप्रसङ्गः। न च विशेष्ये विशेषणमिति रीत्या तादृशानुमितिरप्रामाणिकतया तत्सामग्र्येव न कल्प्यत इति साध्यविशेष्यकानुमित्युत्पत्तौ बाधकाभाव इति वाच्यम्, तत्र साध्यविशेष्यकानुमितिस्वीकारे साध्यप्रसिद्धेः प्रतिबन्धकत्वकल्पनस्याधिक्यात्। तत्र केवलं विशेष्ये विशेषणमिति रीत्या साध्यविशेषणकानुमितिस्वीकारस्यैवोचितत्वात्। न च केवलं विशेष्ये विशेषणमिति रीत्याऽनुमितिस्वीकारेऽपि तत्र सि[द्]ध्यादिप्रतिबन्धकताया आधिक्यात्तादृशस्थले साध्यविशेष्यकानुमितिस्वोकार उचितः, पक्षादिभेदेन सिद्धिप्रतिबन्धकत्वापेक्षया साध्यप्रसिद्धिप्रतिबन्धकतायां लाघवस्यातिस्फुटत्वादिति वाच्यम्, विशिष्टवैशिष्ट्यावगाह्यनुमितिस्थलीयसिद्धिप्रतिबन्धकतायामुभयसाधारणेतरभेदत्वप्रकारकतानिरूपितप्रकारताकानुमितित्वस्यैव प्रतिबध्यतावच्छेदकत्वोपगमात्। तादृशप्रतिबन्धकतयैव सिद्धिकाले विशेष्ये विशेषणमिति रीत्या तादृशानुमितेरपि वारणसम्भवात्। तादृशानुमितौ सिद्धेः प्रतिबन्धकताया अनाधिक्यात्।

न च विशिष्टवैशिष्ट्यावगाह्यनुमितिस्थलीयप्रतिबन्धकतायां विशिष्टवैशिष्ट्यावगाह्यन्यानुमितिर्जायतामित्येतादृशेच्छाया उत्तेजकत्वात्तादृशेच्छाकाले सिद्धिसत्त्वे विशेष्ये विशेषणमिति रीत्या तादृशानुमितेरापत्तिरिति वाच्यम्, सिद्धिकाल इतरभेदत्वप्रकारकज्ञानस्यावश्यकतया तत्र चानुमितेर्विशिष्टवैशिष्ट्यावगाहित्वे बाधकाभावात्तादृशानुमित्युत्पत्तौ च तथाविधेच्छाविषयसिद्धेरावश्यकतयाऽनुमितेरिष्टत्वादिति चेन्मैवम्, साध्यज्ञानशून्यकाले व्यतिरेकिपरामर्शात्साध्यविशेष्यकानुमितिस्वीकारेऽपि न किञ्चिद् गौरवम्। साध्यतावच्छेदकप्रकारकज्ञानस्य क्लृप्तप्रतिबन्धकतयैवोपपत्तेः। तथा हीच्छाया हेतुत्वकल्पे भेदत्वावच्छिन्नपक्षकेतरविधेयताकानुमितौ भेदत्वावच्छिन्नविशेष्यताकेतरप्रकारकज्ञानस्य सिद्धिविधया प्रतिबन्धकत्वे कल्पनीये तादृशसिद्धिविशिष्टान्यानुमितित्वमेव प्रतिबध्यतावच्छेदकं वाच्यम्, तच्च पृथिव्यामितरभेद इत्येतादृशसाध्यविशेष्यकानुमितिसाधारणमपीति तत एवेतरभेदत्वप्रकारकज्ञानकाले तादृशानुमितिवारणं सम्भवतीति।

एतेनेतरभेदत्वप्रकारकज्ञानप्रतिबध्यतावच्छेदकं नेतरभेदत्वप्रकारतानिरूपितविशेष्यताकानुमितित्वमितरभेदत्वावच्छिन्नपक्षकानुमितौ व्यभिचा[रा]दितरभेदत्वावच्छिन्नविधेयताकत्वस्याधिकस्य निवेशेऽपि पृथिवीतरभेदवती, इतरभेदः प्रमेय इत्या[कार]कसमूहालम्बनानुमितौ व्यभिचारात्। न च विशेष्यत्वानिरूपिततादृशविधेयताकत्वनिवेशान्न व्यभिचारः। तादृशसमूहालम्बनीयविधेयताया विशेष्यतानिरूपितत्वादिति वाच्यम्, साध्यविशेष्यकसाध्यविशेषणकानुमित्योर्विधेयताभेदे मानाभावेन विधेयताया विशेष्यत्वानिरूपितत्वासम्भवादिति प्रतिबध्यतावच्छेदकस्य दुर्वचतया साध्यप्रसिद्धेः प्रतिबन्धकत्वकल्पनमशक्यमित्येषा फक्किका निरस्ता, उभयमतसिद्धोपदर्शितप्रतिबध्य-

प्रतिबन्धकभावस्य तत्साधारणतयैतादृशप्रतिबध्यप्रतिबन्धकभावस्य केनाप्यस्वीकारात् । प्रतिबध्यतावच्छेदकनिर्वचनस्याकिञ्चित्करत्वात् ।

अथ साध्यप्रसिद्धेः प्रतिबन्धकताया अनाधिक्येऽपि भिन्नविषयकप्रत्यक्षादौ व्यतिरेकिपरामर्शघटितानुमितिसामग्र्याः प्रतिबन्धकत्वाधिक्यमेतन्मते दुर्वारमेव । तथा हि—पृथिवीतरभेदवतीत्याद्याकारकविशिष्टवैशिष्ट्यावगाह्यनु[मि]तिसामग्रीप्रतिबन्धकतायामितरभेदत्वप्रकारकज्ञानमवश्यं निवेशनीयम् । अन्यथा तादृशपरामर्शकाले तथाविधज्ञानासत्वे सत्याञ्च साध्यविशेष्यकानुमितिप्रतिबन्धिकायां शुद्धभेदत्वावच्छिन्नविशेष्यताकाधेयत्वसम्बन्धावच्छिन्नप्रतियोगिताकपृथिव्यभावप्रकारकबुद्धौ प्रत्यक्षानुत्पादप्रसङ्गात्। तादृशबाधस्य च पृथिवीतरभेदवतीत्याकारकबुद्धिविरोधित्वे मानाभावेन तदभावस्य तथाविधानुमितिसामग्र्यघटकत्वात् । एवञ्च साध्यतावच्छेदकप्रकारकज्ञानासत्त्वेऽसत्याञ्च तादृशबाधबुद्धौ[1] प्रत्यक्षाद्युत्पादवारणाय तादृशबाधाभावं साध्यज्ञानाभावञ्च निवेश्य तादृश[2]परामर्शघटितसामग्रीप्रतिबन्धकत्वान्तरं कल्पनीयम् । अस्माकन्तु तादृश[3]परामर्शघटितसामग्र्यां साध्यतावच्छेदकप्रकारकज्ञाननिवेश एव नास्ति, उपदर्शितबाधकाले साध्यतावच्छेदकप्रकारकज्ञानासत्त्वेऽपि केवलं विशेष्ये विशेषणमिति रीत्या पृथिवीतरभेदवतीत्याकारकानुमिते[रे]वोत्पत्त्या[4] प्रत्यक्षानुत्पादादिति[5] चेत्, न, मन्मतेऽपि व्यतिरेकिपरामर्शघटितसामग्र्यां तादृशसाध्यतावच्छेदकप्रकारकज्ञाननिवेशो नास्ति । इच्छाहेतुत्वकल्पे सामग्र्युत्तरत्वस्य कार्यतावच्छेदककुक्षिनिवेशादेवोपदर्शितप्रत्यक्षादौ व्यभिचारवारणसम्भवात्[6] । न चैवं तादृशस्थलीयप्रत्यक्षादिसामग्र्यास्तादृशसाध्यतावच्छेदकप्रकारकज्ञानसत्त्वेऽपि भावात्तद्बलात्तत्र प्रत्यक्षाद्यापत्तिरिति वाच्यम्, तादृशसाध्यतावच्छेदकप्रकारकज्ञानानुत्तरज्ञाने तादृशज्ञानाभावस्य[7] हेतुत्वात्तादृशप्रत्यक्षादिसामग्र्यास्तादृशसाध्यतावच्छेदकप्रकारकज्ञानाभावघटिततया उक्तस्थले तादृशसामग्र्या अप्यसत्त्वात् । न च तादृशसाध्यतावच्छेदकप्रकारकज्ञानानुत्तरज्ञाने तदभावस्य हेतुत्वकल्पनमेवाधिकमिति वाच्यम्, तादृशकार्यकारणभावकल्पने सति

---

१. ले० टि० शुद्धभेदत्वेत्याद्युक्तेत्यर्थः (शुद्धभेदत्वावच्छिन्नविशेष्यताकाधेयत्वसम्बन्धावच्छिन्नप्रतियोगिताकपृथिव्यभावप्रकारकबुद्धावित्यर्थः) ।

२. ले० टि० व्यतिरे० ।

३. ले० टि० विशिष्टवै० ।

४. अत्र 'एव'कारो नावश्यकः केवलमित्यस्याप्यन्ययोगव्यवच्छेदकत्वार्थकत्वात् ।

५. ले० टि० तथा च तादृशानुमितिसामग्रीरूपप्रतिबन्धकसत्त्वात् प्रत्यक्षं नाङ्गीक्रियत इत्यर्थः ।

६. ले० टि० अनुमितिसामग्रीरूपप्रतिबन्धकाभावस्य कार्यतावच्छेदकं तादृशसामग्र्युत्तरप्रत्यक्षत्वम् । तत्र प्रत्यक्षस्य कार्यतावच्छेदकानाक्रान्ततया तत्र सामग्र्याः प्रतिबन्धकत्वाभावान्नानुपपत्तिः ।

७. ले० टि० साध्यज्ञानाभा० ।

च्छाविशिष्टायाः पृथिवीतरभेदवतीत्याकारकविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादिसामग्र्याः प्रतिबन्धकतायामितरभेदत्वरूपविशेषणतावच्छेदकप्रकारकज्ञानानिवेशेन लाघवात् । अन्यथापत्तिवारणाय तन्निवेशस्यावश्यकत्वादिति । तस्माद्गौरवाभावेन साध्यविशेष्यकानुमितौ न किञ्चिद् बाधकमिति दिक् ।

उपाध्यायास्तु सिसा(षा)धयिषाविरहविशिष्टसिद्धि-सिसा(षा)धयिषाविरहविशिष्टानुमित्यन्यसिद्धिसामग्र्योरन्यतरत्वावच्छिन्नाभावत्वेनानुमितिहेतुता, न तु सिसा(षा)धयिषाविरहविशिष्टसि[द्]ध्यभावत्वेन । तथा सति प्रत्यक्षादिसामग्रीकालेऽनुमितिवारणाय तादृशसामग्र्यभावानां हेतुत्वान्तरकल्पने गौरवात् । न चान्यतरत्वावच्छिन्ने सिसा(षा)धयिषाभावस्यैकविधस्य निवेशेनैवोपपत्तौ सिद्धित्वाद्यवच्छिन्ने पृथग् निवेशनमनुचितमिति वाच्यम्, अन्यतरत्वावच्छिन्नेऽनुगतरूपेण सिसा(षा)धयिषायामुत्तेजकत्वासम्भवात् । तथा हि—यदि सिसा(षा)धयिषाया अनुमितित्वप्रकारकत्वेनोत्तेजकत्वं तदा प्रत्यक्षात्मकसिद्धिकाले प्रत्यक्षान्यवह्निज्ञानं जायतामित्येतादृशेच्छासत्त्वेऽनुमित्यनुत्पादप्रसङ्गात् । यदि च तादृशेच्छासाधारणेनानुमितिविषयकत्वेन[1] तदा तादृशेच्छाकाले शाब्दादिसामग्रीसत्त्वेऽनुमित्यापत्तेः । तस्मात्सिद्धावनुमितिविषयकेच्छात्वेन सामग्र्यामनुमितित्वप्रकारकेच्छात्वेनोत्तेजकताया आवश्यकत्वान् नैकधानुमित्साभावनिवेशः सम्भवति ।

अथैवं सिद्धेरनन्तरं सिसा(षा)धयिषायामुत्पन्नायां साध्यानुमित्यनुदयप्रसङ्गः । तादृशसिद्धेरुत्पत्तिकाले सिसा(षा)धयिषाभावविशिष्टतया तादृशसिद्धिभिन्नत्वाभावात्तादृशसिद्धिभिन्नतादृशसामग्रीभिन्नभिन्नत्वात्मकान्यतरत्वरूपप्रतिबन्धकतावच्छेदकाक्रान्तत्वादिति चेत्, न, अव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्याप्यव्याप्यवृत्तित्वात् [2]सिसा(षा)धयिषाकालावच्छेदेन तादृशसिद्धौ सिसा(षा)धयिषाभावविशिष्ट-

१. उत्तेजकत्वमिति पूर्वतनेनान्वयः ।

२. सामान्यतो भेदस्य व्याप्यवृत्तित्वेऽप्यव्याप्यवृत्तिमदन्योन्याभावस्याव्याप्यवृत्तिस्वरूपस्यैवाभ्युपगमात् । धर्मिभेदधर्मात्यन्ताभावयोरैक्याद् यथाऽव्याप्यवृत्तेः कपिसंयोगादेरत्यन्ताभावोऽव्याप्यवृत्तिस्तथैव तद्धर्मिणः कपिसंयोगवतो भेदोऽप्यव्याप्यवृत्तिरित्याशयः ।

मथुरानाथास्तु—अव्याप्यवृत्तिमदन्योन्याभावस्यापि व्याप्यवृत्तित्वं स्वीकुर्वन्ति । अत एव कपिसंयोगिभेदाभावस्य व्याप्यवृत्तिस्वरूपस्यातिरिक्तस्य तैरभ्युपगमः । ( द्र० व्या० पं० माथुरी, प्र० लक्षणम् )

वस्तुतस्तु भेदस्य व्याप्यवृत्तित्वमव्याप्यवृत्तित्वञ्चेति मतद्वयम् । तत्र द्वितीयपक्षे न हि सामान्यतो भेदोऽव्याप्यवृत्तिः; अपि त्वव्याप्यवृत्तिमदन्योन्याभाव एव । तथा च द्वितीयमतमाश्रित्य प्रकृतग्रन्थ इति ध्येयम् ।

सिद्धिभिन्नत्वसत्त्वात् । तदानीं तत्र तादृशसिद्धिभिन्नत्वविशिष्टतादृशसामग्रीभिन्नत्वावच्छिन्नभेदवत्त्वाभावात्प्रतिबन्धकतावच्छेदकानाक्रान्तत्वादभेदस्य व्याप्यवृत्तित्वेऽपि सिसा(षा)धयिषाभावविशिष्टसिद्धित्वाभावविशिष्टतादृशसामग्रीत्वाभावाभावस्वरूपान्यतरत्वस्यैव प्रतिबन्धकत्वावच्छेदकत्वोपगमेनानुपपत्त्यभावात् ।

अथ समवायेनानुमितिं प्रति तादृशान्यतरस्य समवायेन, विषयतयानुमितिं प्रति तादृशान्यतरस्य विषयतया समवायेन वा प्रतिबन्धकत्वम् ? नाद्यः, प्रत्यक्षसामग्रीकालेऽनुमित्यापत्तेः । विषयसन्निकर्षादिघटितायाः प्रत्यक्षसामग्र्या आत्मन्यसत्त्वात् । अत एव न द्वितीयः, विषयेऽपि तादृशसामग्र्या विषयतयाऽसत्त्वात् । न तृतीयः, सिद्धेः समवायेन वह्न्यादिरूपविषयेऽसत्त्वेन सिद्धिकालेऽनुमित्यापत्तेरिति चेत्,न, विषयेन्द्रियादिसन्निकर्षविशिष्टात्ममनोयोगादेरेवात्र सामग्रीपदेन विवक्षितत्वात् । तद्वति चान्यतरस्य समवायेनैव प्रतिबन्धकत्वसम्भवादित्याहुस्तच्चिन्त्यम्, अन्यतरत्वेन प्रतिबन्धकत्वेऽन्यतरत्वघटकभेदयोर्मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणबाहुल्यादवच्छेदकगौरवाच्च । प्रत्येकाभावहेतुत्वकल्पनाया एवोचितत्वात् ।

अथान्यतरत्वावच्छिन्नाभावत्वेन हेतुत्वकल्पने तादृशविनिगमनाविरहः सम्भवति । प्रकृते तु तादृशाभावव्यक्तेस्तादृशाभावव्यक्तित्वेनैव हेतुत्वं स्वीक्रि[य]ते । तत्र च नोपदर्शितविनिगमनाविरहावकाशः, सिद्धभेदविशिष्टसामग्रीभेदावच्छिन्नभेदरूपान्यतरत्वावच्छिन्नाभावस्य सामग्रीभेदविशिष्टसिद्धभेदावच्छिन्नभेदरूपान्यतरत्वावच्छिन्नाभावस्य वा तद्व्यक्तित्वेन हेतुत्वमित्यत्र विनिगमनाविरह इति स्वभावभेद एव सम्भवति, अत्र च तादृशधर्मावच्छिन्नाभावयोः समनैयत्याद् भेद एव । न च तादृशाभावस्य तत्तद्व्यक्तित्वेन हेतुत्वं कल्प्यते, तत्र च सिद्धतादृशसामग्रीघटकान्यतमत्वावच्छिन्नाभावानामित्यत्र विनिगमनाविरहः । तादृशाभावानामसमनियततयाऽभेदासम्भवादिति वाच्यम्, सिद्धित्वावच्छिन्नाभावत्वेन हेतुतामतेऽपि तादृशाभावानां तत्तद्व्यक्तित्वेन हेतुतामादाय विनिगमनाविर[ह]स्य दुर्वारत्वादिति चेत्, एवं बाधाभावादीनामपि पृथक्कारणत्वं विलीयेत, बाधसिद्धिप्रत्यक्षादिसामग्र्यन्यतमत्वाभाव(भाव ?)-च्छिन्नाभावस्य तत्तद्व्यक्तित्वेन हेतुतयैवोपपत्तेः । न चात्र बाधादेरन्तर्भावो न सम्भवति, सि[द्]ध्यादिकाले वह्न्याद्यवच्छिन्नोद्देश्यताकबु[द्]ध्युदयाद्वह्न्यादिविधेयताया एव तादृशान्यतमाभावजन्यतावच्छेदकत्वस्यावश्यकत्वाद् बाधाभावादीनां पृथग(ग्)हेतुत्वे बाधादिकाले वह्निमान् पर्वतो घटवानित्याद्यनुमित्यापत्तिः । तादृशान्यतरानुत्त[र]त्वस्य कार्यतावच्छेदकत्वेन व्यभिचाराभावाद् विधेयता न निवेश्यत इति चेद् विभाव्यते, तथापि सि[द्]ध्यादिकालीनवह्न्याद्यवच्छिन्नोद्देश्यताकानुमितेस्तादृशान्यतमाभावजन्यतावच्छेदकानाक्रान्ततया बाधादिकाले तादृशानुमितिर्दुर्वारैवेति वाच्यम्, वह्निमान् पर्वतो घटवानित्याद्यनुमितिं प्रति सि[द्]ध्यादिप्रतिबन्धकतायामपि पर्वतो

वह्न्यभाववानित्येतादृशबाधादिनिवेशेन बाधकाले तादृश(शा)नुमितिवारणसम्भवात् । एवमभावस्य तद्व्यक्तित्वेन हेतुतायां प्रतिबध्यप्रतिबन्धकभावपरिशेषापत्तिरिति दिक् ।

अथानुमितिं प्रति साध्यनिर्णयत्वेन प्रतिबन्धकत्वकल्पनापेक्षया लाघवात्साध्यानुमितित्वेनैव प्रतिबन्धकत्वमस्तु, लाघवञ्च संशयानुमितेरप्रसि[द्]ध्याऽनुमितित्वेन प्रतिबन्धकत्वे निर्णयत्वानिवेशेन । न चैवं सति प्रत्यक्षात्मकसाध्यनिर्णयानन्तरमनुमित्युत्पादप्रसङ्ग इति वाच्यम्, पर्वतो वह्निमानित्याद्याकारकप्रत्यक्षसामग्रीकाले तथाविधाया अनुमितेरापत्तिवारणाय तादृशसामग्र्याः प्रतिबन्धकत्वापेक्षया लाघवेन वह्न्यनुमितिं प्रत्यनुमित्यन्यवह्निनिर्णयत्वावच्छिन्नाभावस्य कार्यकालवृत्तितया हेतुत्वस्वीकारात् तादृशनिर्णयाभावस्य कार्याव्यवहितपूर्वकालेऽसत्त्वादेव तादृशसाध्यनिर्णयानं[त]रमनुमित्युत्पादवारणसम्भवादिति चेत्, न, तादृशप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वमकल्पयित्वा तादृशनिर्णयाभावस्य कार्यकालवृत्तितया हेतुत्वकल्पने विनश्यदवस्थसन्निकर्षादिजन्य-पर्वतो वह्निमानिति प्रत्यक्षोत्तरं पर्वते वह्निज्ञानं जायतामित्येतादृशेच्छां, तदनन्तरमनुमित्युपपत्तये तादृशनिर्णयप्रतिबन्धकतायामनुमितित्वप्रकारकत्वादिकमनिवेश्यानुमितिगोचरेच्छात्वेनैवोत्तेजकत्वं स्वीकरणीयम् । तथा च प्रत्यक्षसामग्रीदशायां तथाविधेच्छासत्त्वेऽनुमित्यापत्तिः । न च प्रत्यक्षगोचरेच्छाविशिष्टप्रत्यक्षसामग्र्याः समानविषयकप्रत्यक्षान्यज्ञानत्वावच्छिन्नं प्रति पृथक्प्रतिबन्धकताया आवश्यकत्वात्तादृशप्रतिबन्धकसत्त्वादेव न तदानीमनुमित्यापत्तिरिति वाच्यम्, प्रत्यक्षसामग्रीदशायां वह्निज्ञानं जायतां वह्न्यनुमितिर्जायतामित्युभयविधेच्छाकालेऽनुमित्युत्पत्तावुभयविधेच्छयोरेव विषयसिद्ध्यानुमितेरेवोत्पादात् । प्रत्यक्षत्वप्रकारकेच्छाया एव विशिष्टसामग्रीप्रतिबन्धकतायां निवेशात्तत्प्रतिबन्धकतायामुक्तस्थलेऽनुमित्यापत्तेर्वारयितुमशक्यत्वात् ।

न च स्व[1]वृत्त्यनुमित्यन्यवह्निसत्ताज्ञानप्रतियोगिकत्वसम्बन्धेन कृतिविशिष्टप्रागभावस्य सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकाभाव इच्छायां निवेशनीयः। उक्तस्थले च तादृशेच्छाव्यवहितोत्तरक्षणे तद्विषयीभूतप्रत्यक्षोत्पादे तादृशसम्बन्धेन कृतिविशिष्टप्रागभावस्य निरुक्तसम्बन्धेनेच्छायां सत्त्वान्नानुमित्यापत्तिरिति वाच्यम्, प्रत्यक्षोत्पत्तिकालेऽनुमितिवारणायैतदपेक्षया स्ववृत्तितादृशज्ञानप्रतियोगित्वसम्बन्धेन कृतिविशिष्टप्रागभावत्वेन प्रतिबन्धकत्वकल्पने[2] प्रत्यक्षात्मकसि[द्]ध्यनन्तरमनुमितिवारणाय साध्यवत्तानिर्णयत्वेन सिद्धेः प्रतिबन्धकत्वकल्पने लाघवात् । एवं सामग्र्यप्रतिबन्धकत्वे यत्र भाविवह्निमत्ताज्ञानमप्रमेत्यप्रामाण्यग्रहोत्तरं तादृशप्रत्यक्षोत्पत्तिस्तत्र तदानीमनुमित्यापत्तिः, अप्रामाण्यज्ञानास्कन्दिततादृशनिर्णयानन्तरमनुमित्युपपत्तयेऽप्रामाण्यज्ञानास्कन्दिततादृशनिर्णयाभावत्वेनैव हेतुताया वाच्यत्वादुक्तस्थले च तादृशविशिष्टाभावस्य कार्यकाले सत्त्वादित्यधिकमन्यत्रानुसन्धेयम् ।

१. ले० टि० कालिकेन ।

२. ले० टि० तदपेक्षया लाघवान्निर्णयत्वनिवेश एव सम्यगिति भावः ।

**प्राभाकरास्तु** सिद्धिकालेऽनुमितिस्वीकारेऽसति विरहादनुमितौ सि[द्]ध्यभाव-हेतुत्वे मानाभाव इत्याहुः।

**अत्र केचित्**—एतन्मत उत्पन्नानुमितिव्यक्तीनां पुनरुत्पादवारणाय तदनुमितिं प्रति तत्तत्प्रागभावव्यक्तीनां हेतुत्वकल्पने गौरवं सिद्धेः प्रतिबन्धकत्वे तु सामान्य-सामग्रीविरहादेवोत्पत्त्यसम्भवात्। न च तत्तद्व्यक्तेस्तदुत्पत्तिक्षण एवान्यात्मन्युत्पाद-वारणाय तत्तत्प्रागभावव्यक्तेर्हेतुत्वमावश्यकमिति वाच्यम्, तत्तत्प्रागभावस्य हेतुत्वेऽपि तदनुमितिपूर्वमनुमित्यन्तरोत्पादकाले तदनुमित्युत्पादवारणाय तदव्यवहितपूर्वक्षण-वृत्तिपरामर्शव्यक्तेर्हेतुताया आवश्यकत्वात्। अन्यत्र च तादृश[परा]मर्शव्यक्तिविर-हेणैव तदनुमितेरापत्त्यसम्भवात्। न च तत्परामर्शहेतुतया पुनरुत्पादोऽपि वारयितुं शक्यत इति वाच्यम्[1], तत्परामर्शव्यक्तेस्तदव्यवहितोत्तरक्षणोत्पन्नानुमितिकालेऽपि सत्त्वात्। तदव्यवहितोत्तरक्षणेऽनुमित्यापत्तेस्तावता वारणासम्भवात्। न चानुमिति-द्वयं जायतामित्याकारिकानुमित्साकाल उत्पन्नपुनरुत्पादः सिद्धेः प्रतिबन्धकत्ववादिनो दुं(दु)र्वार इति वाच्यम्, तत्प्रागभावव्यक्तिहेतुतायाः सिद्धिप्रतिबन्धकतावादिनो(ना)ऽपि कल्पनीयत्वात्। एवमपि तादृशेच्छाशून्यकालीनसहस्रस्थले तद्धेतुत्वाकल्पनेन लाघव-स्यापरी(रि)हारात्।

**अथ** सामग्र्य[व्य]वहितोत्तरक्षणः कार्याधिकरण इत्येव नियमो न त्वसौ कार्योत्प-[त्त्य]धिकरण इति नियमोऽपि। तथा च तदनुमितिद्वितीयक्षणस्य तदुत्पत्त्यधिकरणत्व आपादकाभावः। तदधिकरणत्व इष्टापत्तिः। तदनुमितितृतीयक्ष[ण]श्च न तत्परामर्श-व्यवहितत्तोरक्षण इति तत्र तदधिकरणत्वस्यापादकाभाव इति चेत्? यत्रापेक्षाबु[द्]-ध्यात्मकपरामर्शद्वितीयक्षणोऽनुमित्युत्पादस्तत्र का गतिः।

अथोत्पन्नानां पदार्थान्तराणां पुनरुत्पादवारणाय तादात्म्यसम्बन्धेन जन्यत्वा-वच्छिन्नं प्रति प्रतियोगितासम्बन्धेन प्रागभावत्वेन कारणताकल्पनस्यावश्यकतया तत एवोत्पन्नानुमितिव्यक्तीनामपि पुनरुत्पादवारणसम्भवात् सि[द्]ध्यभावहेतुत्वकल्पनमन-र्थकम्। न च ता[दा]त्म्यस्य कार्यतावच्छेदकत्वे कारणतावच्छेदकत्वमेव नोपपद्यते, कारणतायाः कार्यतावच्छेदकसम्बन्धेन कार्यसम्बन्धिनि स्वाव्यवहितपूर्वक्षणावच्छेदेन वर्तते योऽभावस्तत्प्रतियोगितानवच्छेदकधर्मावच्छिन्नत्वरूपव्यापकत्वघटितत्वात्। प्रकृते च तादात्म्येन कार्यसम्बन्धिनि स्वस्मिन् स्वाव्यवहितपूर्वक्षणावच्छेदेन वर्तमानस्याभाव-स्याप्रसिध्या[2] तादृशव्यापकत्वाप्रसिद्धेरिति वाच्यम्, स्वसामानाधिकरण्यस्वाव्यवहितोत्त-

---

१. ले० टि० तथा च सिद्धेरप्रतिबन्धकत्ववादिमतेऽपि प्रागभावस्य हेतुत्वं मास्त्विति शङ्काशयः।

२. ले० टि० अवच्छेद्याधिकरणसम्बन्धित्वाभावात्।

रक्षणोत्पत्तिकत्वोभयसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताककार्यनिष्ठभेदप्रतियोगितावच्छेदकतानवच्छेदकधर्मावच्छिन्नत्वरूपव्यापकताया एव कारणताघटकत्वात्। प्रकृते च तादृशव्यापकत्वस्याक्षततयाऽनुपपत्त्यभावात्। न च तादृशव्यापकतायाः कारणताघटकत्वेऽनुमित्यादिकं प्रति परामर्शाभावत्वादिनाऽपि हेतुताप्रसङ्गः, निखिलानामेवानुमित्यादीनां तादृशोभयसम्बन्धेन परामर्शाद्यभाववत्तया तादृशोभयसम्बन्धेन तद्वद्भेदस्यानुमित्यादावसत्त्वादिति वाच्यम्, अत्यन्ताभावहेतुतायां पूर्वोपदर्शितव्यापकताया एव निवेशनीयत्वादिति चेत्, न, तादात्म्यसम्बन्धेन जन्यत्वावच्छिन्नं प्रति प्रतियोगितासम्बन्धेन प्रागभावस्य हेतुत्वेऽपि सं(स)मवायादिसम्बन्धेन कार्योत्पादकसामग्रीबलात्समवायादिना तद्व्यक्तेः पुनरुत्पादस्य वारयितुमशक्यत्वात्। न च तादात्म्यादिसम्बन्धेन कार्योत्पादकसामग्रीसमवहिताया एव समवायादिना कार्योत्पादकसामग्र्याः कार्योत्पादक(क ?)प्रयोजकत्वान्नापत्तिस्तदानीं तादात्म्यसम्बन्धेन कार्योत्पादकोपदर्शितसामग्रीविरहादिति वाच्यम्, उपदर्शितसामग्र्या अपि तदानीं व्यक्त्यन्तरेष्वेव सत्त्वात्। सामग्रीव्याप्तावेकसम्बन्धेन कार्योत्पादकसामग्र्यामेककालीनत्वसम्बन्धेनैवापरसामग्र्या वैशिष्ट्यस्य निवेशात्। प्रकृतस्थले तादृशसम्बन्धेन तथाविधसामग्रीविशिष्टायाः समवायादिना कार्योत्पादकसामग्र्या अक्षततयाऽऽपत्तेर्दुर्वारत्वात्। तस्मात्प्रागभावस्य तत्तद्व्यक्तित्वेनैव पुनरुत्पादवारणाय हेतुता कल्पनीया। तथा च सिद्धेः प्रतिबन्धकत्वमत उपदर्शितलाघवमस्त्येवेत्याहुः।

अत्रैतादृशयुक्त्या वरं साध्यानुमितित्वेनैव प्रतिबन्धकत्वमायातु प्रत्यक्षादिसाधारणसाध्यनिर्णयत्वेन प्रतिबन्धकत्वं तु निष्प्रा(प्र)माणकमिति चिन्तनीयम्।

अन्ये तु सिद्धेः प्रतिबन्धकत्वं नाधिकं येन सिद्धिप्रतिबन्धकतामते गौरवमाशङ्कनीयम्; किन्तु पर्वतो वह्न्यभाववानिति विशिष्टबुद्धौ पर्वतो वह्निमानिति निर्णयस्य बाधमुद्रया[1] प्रतिबन्धकत्वे कल्पनीय इच्छारूपोत्तेजकस्य हेतुतामते विषयताभिश्रिततादृशनिर्णयवदन्यत्वमेव कार्यतावच्छेदकं वाच्यम्, तच्च पर्वतो वह्निमानित्येतादृशानुमितिसाधारणमपीति तादृशप्रतिबन्धकतयैवोपपत्तेः। न चैवमपि सिद्धिकालेऽनुमित्सासत्त्वे यादृशसामग्रीबलादनुमितिस्तादृशसामग्रीबलादनुमित्सां विनैवानुमित्यापत्तिवारणाय तत्स्थलीयानुमितावनुमित्साया हेतुत्वकल्पनमधिकमिति वाच्यम्, अनुमित्साविशिष्टज्ञानेऽनुमित्साया हेतुत्वेऽनुमितिं प्रति विरोधिसामग्रीप्रतिबन्धकतायामिच्छाया उत्तेजकत्वानभ्युपगमेन लाघवात्। न चानुमितिं प्रति समानविषयकप्रत्यक्षसामग्र्येव विरोधिनी। तत्र चानुमितित्वप्रकारकेच्छाया उत्तेजकत्वं तथाविधसामग्रीकालीनज्ञाने तथाविधेच्छायाः पृथक्कारणत्वं वाच्यम्, अन्यथा शाब्दान्यज्ञानं जायतामित्येतादृशेच्छाबलात् प्रत्यक्षादिसामग्रीकालेऽनुमित्यापत्तेः। तथा च सिद्धिकालीनानुमितावनुमितिसामान्य-

---

१. तदभाववत्तामुद्रया॥

विषयकेच्छासामान्यस्य हेतुत्वाधिक्याद्गौरवमिति वाच्यम्, भिन्नविषयकप्रत्यक्षादिसामग्र्या अपीच्छाविशिष्टाया अनुमितिविरोधितयाऽनुमितिविषयकेच्छाविशिष्टानुमितौ तादृशेच्छात्वेन हेतुत्वकल्पने तदैवानुमित्साया उत्तेजकत्वाकल्पनेन लाघवात्। तदकल्पन इच्छाविशिष्टघटादिप्रत्यक्षसामग्रीकाले विनैवानुमितित्वप्रकारिकामिच्छां शाब्दान्यज्ञानं जायतामितीच्छासत्त्व इव तदसत्त्वेऽपि वह्न्यनुमित्यापत्तेर्वारणायेच्छाया उत्तेजकत्वस्यावश्यकत्वात्। अनुमितिविषयकेच्छाघटितसामग्रीव्याप्ताविच्छाविशिष्टभिन्नविषयकप्रत्यक्षादिसामग्र्यभावस्यैवा( व )निवेशः, न तु समानविषयकप्रत्यक्षसामग्र्यभावस्यापि। अतो न समानविषयकप्रत्यक्षादिसामग्रीकाले शाब्दान्यज्ञानं जायतामितीच्छाबलादनुमित्यापत्तिः।

अथानुमितिं प्रति सि[द्]ध्यभावादिहेतुताया अनाधिक्येऽपि सामग्रीप्रतिबन्धकतायां तन्निवेशाद् गौरवमस्त्येवेति चेत्, न, सामग्रीमदन्यज्ञानत्वावच्छिन्नं प्रति सामग्र्यभावत्वेन हेतुतामते सामग्रीप्रतिबन्धकतायामिच्छाभावस्येव सि[द्]ध्यभावस्यानिवेशे क्षतिविरहात्। न चैवमप्यापत्तिवारणायेच्छाया इव सिद्धिकालीनज्ञाने सिद्धि(द्धेः)हेतुत्वं कल्पनीयं तदेवाधिकमिति वाच्यम्, पर्वतो वह्निमानित्यादिसिद्धिविशिष्टज्ञाने तादृशसि[द्]ध्यादिहेतुताकल्पने पर्वतपक्षकवह्न्यभावानुमित्यादिसामग्रीप्रतिबन्धकतायां तथाविधबाधाभावानिवेशनेन लाघवात्तदाधिक्यस्य गौरवासम्पादकत्वादित्याहुः।

तदप्यसत्, सि[द्]ध्यभावादिहेतुतायामनाधिक्येऽपि परामर्शादिघटितसामग्रीव्याप्तौ तन्निवेशस्य निष्प्रयोज[न]कतायाः सिद्धिकालेऽप्यनुमित्युत्पादप्रयोजकसामग्र्या अक्षतत्वात्तदानीमनुमितिवारणासम्भवात्।

वस्तुतस्तु सि[द्]ध्यभावहेतुताया अनाधिक्येऽपि सिद्धिकालीनानामनुमितिर्जायतामित्याकारकविषयामिश्रितेच्छानां तद्व्यक्तित्वेनानुमितिहेतुत्वकल्पनाया आधिक्यं दुष्परिहरमेव। न च तादृशेच्छायां विरोधिसामग्रीकालीनानुमितावनुगतरूपेण हेतुतायाः क्लृप्तत्वात्सिद्धिकालीनानुमितेरपि तादृशेच्छाविशिष्टत्वरूपतज्जन्यतावच्छेदकाक्रान्ततया सिद्धिकालीनज्ञाने तासां तत्तद्व्यक्तित्वेन हेतुत्वकल्पनं निष्फलमिति वाच्यम्, सिद्धिकालेऽन्यानुमितिसामग्रीसत्त्वे तादृशेच्छायां सत्यां त्वन्मते वह्न्याद्यनुमित्यनुदयात्तद्वारणायानुगतरूपावच्छिन्नतादृशेच्छाघटितसामग्रीव्याप्तौ सि[द्]ध्यभावनिवेशस्यावश्यकतयानुमितिसामग्रीशून्यकालेऽपि सिद्धिसत्त्वेऽपि तादृशसामग्र्या असत्त्वेन तदानीमनुमितिनिर्वाहाय तदानीन्तनतादृशेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेन हेतुत्वं कल्पयित्वा सि[द्]ध्यभावं निवेश्य तत्तद्व्यक्तित्वावच्छिन्नघटितसामग्र्याः पृथग्व्याप्तिस्वीकारस्यावश्यकत्वात्।

केचित्तु अनुमितिं प्रति पक्षताया हेतुत्वे सिद्धिकालीनाप्रामाण्यग्रहव्यक्त्यभावानां परामर्शहेतुतायामनिवेशाल्लाघवम्। तदानीं सिद्धरूपप्रतिबन्धकसत्त्वेनैवानु[मि]तिवारणसम्भवादित्याहुः।

तदसत्, तन्मते सिद्धावप्रामाण्यग्रहसत्त्वेऽनुमित्युपपत्तये सिद्धिप्रतिबन्धकतायां तादृशाप्रामाण्यग्रहव्यक्तीनामुत्तेजकत्वे तौल्यात्।

अन्ये त्वनुमितिं प्रति पक्षताया हेतुत्वे पर्वतो वह्निमानित्येतादृशानुमितौ वह्निमान् पर्वतो घटवान्वह्निमत्पर्वतवानयं देश इत्याद्याकारकविशिष्टवैशिष्ट्यबोधात्मकप्रत्यक्षादि-सामग्रीणां प्रतिबन्धकत्वाकल्पनेन लाघवम्। तादृशसामग्रीकाले विशेष्यतावच्छेदकादि-प्रकारकनिर्णयात्मकस्य पर्वतो वह्निमानित्यादिनिर्णयस्यावश्यकत्वात्पक्षताया असत्त्वे-नैवानुमितिवारणसम्भवात्। न च मन्मतेऽपि तादृशसामग्र्याः पृथक् प्रतिबन्धकत्वं नास्ति तादृशसामग्रीकाल एकत्र द्वयमिति रीत्या तादृशबोधस्य सामग्रीसत्त्वेन तत्प्रति-बन्धकतयैवोपपत्तेरिति वाच्यम्, एकत्र द्वयमिति रीत्या तादृशप्रत्यक्षसामग्रीणामेकत्र द्वय-मिति रीत्या तादृशबोधो जायतामित्याकारकेच्छावैशिष्ट्यं निवेश्यैव प्रतिबन्धकतायाः क्लृप्तत्वात्तादृशप्रतिबन्धकतया विशिष्टवैशिष्ट्यबोधविशिष्टत्वप्रकारकेच्छाविशिष्ट-वैशिष्ट्यबोधसामग्रीकालेऽनुमितिवारणासम्भवात्। तादृशेच्छावैशिष्ट्यं निवेश्य तथा-विधसामग्र्याः प्रतिबन्धकल्प(ल्प ?)त्वान्तरकल्पनाया आवश्यकत्वात्। न च वह्निमान् पर्वतो घटवानित्यादिप्रत्यक्षस्य पर्वतो वह्निमानित्याकारकानुमितिसमानविषयकतये-च्छावैशिष्ट्यमनिवेश्यैवैकत्र द्वयमिति रीत्या तादृशबोधस्य सामग्र्याः प्रतिबन्धकत्वकल्प-नाद्विशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छाविशिष्टतादृशबोधसामग्रीकालेऽपि तथाविधप्रति-बन्धकत्वमावश्यकमिति वाच्यम्, तथाविधमानससामग्रीप्रतिबन्धकतायामिच्छानिवेश-स्यावश्यकतया विशिष्टवैशिष्ट्यबोधेच्छाविशिष्टतादृशमानससामग्रीप्रतिबन्धकताधिक्य-स्यावश्यकत्वात्। न चैकत्र द्वयमिति रीत्या बोधो जायतामित्याकारकेच्छाया विशिष्ट-वैशिष्ट्यबोधत्वप्रकारकेच्छासाधारणरूपेणैवैकत्र द्वयमिति रीत्या तादृशबोधसामग्री-प्रतिबन्धकतायां निवेशात्तादृशप्रतिबन्धकतयैवोपपत्तिरिति वाच्यम्, तथा सति तादृश-विशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छाकाले विशि(शे,ष्यतावच्छेदकप्रकारकज्ञानाद्यसत्त्वेऽ-प्यनुदयप्रसङ्गात्।

अन्यसाध्यकान्यपक्षकानुमितिस्थलीयतादृशविशिष्टवैशिष्ट्यबोधसामग्रीप्रतिबन्ध-कतयैवोपपत्तिरित्यपि न, इच्छाविशेषोत्तेजकत्वानुरोधेन पृथक् प्रतिबन्धकताया आवश्यकत्वात्।

सि[द्]ध्यभावहेतुतामतेऽनुमितिसामग्रीप्रतिबन्धकतायां सि[द्]ध्यभावनिवेशेन गौरवात्तादृशविशिष्टवैशिष्ट्यबोधसामग्रीप्रतिबन्धकत्वकल्पनमेवोचितमित्यपि न, सामग्री-प्रतिबन्धकत्वमतेऽपि तादृशसामग्रीकाले परामर्शादिसत्त्वे घटादिप्रत्यक्षोपपत्तयेऽनु-मितिसामग्रीप्रतिबन्धकतायां तादृशसामग्र्यभावस्य निवेशनीयतया विपरीतगौरवात्। तदानीं घटादिप्रत्यक्षं नोपेयत इति चेत्, तर्हि परामर्शादिसत्त्वे सिद्धिकालेऽपि घटादिप्रत्य-

क्षानभ्युपगमसम्भवेन सिद्धिप्रतिबन्धकतामतेऽपि सामग्रीप्रतिबन्धकतायां तदभावानिवेश-सम्भवात् ।

न च घटादिगोचरशाब्दबोधादिकं प्रत्यनुमितिसामग्रीसिद्ध्यभावनिवेशस्याधिक्याद् गौरवं नैयायिकमते । विशिष्टवैशिष्ट्यावगाहिमानससामग्रीसत्त्वे प्रतिबन्धकतायां शाब्दबोधाद्यनुदयेन मन्मतेऽपि (अपि ?) तादृशसामग्र्यभावनिवेशेन प्रयुक्तगौरवाभावादिति वाच्यम् । तादृशस्थाने नैयायिकमते सि[द्]ध्यभावनिवेशस्याधिक्येऽपि प्रत्यक्षस्थलीयप्रतिबन्धकतायां पर्वतो वह्निमानित्येतादृशैकविधसि[द्]ध्यभावस्थलाभिषिक्तानां वह्निमान् पर्वतो घटवान्वह्निमान्पर्वतः घटवानित्याका[रका]नन्तविशिष्टवैशिष्ट्यबोधसामग्र्यभावानां निवेशेन भवन्मते महागौरवात् । तस्मादनुमितौ पक्षताहेतुत्वमेव सम्यगित्याहुः ।

तदप्यसत्—वह्निप्रकारकपर्वतविशेष्यकज्ञानं जायतामित्येतादृशेच्छाकाले सिद्धिसत्त्वेऽनुमित्युदयेन तादृशेच्छायाः प्रतिबन्धकतायामुत्तेजकत्वाद्वह्निमान्पर्वतो घटवानित्यादिविशिष्टवैशिष्ट्यबोधसामग्रीकाले[1] तथाविधानुमित्यापत्तिवारणायानुमितित्वप्रकारकेच्छामुत्तेजकीकृत्य तादृशसामाग्र्याः पृथक् प्रतिबन्धकत्वस्यावश्यकत्वात् । न च तत्रानुमितिरिष्टा, तादृशविशिष्टवैशिष्ट्यबोधोत्पत्तेरपि तादृशेच्छाविषयसिद्धेस्तदानीं तस्यैवोत्पादात् । न च वह्निप्रकारकपर्वतविशेष्यकज्ञानं जायतामित्याकारकेच्छाकाले सिद्धिसत्त्वे पर्वतो वह्निमानित्येतादृशमानसोत्पत्त्यैव तादृशेच्छाविषयसि[द्]ध्यानुमित्यनुत्पादात् सिद्धिप्रतिबन्धकतायां तादृशेच्छाया उत्तेजकत्वमेव नास्तीति वाच्यम्, तादृशस्थले घटानुमितिसामग्रीसत्त्वे तथाविधमानसोत्पत्त्यसम्भवेन तादृशेच्छाविषयसि[द्]ध्यर्थं वह्न्यनुमित्युत्पादस्यावश्यकत्वात् । न च तादृशेच्छानां सिद्धौ तत्तद्व्यक्तित्वेनैवोत्तेजकत्वमुपगम्यतेऽतो नोपदर्शितविशिष्टवैशिष्ट्यबोधसामग्रीकाले तथाविधेच्छाबलादनुमित्यापत्तिरिति वाच्यम्, तथा सति तत्तद्व्यक्तित्वेन तादृशेच्छासहस्रमुत्तेजकीकृत्य सिद्धिप्रतिबन्धकत्वे गौरवात् [2]सामग्रीप्रतिबन्धकत्वकल्पस्यैवोचितत्वात् तत्र तादृशेच्छानामुत्तेजकत्वादिति ।

एवं सि[द्]ध्यभावस्यानुमितिहेतुत्वे भिन्नविषयकप्रत्यक्षादिकं प्रति वह्निव्याप्यधूमविशिष्टपर्वतत्वाद्यवच्छिन्नपक्षकवह्न्यनुमितिसामग्र्यादीनां प्रतिबन्धकत्वकल्पनस्याधिक्याद्गौरवम् । मन्मते तादृशानुमितिसामग्रीकाले शुद्धपर्वतत्वावच्छिन्नविशे[ष्य]कवह्न्यनुमितिसामग्र्या नियमतः सत्त्वात्तत्प्रतिबन्ध[क]तयैवोपपत्तेः । तादृशसामग्र्याः पृथक् प्रतिबन्धकत्वाकल्पनात् ।

---

१. ले० टि० वह्निप्रकारकपर्वतविशेष्यकज्ञानविषयकेच्छासत्त्वेऽस्य(तत्र इत्य)पि बोध्यम् ।
२. ले० टि० पूर्वोक्तविशिष्टवैशिष्ट्यधीसामग्री ।

[1]न च भवन्मतेऽपि तादृशसामग्र्याः शुद्धपर्वतत्वावच्छिन्नपक्षकानुमितिसामग्री-नैयत्यं पर्वतो वह्निमानित्येतादृशसि[द्]ध्यभावस्य [2]तादृशानुमितिघटकतया[3]तादृश-सिद्धिकाले शुद्धपर्वतत्वावच्छिन्नपक्षकानुमितिसामग्र्या असत्त्वात् । तादृशसिद्धेरधिक-विषयिणीं वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नपक्षकानुमितिं प्रत्यविरोधितया तादृशानुमितिसामग्र्यास्तत्रापि सत्त्वात् । एवं भवन्मते पक्षतावच्छेदकावच्छेदेन हेतु-प्रकारकशुद्धसंयोगघटितव्यापकत्वावगाहिपरामर्शघटितानुमितिसामग्र्याः प्रत्यक्षादिकं प्रति प्रतिबन्धकताद्वयं कल्प्यं सि[द्]ध्यभावनिवेशानुरोधात्तादृशपरामर्शकाले सामाना-धिकरण्येन बाधबुद्धिसत्त्वे सत्याञ्च सामानाधिकरण्येन सिद्धाववच्छेदकत्वावगाहिन्याः सामानाधिकरण्यमात्रावगाहिन्याश्चानुमितेरनुत्पत्त्या प्रत्यक्षादीनामेवोत्पत्त्या तत्र व्यभि-चारवारणाय तथाविधसि[द्]ध्यभावस्तादृश[परा]मर्शघटितसामग्रीप्रतिबन्धकतायां निवेशनीयः । एवञ्च तादृशसिद्धिकाले बाधबुद्धावसत्यां प्रत्यक्षादिवारणाय तादृश-सि[द्]ध्यभावमनिवेश्य तथाविधबाधाभावं निवेश्य परं प्रतिबन्धकत्वं कल्पनीयम् । तत्र च प्रत्यक्षादिस्वीकारो न सम्भवति, अवच्छेदकावच्छेदेनानुमितेः सामग्रीसत्त्वात्ता-दृशानुमितेरेवोत्पत्तेः । मया तु सि[द्]ध्यभावतादृशबाधाभावावनिवेश्य तादृश[परा]-मर्शघटितसामग्र्या एकमेव प्रतिबन्धकत्वं कल्प्यत इति । एवं लाघवज्ञानजन्यायां पर्वतो महानसोयवह्निमानित्याकारकानुमितौ पर्वतो वह्निमानित्येतादृशसिद्धेरविरोधित्वमते वह्नेर्महानसोयत्वे लाघवमित्यादिलाघवज्ञानघटितशुद्धवह्नित्वावच्छिन्ननिरूपितव्याप्त्य-वगाहिपरामर्शघटितानु[मिति]सामग्र्याः प्रतिबन्धकत्वाधिक्याद् गौरवम् । तादृशलाघव-ज्ञानाघटिततादृशपरामर्शघटितसामग्रीप्रतिबन्धकतायां पर्वतो वह्निमानित्येतादृश-सि[द्]ध्यभावस्य निवेशनीयतया तत्प्रतिबन्धकत्वया तादृशसिद्धिघटिउ(टितो)पर्दाघत-लाघवज्ञानसहितशुद्धपरामर्शसत्त्वे प्रत्यक्षाद्यापत्तेर्दुर्वारत्वात् ।

यत्तु सिद्धेरप्रतिबन्धकत्वमते साध्यतावच्छेदकसम्बन्धेन वह्निहेतुकपरामर्शस्य वह्न्यनुमितिं प्रति हेतुत्वकल्पने गौरवम् । मन्मते तु तत्र सिद्धेर्नियमतः सत्त्वेनानुमितेर-प्रामाणिकतया न तादृशपरामर्शस्यानुमितित्व(त्व ?)हेतुत्वकल्पनमिति ।

तन्न, सिद्धिप्रतिबन्धकत्वमतेऽपि सिसा(षा)धयिषाकाले तादृशपरामर्शादनुमितेः प्रामाणिकतया तद्धेतुत्वकल्पनस्यावश्यकत्वात् ।

अथैवमपि भिन्नविषयकप्रत्यक्षादिकं प्रति प्रत्यक्षादिगोचरेच्छाविरहविशिष्टाया-स्तद्धेतुकपरामर्शघटितानुमितिसामग्र्याः प्रतिबन्धकत्वाकल्पनेन लाघवम्, तादृश-परामर्शकालेऽसत्यामनुमित्सायां मन्मते प्रत्यक्षादेरेवोत्पादात् । सत्याञ्चानुमित्सायां

१. ले० टि० नैयायिकमते समनैयत्यं नास्तीत्याह ।

२. ले० टि० शुद्धपर्वतत्वावच्छिन्नपक्षक० ।

३. ले० टि० तत्सामग्रीघटकतया ।

तद्विशिष्टानुमितिसामग्रीरूपप्रतिबन्धकसत्त्वेनैव तद्वारणसम्भवादिति चेत्, तर्हि भवन्मत इव मन्मतेऽपि तादृशपरामर्शाद्विनानुमित्सामनुमित्यनभ्युपगमेन प्रत्यक्षादिगोचरेच्छा-विरहविशिष्टायास्तद्धेतुकानुमितिसामग्र्याः प्रतिबन्धकत्वं न कल्प्यते। न च भवन्मते सिसा(षा)धयिषाशून्यकालेऽपि तादृशपरामर्शादनुमित्युत्पादे बाधविरहः सिद्धेरविरोधि-त्वादिति वाच्यम्, तादृशपरामर्शजन्यानुमितौ सिसा(षा)धयिषाहेतुत्वोपगमात्तदभाव-स्यैव बाधकत्वात्। एवमपि सिद्धिप्रतिबन्धकत्वकल्पनापेक्षया लाघवानपायात्[1]। साध्यवदन्यावृत्तित्वरूपव्याप्तिज्ञानहेतुतामते हेतुभेदेन सामग्र्याः प्रतिबन्धकताया भेदा-भावादुपदर्शितगौरवस्यानवकाशाच्चेति।

लिङ्गोपहितलैङ्गिकभानकल्पे तु सिद्धिप्रतिबन्धकत्वकल्पनमावश्यकमेव। अन्यथा निखिलानुमितीनामेव परामर्शरूपतयाऽ[2]नुमितिकालेऽनुमितिसामग्र्या अवश्यं सत्त्वात्। यत्किञ्चिद्गोचरानुमितौ सत्यां तदुत्तरं दिग्भ्रमादिपर्यन्तं ज्ञानान्तरानुत्पाद-प्रसङ्गात् तस्य चानुभवविरुद्धत्वादित्यवधेयम्।

॥ इति श्रीरघुदेवन्यायालङ्कारभट्टाचार्यविरचितः
पक्षतावादः समाप्तिमगमत्।



१. पञ्चमी पूर्वपक्षव्याप्तिः।

२. तन्मते साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारिकानुमितेः स्वीकारात्।

परिशिष्टम्

## ग्रन्थे समुद्धृताः केचन सिद्धान्ताः

| क्र० सं० | पृ० सं० | पङ्क्ति-सं० |
|---|---|---|
| १. उभयं प्रत्येकानतिरिक्तम् | १ | १२ |
| २. सामानाधिकरण्यमात्रावगाहिसिद्धिदशायामवच्छेद-कावच्छेदेनानुमितिरप्युपपन्ना | ३ | १८ |
| ३. उत्तेजकाननुगमस्यादोषत्वम् | ६ | ६ |
| ४. स्वत्वाननुगमः | ६ | २१ |
| ५. समूहालम्बने प्रकारताभेदेन विशेष्यताभेदः | ७ | ३ |
| ६. उभयलिङ्गकानुमित्सायामनुमितिनिष्ठ-विशेष्यताभेदः | ८ | ४ |
| ७. योग्यात्मविशेषगुणानां युगपदनुत्पत्तिः | ८ | ८ |
| ८. भिन्नविषयकप्रत्यक्षादिकं प्रत्यनुमितिसामग्री-प्रतिबन्धिका | ९ | ३ |
| ९. अनुमितिं प्रत्यन्यलिङ्गकेच्छाया अप्रतिबन्धकत्वम् | ९ | ५ |
| १०. विरोधिसामग्र्यां साधारणरूपेणैवेच्छाया उत्तेजकत्वम् | ९ | ९ |
| ११. लिङ्गभेदेन सामग्रीप्रतिबन्धकतावच्छेदकाभेदः | ९ | ९ |
| १२. तल्लिङ्गकानुमितौ तत्तल्लिङ्गकेच्छाविरहविशिष्ट-सिद्धिः प्रतिबन्धिका | ९ | २२ |
| १३. सिद्धिप्रतिबन्धकतायां तत्साध्यकानुमिततदन्य-साध्यकानुमितिगोचरेच्छासाधारणरूपेणैवेच्छाया उत्तेजकत्वम् | ९ | २७ |
| १४. ज्ञानेच्छायौगपद्यस्वीकारः ( नवीनैः ) | १० | १६ |
| १५. इच्छासामग्र्या अनुमितिप्रतिबन्धकत्वं नास्ति | १० | १६ |
| १६. उभयादिलिङ्गकानुमितिं प्रत्युभयलिङ्गकत्वादि-प्रकारकेच्छाविरहविशिष्टसिद्ध्यभावो हेतुः | ११ | ५ |
| १७. साधारणोक्तिरकिञ्चित्करी | १३ | १३ |

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या | |
|---|---|---|---|---|
| सत्स्वपि | सत्यपि | १ | २ | (भूमिकायाम्) |
| तत्त्वत्वा | तद्वत्त्वा | १ | १४ | ( भू० ) |
| ष्ठा न वा, | ष्ठाभाव | ३ | ३+४ | ( भू० ) |
| प्रमथा | प्रथमा | ३ | १४ | (भू० ) |
| मिते | मिमते | ३ | २४ | ( भू० ) |
| नेना | ने ना | ३ | २४ | ( भू० ) |
| द्वा ( त्वा ? ) | द्वात्वा ( त्वा ? ) | २ | २ | |
| दके | दकके | २ | ११ | (टिप्पण्याम्) |
| मन्थे | मग्रन्थे | २ | १४ | ( टि० ) |
| तदु | तस्यो | ४ | २ | ( टि० ) |
| प्रमेय | प्रमेयत्व | ४ | १३ | ( टि० ) |
| सि( द् ) | सि[ द् ] | ६ | २४ | |
| ,, | ,, | ६ | ३० | |
| रकता | रता | ७ | ४ | |
| ष्ट ( ष्ट ) | ष्ठ ( ष्ट ) | ८ | १२ | |
| लोक | लोक | ८ | ६ | ( टि० ) |
| पृ. १८ | पृ. १० | ८ | १० | ( टि० ) |
| द्यप्र | द्यानभ्युपगमप्र | ८ | ११ | ( टि० ) |
| देव: | देव:, पृ. सं० १६ | ८ | १३ | ( टि० ) |
| यत्व | यकत्व | १० | १८ | |
| नेव | नैवे | ११ | ४ | |
| नेन | नने | ११ | ३२ | |
| त्वात्[१] | त्वात्[२] | १२ | ३० | |

| | | | |
|---|---|---|---|
| तर इ | तरभेद इ | १८ | १३ |
| तिर | तेर | १९ | २ |
| सिद्ध | सिद्धि | २२ | १६ |
| ,, | ,, | २२ | २३ |
| ,, | ,, | २२ | २६ |
| ऽक्षति | क्षति | २४ | १ |
| रिका | रका | २४ | १२ |
| क्षणो | क्षणे | २४ | २० |
| सिद्ध | सिद्धि | २६ | ३१ |
| शेन | शन | २८ | ५ |
| स्थाने | स्थले | २८ | ६ |

पञ्जीकरणसंख्या—६९८१/५७

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. वास्तुसौख्यम्—श्रीटोडरमल्लविरचितं ज्योतिषशास्त्रस्य वास्तुसम्बन्धिग्रन्थमिदम् आचार्यश्रीकमलाकान्तशुक्लकृतया हिन्दी-व्याख्यया समलङ्कृत्य प्रकाशितम्—१२०-००

२. सङ्ग्रहशिरोमणि: —ज्योतिषशास्त्रस्यापूर्वोऽयं सङ्ग्रहग्रन्थ आचार्यश्रीकमलाकान्तशुक्लप्रणीतया हिन्दी-व्याख्यया समलङ्कृत्य प्रकाशित: — प्रथमो भाग: २५०-००

३. काशीखण्ड: —महर्षिव्यासप्रणीत: स्कन्दपुराणान्तर्गतोऽयं ग्रन्थ आचार्यश्रीरामानन्दकृतया 'रामानन्दी'-संस्कृतव्याख्यया, अथ च पण्डितश्रीनारायणपतित्रिपाठिकृतया 'नारायणी'-हिन्दीव्याख्यया च समलङ्कृत्य प्रकाशित: —प्रथमो भाग २००-००
द्वितीयो भाग: २००-०० तृतीयो भाग: ३००-००

४. महाभारतसर्वस्वम्—महाभारतमाधारीकृत्य निरूपितोऽयं ग्रन्थ आचार्यश्रीकुबेरनाथशुक्लमहोदयै: स्वोपज्ञतया प्रणीत: — ४००-००

५. रामायण ककविन्—रामचरितवर्णनात्मकोऽयं काव्यग्रन्थ: जावीलिपितो देवनागर्यां लिप्यन्तरीकृत्य अभिराज-डॉ० राजेन्द्रमिश्रकृतेन हिन्दीभाषानुवादेन समलङ्कृत्य प्रकाशित: — ३००-००

६. शिवमहिम्न: स्तोत्रम् (द्वितीयं संस्करणम्) —स्तोत्रमिदं 'मधुसूदनी', 'नारायणी'-प्रभृतिभि: संस्कृतटीकाभि:, अथ च हिन्दीपद्यानुवाद-हिन्दीव्याख्यादिभि: सनाथीकृत्य प्रकाशितम् — १००-००

७. सौन्दर्यदर्शनविमर्श: —सौन्दर्यशास्त्रस्यापूर्वोऽयं ग्रन्थ आचार्यश्रीगोविन्दचन्द्रपाण्डेयमहोदयै: प्रणीत:। ग्रन्थेऽस्मिन् सौन्दर्यशास्त्रस्येतिहासपरतन्त्रता, नानायुगवितति-काव्यशिल्पसङ्गीतादिव्यापकरूपकल्पनाभेदप्रदर्शनपुरस्सरं रूपधर्मनिरूणादिविषया: सम्यक् समालोचिता: — ९०-००

८. भास्करराय भारती दीक्षित—व्यक्तित्व एवं कृतित्व —तन्त्रशास्त्रस्यापूर्वोऽयं ग्रन्थ आचार्यश्रीवटुकनाथशास्त्रिखिस्तेमहोदयै: प्रणीत:। ग्रन्थेऽस्मिन् भास्कररायभारतीदीक्षितस्य जीवनचरितं कृतयश्च हिन्दीभाषया सम्यगालोचिता:—३००-००

९. उत्तरषट्कम् —तन्त्रशास्त्रस्य मूर्द्धन्योऽयं ग्रन्थ: सरस्वतीभवनस्थपाण्डुलिपीनाधारीकृत्य पाठभेदानालोच्य सर्वप्रथमं सुसम्पाद्य 'कुलदीपिका'-व्याख्यया चालङ्कृत्य प्रकाशित: — ८०-००

१०. विश्व-दृष्टि—डॉ० सम्पूर्णानन्द स्मृति-ग्रन्थ—ग्रन्थोऽयं वेद-व्याकरण-धर्मशास्त्र-दर्शन-ज्योतिष-इतिहास-राजनीति-साहित्यप्रभृतिविषयसम्बद्धान् निबन्धान् सङ्कलय्य सुसम्पाद्य च भागद्वयात्मक: प्रकाशित: — ३५०-००

११. डॉ० सम्पूर्णानन्द—जीवन एवं चिन्तन--ग्रन्थरत्नेऽस्मिन् डॉ० सम्पूर्णानन्दस्य समग्रं जीवनचरितं विवेचितम्, विचारा:, कृतयश्च निरूपिता: — ५०-००

१२. शाण्डिल्यसंहिता ( द्वितीयं संस्करणम्)—नारदपाञ्चरात्रसंहितास्वन्यतमायां श्रीशाण्डिल्यर्षिप्रणीतायां संहितायामस्यां जगत: प्रादुर्भाव:, भक्तिसम्प्रदाय:, आचरणीयाचार:, युगपरिमाणादिकञ्चकर्तव्याकर्तव्यधर्माधर्मादिविषया: सम्यग्रूपेण समालोचिता: — १३२-००

---

पत्रव्यवहारसङ्केत:—प्रकाशनाधिकारी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी—२२१००२